Kashmir Series of Texts and Studies.
No. LXV.

# THE
# ĪS'VARAPRATYABHIJÑĀ VIVRITIVIMARS'INĪ

BY

ABHINAVAGUPTA



EDITED
BY
PANḌIT MADHUSŪDAN KAUL SHĀSTRĪ,
Superintendent Research Department,
His Highness' Government,
JAMMU & KASHMIR,
SRINAGAR.

Published under the Authority of the Government of
His Highness Rājarājes'vara Mahārājādhirāja
S'ri MAHĀRĀJA HARISINGHJI BAHĀDUR,
G. C. S. I., G. C. I. E., K. C. V. O., LL. D.
MAHĀRĀJA OF JAMMU AND KASHMIR.
Volume III




BOMBAY:
PRINTED AT THE 'NIRNAYA SAGAR' PRESS.
1943, A. D.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो

लब्ध्वा यत्नेन सम्यक्स्फुटिमति गहनामीश्वराद्वयवादः ।

कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेशान्

देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्वसंवादधामा ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे

पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।

विमृशत शिवादिष्टाद्वैतावबोधसुधारसं

प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६५

# ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तविरचिता ।

श्रीराजराजेश्वर-महाराजाधिराज-काश्मीरनरेन्द्र-श्रीहरिसिंहजी-
बहादुराज्ञया

रिसर्च-कार्यालयाध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

**संपाद्य**

मुम्बय्यां 'निर्णयसागर'मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता ।

**( तृतीयो भागः )**




संवत् २०००. काश्मीर-श्रीनगर खैस्ताब्दः १९४३.

अनुभवविकल्पात्मना सन्तानवर्तीनि ज्ञानानि एव प्र
शन्ते, नतु एषामाश्रयः कश्चित् । स्मृतिश्च संस्कारत एव सि
ज्ञानं च यदि जडं, कस्य अर्थप्रकाशता । अजडं चेत्,
अस्य देशकालयोगात् भेदाः,—इत्यात्मनः कथमन्वयः सत्,—
पूर्वपक्षीकृतं तावत् । तत्र यद्दूषणीकृतम्—भिन्नानां संवेदन
न व्यवहाराङ्गता, न संस्कारमात्रात् स्मृतिः, ज्ञानं च अज
चितस्य एव संवेदनस्य स्वशक्तिनिर्भिन्नभेदोपरागमकुषितरूपं-
स्फिरिति, धर्म इति च उच्यते,—इति । अत एव हेतुकला
क्रियाविषयमपि प्रतिपक्षार्थितं प्रतिक्षिप्तम् । न केवलं ज्ञानवि
दूषणमिति अपिः । तथाहि यत् चोदितम्—एका क्रमिका च
क्रिया, आश्रयस्य च तद्योगे कथमेकस्वभावता, सम्बन्ध
द्विष्ठादिरूप एकः कथम्,—इति, तत्र इत्यात् सद्रूपः—एक
कस्वभावं कथं स्यात्,—इति । तत्र दर्पणस्य इव अनेकाभास
एकतामनपबाधमानो न विरोधमावहति,—इति वैकल्पिकाभा
भिज्ञाप्रत्यक्षप्रसाधितैकभावः पदार्थ आभाससारस्तथाभूता
विरुद्धानाकारान् स्वात्मनि उपगच्छन् हठादेव क्रमिकां
नाभासभेदानात्मनि अभिन्ने भासयन् क्रियाश्रयः,—इति यु
मेव । सम्बन्धादेरपि अयमेव सिद्धिप्रकारः । एवमेकस्य आ
यस्य समर्थनात् हेतोः क्रियाशक्तिचोद्यानि अपि प्रतिसमाहि
नि,—इति सूत्रार्थः । '**सर्वत्र**' इति बहिरन्तश्च । '**इच्छन्ति**' :
काणादाद्याः । '**इह तु**' इति आभाससारवस्तुवादे । प्रती
सारो हि यदि भावः, तत् प्रतीतिमुल्लङ्घ्य भेदेन कथं शपथैः
व्यवस्थाप्येतेति आकूतम् ॥ १ ॥

---

१ 'अजडत्वम्' ख. । २ 'अपि' ग. । ३ 'उक्ते' ग. । ४ 'विरुद्ध' ग. । ५ 'आशय' ग. ।

ननु क्रमिकत्वमेव क्रियायाः प्राणितम्। क्रमश्च कालानवच्छिन्ने भगवति कथं स्यात्। एतत् समाधत्ते सूत्रेण

**सक्रमत्वं च लौकिक्याः क्रियायाः कालशक्तितः।**
**घटते नतु शाश्वत्याः प्राभव्याः स्यात् प्रभोरिव ॥ २ ॥**

उत्क्षिपति अवक्षिपति हस्तमिति ये हस्तस्य पूर्वोत्तरे क्षणाः, ते तावत् क्रमवन्तः। तत्र केषांचित् ते एव क्षणाः क्रिया एका विभागसंयोगनिमित्तभूता, केषांचित् तद्धस्तगतोक्तरूपभेदसम्पादिका नित्यानुमेया अपि क्रमिककार्यबलात् क्रमिका एव अनुमीयत इति लौकिक्येव भेदविश्रान्ता क्रिया सक्रमा युज्यते आभासविच्छेदोत्थापकभगवत्स्वातन्त्र्यलक्षणया कालशक्त्या हेतुभूतया। प्रभोस्तु कालानवच्छिन्नत्वात् या क्रिया, सापि कालानवच्छिन्नैव प्रभुरिव शाश्वती सा यतः। एतदुक्तं भवति—लौकिकज्ञानव्यवहारमूलज्ञातृज्ञेयप्रकाशने सामर्थ्यं ज्ञानशक्तिर्देवस्य। तत्रैव संयोजनादिस्वतन्त्रतात्मा विमर्शशक्तिरेव वस्तुतः क्रिया। उक्तं च एतत्

'क्रिया च परवाग्वृत्त्यादिका.............।'

इत्यादिप्रदेशेषु। सा तु वेद्यच्छायाच्छुरणमच्छत्वादवच्छेदकमभ्युपयती क्रमवती भाति वस्तुतोऽक्रमत्वेऽपि,—इति सूत्रार्थः। वृत्तिविवृती स्पष्टे। **'कालग्रासादपि'** इति कालानवच्छेदात् तावदक्रमत्वं स्थितमेवेति। किमत्र उच्यते। उन्मिषितेऽपि वेद्यग्रामे मायाप्रमातृपदमपि अध्यासीनो भगवान् यावदेव बाह्यान्तररूपं वेद्यकुलं स्वात्मनि

'प्रकाशस्यात्मविश्रान्तिः...............।'

(अ०प्र०सि० २२)

'इदमित्यस्य विच्छिन्नविमर्शस्य............।'

(अ० प्र० सि० १५)

इत्यादिनयेन ग्रसते विश्रमयति, तावत् तन्निष्ठोऽवभासनक्रमोऽपि ग्रस्त एव,—इति अहमिति या संयोजनादिचित्रितसमस्तभावप्रकाशोपसंहारपर्यन्तदशाविशेषविमर्शलक्षणा क्रिया, सा निष्क्रमा एव ॥ २ ॥

ननु कोऽसौ कालः, यो भावानामवच्छेदक उच्यते। यो हि कैश्चित् नित्यद्रव्यविशेषात्मा उपगतः, स एकत्वात् संयोग[1]विशेषात् चित्राकारचिरक्षिप्रादिधीहेतुः कथम्। उपाधिबलात् तथाभिधाने ते एव उपाधयः सन्तु। किं तेन। गुणकर्मादेश्च तेन असंयुक्तस्य न कालावच्छेदो भवेत्,—इत्याशङ्क्य भगवत एव शक्तिः क्रममवभासयन्ती कालशक्तिः। तदवभास्यश्च मायाप्रमातृलग्न एव प्रधानतया भवन्नेतद्विषयीकरणीयभावनिष्ठः क्रम एव कालः,—इति दर्शयितुं सूत्रं

**कालः सूर्यादिसञ्चारस्तत्तत्पुष्पादिजन्म वा।**
**शीतोष्णे वाथ तल्लक्ष्यः क्रम एव स तत्त्वतः ॥ ३ ॥**

नियतपरिमाणं यत् प्रतिवर्तकादि तेन, कनकं मीयते; नच अत्र अनवस्था अन्योन्याश्रयो वा। तद्वत् प्रसिद्धपरिमाणया क्रियया अर्कोदयास्तमयमध्या चैत्रगमनम्। तदुच्यते—दिवसं चैत्रो गच्छतीति। आदित्यक्रिया अपि यदा परिमित्सिता भवति, तदा प्रसिद्धाभिर्नालिका[2]स्रुतिभिर्मीयते—त्रिंशतं नालिकाः सूर्यो दृश्यते इति। तेन यस्य यत्र यदा आभासवर्ग इयत्तया परिनिष्ठितश्चन्द्रसूर्यशीतोष्णकोकिलसंमदादेः, तस्य तत्र तदा स एव कालः। तेन सूर्यादिगतो यो नियतः स्वभावभेदः, स क्रमः; स एव

---

१ ग. 'संयोगः'। २ ग. 'नालिकाभिः'।

कालः । तेन सूर्यसञ्चारादिभिर्योऽन्यो लक्ष्यते प्रवहणधर्मा नवपुराणतादिरूपपरत्वापरत्वतद्वैचित्र्यतद्वाहुल्यादुपकल्पितयौगपद्येतरचिरशीघ्रताद्यसङ्कीर्णभावस्वभावोत्थापको वैशेषिकाणां द्रव्यरूपः, कापिलानां रजःस्वभावः प्रवर्तनात्मकत्वात्, वैयाकरणानां नित्यानाश्रितप्रवृत्तिस्वभावः, सौगतानां सन्तन्यमानभावैकपरमार्थः; सोऽपि वस्तुतः क्रमरूपतां न अतिक्रामतीति क्रम एव नाम बहिः कालः,—इति व्यवह्रियते । स्वप्नसङ्कल्पमायेन्द्रजालप्राये चेतनस्य[1] आभासवर्गे क्रमस्य इयत्तानियमो हरिश्चन्द्ररजनीवृत्तान्तक्रमस्य इव । तदत्र संविच्छक्तिरेव प्रतपति तन्निर्मितत्वादाभासचित्रतायाः । तदाश्रयत्वाच्च क्रमस्य यत्रापि कारणे कालाख्येति उच्यते, तत्रापि दिवसे जातो मध्याह्ने जात इति अर्कसञ्चारक्रमस्यैव कारणताप्रतीतिः[2] सिद्धा, नतु नित्यद्रव्यात्मनः परिनिष्ठितरूपस्य कस्यचित् । द्रव्यमपि तत्प्रवहणधर्मकमेव नवपुराणतारूपपरत्वापरत्वतद्वैचित्र्योत्थापकमिति चेत्, तर्हि पुनरपि क्रमरूपता एव अस्य अनुभवानुसारेण व्यवतिष्ठते, न रूपान्तरमिति क्रम एव आभासनेऽनुप्रवेशात्मा कालः,—इति सिद्धम् । **'वक्ष्यमाणात्'** इति

'क्रमो भेदा..............................।' (२।१।४)

इत्यादिसूत्रेषु । **'नालिकादि'** इति मुहूर्तादेः कल्पावसानपर्यन्तस्य परिग्रहः । ननु[3] येन कलति क्षिपति परिच्छिनत्ति, स कालः । क्रिया परिच्छेद्या, तत् कथं सा कालः । अत्र आह **'विशिष्ट'** इति । इयत्तया प्रसिद्धत्वमनेन लक्षयता तस्यामपि परिमातुमिष्टायां नालिकास्रुत्यादिक्रियान्तरमेव काल इत्याह । अनवस्थादि च कनकप्रतिवर्तकवृत्तान्तेन कृतसमाधानमेव ।

१ ख. 'च तस्य' । २ ग. करणता' । ३ ग. 'ननु कलति' ।

भावान्तरोपाश्रयेण अनेकभावपरिच्छेदेन यौगपद्यं मूर्तिकृत-दूरत्वादूरत्वरूपाभ्यां[1] परत्वापरत्वाभ्यां सङ्कीर्यमाणतया भावेषु विदधत् कालः,—इत्युच्यते। तत्रैव च उक्तनीत्या नित्यत्वैकत्वे यदि व्यवह्रियेते,द्रव्यत्वं च स्वातन्त्र्यारोपणेन;तदा काणादमतस्य अपि न काचित् क्षतिः सत्यसद्दर्शनशरणभावोपगमने,—इति आकूतम्। ननु वसन्तादिः कालः प्रसिद्धः, स च कथं क्रमात्मा। इत्थमित्याह 'तथाहि' इति। मीनमेषराशिसंचरणनिमित्ता अर्कस्य उदयादि-क्रिया वर्तमाना वसन्त इत्यनुभूयते। ननु स वसन्तः कालोऽ-र्कस्य क्रमरूपः सहकारोद्भेदस्य कथं कालः,—इत्याशङ्क्य ब्रूते 'तेनैव' इति। वाशब्देन अस्य एव पक्षस्य दार्ढ्यं द्योतयति। यथा कनकस्य स्वमेव रूपं माषक इति परिच्छिन्नमुच्यते, प्रतिवर्त-कगतं तु तत्र उपलक्षणमात्रं—नतु अन्यत्रत्यमन्यत्र सङ्क्रामति—तथैव सहकाराभासस्य आन्तरत्वग्राह्यत्वबाह्यत्वाभासानां कोरकमुकु[2]-लविकस्वरादिवैचित्र्यभाजां यो निजः क्रमः, स एव वसन्तः। स तु अर्कोदयस्तस्य उपलक्षणमात्रम्। एवं सर्वत्र मन्तव्यम्। ननु वसन्तादिशब्देभ्योऽक्रममेव सिद्धरूपं वस्तु प्रतिपत्तिपथम-भ्येति, न क्रमः। अत्र उच्यते **'वसन्तादि'** इति। एतच्च

'............तिङ्वाच्यकर्मवत्।' (१।५।१७)

इत्यत्र वितत्य उक्तम्। आख्यातपदादेव हि यथा क्रिया प्रती-यते, न अन्यतः; तद्वत् तत एव क्रियास्वरूपहृदयप्रविष्टः कालः। अभूदिति हि भावावभासस्य भवनक्रिया अवभासस्फुटत्व-तदस्फुटत्वक्रमोपश्लिष्टा निर्भासते। भविष्यदादयस्तु घटादि-तुल्यमेव अर्थमाहुः। तत एव भविष्यत्, अभवत्, इदं वर्त-मानं दिनम्,—इत्यादौ न कालस्य सङ्कीर्णता काचिदभवदि-

१ ग. 'रूपाम्'। २ ख. 'मुक्तक'।

त्यस्य एव अत्र कालत्वेन उन्मेषात्, वर्तमानभविष्यच्छब्दार्थस्य सिद्धरूपदिनविशेषणतैकविश्रान्तिसतत्त्वतया क्रियावच्छेदकत्वायोगात् । एतच्च अग्रे वितनिष्यते,—इत्यास्तां तावत् । यस्मात् क्रियाशरीरान्तरनुप्रवेशवशोन्मिषितशरीरः क्रम एव कालः, '**तत्**' इति तस्मात् हेतोरेवमवतिष्ठते—यत् किल भावविकारषट्क[1]क्रमपरमार्थ एव कालः । नहि भावविकाराधिका काचित् क्रिया अस्ति । यथाह तत्रभवान्

'जन्मादयो विकाराः षड् भावभेदस्य योनयः ।' (वा०प०१।३)

इति ॥ ३ ॥

ननु एवं भावानां स्वभाव एव कालः,—इत्यस्तु । ततश्च कालशक्तिर्नाम का अन्या, येन उक्तं

'सक्रमत्वं च.............।' (२।१।२)

इत्यत्र '**कालशक्तितः**' इति । एतत् समाधत्ते सूत्रेण

**क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः ।**
**आभाससदसत्त्वे तु चित्राभासकृतः प्रभोः ॥ ४ ॥**

स्वभावभेदमात्रं चेत् कालः, अङ्गुलीनामपि कालभेदः स्यात् । तस्मादाभासनानाभासनाभ्यां यो भेदः, तथाभूतभेदनिमित्तकः कालात्मा क्रमो; न भेदमात्रनिमित्तकः । आभाससद्भावासद्भावौ च यौ वैचित्र्येण, तौ स्वप्नसङ्कल्पनादौ क्रमोत्थापनदृष्टसामर्थ्यस्य प्रभविष्णोरेव सकाशात् भवतः । यदुक्तं तत्रभवता

'एकस्यैव तु सा शक्तिर्यदेवमवभासते ।' (वा०प०२।२२)

इति, तथा अन्यत्रापि

'तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ॥'



1 ग. 'षट्क्रम'।

यदि न प्रतिबध्नीयात् प्रतिबन्धाच्च नोत्सृजेत् ।
अवस्था व्यतिकीर्येरन् पौर्यापर्यविनाकृताः ॥'

इति । अनेन हि स्वातन्त्र्यमाभासनानाभासनयोर्वदता ऐश्वर्यमुक्तम् । स हि भगवान् चित्रतया आभासान् करोति । तत् यथा—दृढलोहितोन्नतघटाभासान् सामानाधिकरण्येन, घटपटाभासौ सहैव पृथक्त्वावभासेन, स्वात्मनि एकरसेन आभासेन, अन्योन्यं तु एकरसेन अनाभासेन । इयति न क्रमः कश्चित् । यदा तु वसन्ताभासं ग्रीष्माभासेन, इममपि तेन शून्यं समाभासयति; तदा क्रमस्य उन्मेष इत्येवं भगवत एव आभासानाभासप्रथनसमर्थता या, सैव [1]कालशक्तिः । ततो भवन् भावोपाधिभूतः क्रमः कालः,—इति सूत्रार्थः । [2]एनमवतारयति **'क्रम'** इति । **'पर्यालोचनया'** इति अन्यथानुपपत्त्या क्रमस्येति आकूतम् । **'विचित्रम्'** इति आभासानाभासयुक्तं कृत्वा यत् घटपटाद्यवभासकरणम् । इयमेव भगवतः कर्तुः कलनक्रिया । एतदेवच भावोपाधिभूतस्य क्रमात्मनः कालस्य आविष्क्रियमाणस्य आविष्करणसामर्थ्यम् । **'इत्यादौ'** इति अस्मिन् वाक्ये यत् **'अवभास'** इत्यादि शकलकं, तत् कर्तृ; **'तत्'** इति विवृतिप्रारम्भे यदुक्तं, तत् कर्मभूतमाह,—इति सङ्गतिः । **'अस्य'** इति सौत्रस्य । **'एकाश्रयत्वायोगात्'** इति क्रमोत्थापकयोरिति मन्यते । अन्यथा घटो न आभासेत, आभासेत च,—इति किमेकाश्रयता न [3]युज्येत इत्यनयोः **'भेदहेतुत्वेन च'** इति क्रमोत्थापकभेदनिमित्ततया । **'उपादानात्'** इति सूत्रे । **'भिन्नत्वम्'** इति क्रमं प्रति उपयोगि,—इति भावः । **'अत एव'** इति यतोऽ-

---

१ ग. 'काल उक्तः' । २ ग. 'येन स तारयति क्रमति' ।
३ ख. 'युज्यते' ।

स्मिन् प्रकृते क्रमे द्वयमुपयोगि । '**उपात्ते**' इति वृत्तौ भिन्ना-वभासवैचित्र्यशब्दाभ्यां नपुंसकैकशेषोऽत्र द्वयस्य उपयोगितां दर्शयति । '**चित्रत्वम्**' इति । '**बोधात्मनः**' इति चित्रज्ञानस्य । '**तथाच**' इति चित्रबोधैकत्वभेदैकत्वयोश्च विरोधे वाग्भरमार्यवचनेन करोति । आद्यं हि पादत्रयेण अत्र उक्तम्, अन्यत् तु तुर्येण । एतत् वचः सङ्क्षेपेण व्याचष्टे '**नीलादीनाम्**' इत्यादिना । अनेन तुर्यपादो व्याख्यातः '**बोधः**' इत्यादिना शेषः । '**अन्योन्यापरित्यागेन परिच्छेदात्**' इत्यनेन

'.............................अनन्यभाक् ।

अशक्यदर्शनः..................॥'(प्र०वा०३।२२०)

इत्यस्य प्रसङ्गस्य यत् विपरीतमभीष्टमर्थतत्त्वं, तत् व्याख्यातम् । '**तैरेव**' इति उक्तरूपैर्नीलादिभि[1]र्ब्रह्मवादिभिर्वा एवं तावत् वदद्भिरनक्षरमक्षरमपि ब्रह्मतत्त्वं चित्रमङ्गीकृतं भवति । सर्वज्ञबोधस्य सार्वकालिकसार्वदेशिकभावाभावाभासचित्रस्य स्वयंच बोधरूपतया देशकालानाकलितस्य अङ्गीकरणात् यैर्दूषयितुमभीष्टं, तत् तेषामेव संवित्परामर्शकुशलपरिपाकप्रसन्नमहेश्वरप्रसादोदितावदातप्रतिभाप्रतिलम्भादेव स्फुरितमिति एवकारः । चित्रं कृत्वा या विश्वात्मभावेन भगवतः स्थितिरिदमेव कालप्रथने निमित्तम् । ननु अवभासरूपतां मुक्त्वा के परे भावा नाम, येन उक्तं '**भावेषु**' इति । तत्र आह '**माया**' इति । '**उभयरूपापि**' इति । अनेन इदमाह—सूत्रे वृत्तौ च उभयरूपोऽपि अयं देशकालक्रम आभासानाभासोपकृतभावभेदाश्रयत्वेन तावदुक्तः, सूत्रान्तरे च विभक्ष्यते । मया तु विवृतिकृता—क्रियाप्रसङ्गायातः कालशक्तिविचारः,—इति कालक्रमाभिप्रायेण सूत्रवृत्ती नीते इति ॥ ४ ॥

---

१ ग. 'ब्रह्मादिभिः' ।

चित्राभासक[1]र्तृत्वं दर्शयति सूत्रेण

**मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।**
**क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥ ५ ॥**

मूर्तीनां संवेद्यरूपाणां भावानां यत् वैचित्र्यं गृहप्राङ्गणविपणि-देवकुलारामारण्यादिभेदेन, ततो हेतोस्तत् वैचित्र्यमाभासयन् परमेश्वरो देशक्रमं वैतत्यावैतत्यात्मकमवभासयति । एकप्रत्यभिज्ञा-बलात् तु यत् स्वरूपेण अभिन्नं हस्तादि, यद्वक्ष्यति

**'विमर्शैक्येनातिरोहिताभिन्नद्रव्यात्मनः'**

इति; तस्य यदन्यान्यदेशत्वमन्यान्यधर्मत्वं स्वरूपैकतामबाध-मानं—गच्छति चैत्रः, पच्यते फलम्,—इत्येवंभूतं क्रियावैचित्र्यं, तस्य निर्भा[2]सनात् हेतोरीश्वरो विरोधमविरोधं च स्वातन्त्र्यात् निर्भासयन् कालाख्यं क्रममेकस्य विरुद्धरूपतया अनुचितमपि अवभासयति,—इति सूत्रार्थः । अनेकस्मिन् वस्तुनि देशक्रमो गृहाङ्गनवत्, कालक्रमः सहकारमल्लिकादिवत् । एकस्मिंस्तु न देशक्रमो दूरतादेरभावात् । वैतत्यमपि अंशानाम् । तदेकत्र कालक्रम एव पच्यमानाम्रफलवत्,—इति वृत्तितात्पर्यम् । वेद्ये एव कालावस्थितिः, न संविदि । ज्ञानेऽपि वेद्यांशे एव कालः, न स्वसंवेदनांशे; नच विमर्शरूपशब्दनांशे,—इति घटयति **'स्वरूपमात्रम्'** इत्यादिना । **'आकाशीयस्य'** इति प्राण-प्रेरणनैरपेक्ष्येण एव इच्छाप्रयत्नमात्रप्रक्षोभिते आकाशे हृदयग-गने अहमिति परिस्फुरतो ग्राहकरूपस्य ज्ञानभागे वा पश्यन्ती-मध्यमात्मना स्फुरत इदमिति ग्रहणरूपस्य । **'भेदाभावात्'** इति अवेद्यत्वादित्यर्थः । यदाह तत्रभवान्

'अव्यक्तः क्रमवाञ्शब्द उपांशु योऽभिधीयते ।
अक्रमस्तु वितत्यैव बुद्धिर्यत्रावतिष्ठते ॥' (वा०प०२।१९)

---

१ ग. 'सोऽकृत' । २ ग. 'निर्भासात्' ।

इति । '**वायवीयादेः**' इति घटइत्यादेर्वैखरीपदापन्नस्य शुकशुकादेश्च[1] वायवीयस्य, धगधगादेस्तैजसस्य, छलछलादेः[2] सालिलस्य, टकटकादेः पार्थिवस्य शब्दस्य दूरादिभेदः सजातीयविजातीयापेक्षया भवत्येव । '**विवृता**' इति ननु असर्वगतद्रव्यपरिमाणमिह मूर्तिः काठिन्यं वेति आशयः । अत्र कश्चित् शब्दस्य मूर्तत्वमसहमानो देशक्रमं च मृष्यमानो, न मूर्तता देशक्रमोपयोजिका,—इति पूर्वपक्षयति '**ननु**' इति । '**कार्यं**' इति शुकशुकादि । '**कारणम्**' इति शब्दतन्मात्रमपि हि वायोः कारणम् । शब्दस्पर्शजो हि वायुराविशति,—इति न वायुरेव असौ येन मूर्तः स्यादित्यर्थः । ननु तस्य असौ धर्मः । सत्यं धर्मः, नतु शब्द एव वायुः । स्पर्शगुणादेर्बहिर्वायुर्विलक्षणः । एतत् दर्शयति '**आविशन्नपिवा**' इति । '**तस्य**' इति वायवीयस्य । '**अन्यस्य**' इति तैजसादेः । यदि च मूर्तिर्निबन्धनं देशक्रमे, शब्दस्य तर्हि स न स्यात् । अस्ति सोऽस्य,—इति दर्शयति '**युगपदेवच**' इति । अनेन सजातीयापेक्षया स्फुटं दूरादूरादि दर्शयता न कारणाद्युपाधिकृतमत्र तदिति दर्शितम् । एवमनया भङ्ग्या परमार्थत आकाशे एव शब्दो, न वाय्वादौ; येन तस्य मूर्तत्वात् तद्धर्मोऽपि अभेदेन प्रतीयमानः शब्दो मूर्तो भवेत् । तथाहि 'विशिष्टं हि अपरं परेण' इति न्यायेन वाय्वादौ तदुपलम्भः । वाय्वादि च मूर्तं न आकाशमिति असर्वगतद्रव्यपरिमाणं मूर्तिमुपगच्छता चोदिते प्रत्याह '**अस्त्वेवम्**' इति । लोके भवतु अमूर्तव्यवहारः शब्दस्य, शास्त्रान्तरे वा । लोको हि सङ्ग्रहपरिग्रहदानादियोग्यं मूर्तं मन्यते, न शब्दम् । तदनुसारेण एव परिभाषितमसर्वगतेति[3] । 'मूर्तौ घनः'

१ ग. 'ऋगादेः' । २ ख. 'फलफलादेः' । ३ ख. 'सर्वगत' ।

(३।३।७७) इत्यत्र च काठिन्यं मूर्तिरुक्ता, [1]सच न इह प्रकार इति दर्शयति विशेषं द्योतयन् '**इहतु**' इति । '**क्रियारहितम्**' इति । न अत्र देशक्रमे क्रिया उपयुक्ता । सा अस्तु मा वा भूत्, वेद्यस्वरूपं तु यत्, तदेव मूर्तिर्देशभेदक्रमोपकाराय आलम्ब्यते इत्यर्थः । '**अनेकस्य**' इति पदेन अनेन मूर्तिर्विवृता वेद्यवस्तुरूप[2]त्वेन । '**लक्षणे**' इति इत्थंभूतलक्षणे तृतीया, ज्ञापकस्य वा लक्षणया हेतुत्वविवक्षायां हेतौ । नच इयं स्वमनीषिका,—इत्याह '**तत्रभवत्**' इति । '**इच्छन्**' इति अन्यैरपि

'मूर्तिक्रियाविवर्तोव विद्याशक्तिप्रवृत्तिमात्रम् ।'

इत्यादिभिः श्रुत्यन्तवाक्यैर्व्यवहृतमभ्युपगच्छन्नित्यर्थः । ननु ज्ञानविमर्शावपि न निःस्वरूपाविति तत्रापि स्यात् देशक्रमो मूर्तिप्रयुक्तः । मैवं, न स्वरूपमात्रं मूर्तिः, अपितु आभास्यमानं वेद्यान्तरेण तुल्यकक्ष्यतां सहमानम् । ननु एवं ज्ञानशब्दने, विद्योपरक्ते हि ते, नतु वेद्ये । एतदाह '**ज्ञान**' इत्यादिना । '**अथवा**' इति अमूर्तस्य अपि शब्दस्य मूर्तास्तावत् पवनादयः आश्रयाः । गुणिदेशकश्च गुणः । तत् गुणिनि वाय्वादौ मूर्ते यो देशभेदः, स तत्रापि संयुक्तसमवायात् लक्ष्यते, न पारमार्थिकः,—इति मूर्तानामेव देशक्रमः,—इति शास्त्रान्तरीयमूर्त्युपगमेऽपि न किञ्चित् खण्डितम् । प्रथमं श्लोकार्धं व्याख्याय अपरं तु व्याख्यातुमुपक्रमते '**संवेदनात्मन एव**' इत्यादिना । '**गौणी कर्तृता**' इत्यत्र हेतुः '**कर्तृतोपचारात्**' इति । वेद्यस्य वेदनान्तःप्रकाशमानत्वेन निमित्तेन कर्तृताध्यारोपादुप-

---

१ ग. 'सच' इत्यारभ्य 'उपयुक्ता' इत्यन्तं नास्ति । २ ग. 'वेद्यवस्तुरूपे तु' ।

चारे मुख्यार्थबाधं हेतुमाह **'संवेदनात्मन एव'** इति। **'मूर्तिमतामपि'** इति वेद्यत्वेन असंवेदनात्मनामपीत्यर्थः। एवं परमार्थस्थित्या गौणत्वं निरूप्य प्रसिद्ध्यनुसारेण आह **'यथा-प्रतीति मुख्यां वा'** इति। **'कालभेदोऽपि'** इति अनेकस्य न परं देशभेदः, यावदयमपि,—इति अपिरनेकतामाक्षिपति। एकस्य कालक्रमोऽग्रे वक्ष्यते **'एकस्य पुनर्'** इत्यादिना। तं कालं विभजति आभासानाभासयोगेन **'तथाच'** इति। **'यस्य'** इति प्रमातुः। **'यस्य'** इति अर्थस्य। **'तस्य'** इति प्रमातुः। **'स'** इति अर्थः। **'वर्तमानो भाति'** इति सम्बन्धः। वाक्यान्तरे **'यस्य'** इति अर्थपरामर्शकमनुवर्त्य सम्बन्धः कर्तव्यः। प्रमातुरर्थस्य यस्य अनाभासमानस्य कारणसत्तावभासनेन वर्तमानावभासत्वं कल्प्यते कारणावभासस्य[1] वर्तमानस्य प्रत्यक्षस्य विनाशाभासेन सह, सोऽर्थः प्रमातुर्भाति,—इति सङ्गतिः। भूतवर्तमानयोः प्रसिद्धत्वात् न उदाहरणमुक्तम्, भाविनि तु 'भविष्यति प्रमाणाभावात्' इति न्यायेन कर्किविष्णवादिवृत्तान्ते भविष्यदुदाहरणे विचिकित्सुरुदाहरणान्तरमाह **'यथा'** इति। अद्यतनदिनकरणीयमिव ह्योदिनसङ्कल्पिताद्यतनकर्तव्यस्य अप्रतिहतेच्छस्य स्वामिनः सत्ताविनाशौ द्वाविति भावविकारौ द्वाभ्यामेव अवभासभावाभावाभ्यां सङ्गृहीतौ,—इति दर्शयति। ननु किमत्र प्रमात्रा प्रयोजनमवभासनेन वा जन्मादिभावविकारवैचित्र्यक्रियाबलेन एककालक्रमसिद्धेः, तत् किमर्थं **'प्रमातुः'** इति **'भाति'** इति च विवृतौ दर्शितम्, यत् वृत्तौ न स्पृष्टं; **'क्रियामुखेन'** इति इयती वृत्तिः। एतत् परिहरति **'अस्खलित'** इति। वस्तुचिन्ता हि इयं

---

१ ख. 'कारणाभासस्य'।

प्रसिद्धौ तु निदानं क्रमिसर्वज्ञाद्यपेक्षया यतः शाश्वत एषां चित्सम्बन्धः। एतत् एवकारेण सूचितम्। **'वक्ष्यते'** इति कार्यकारणतत्त्वविमर्शप्रकरणे

'आभासभेदादेकत्र.................।' (२।४।१९)

इत्यादौ सूत्रे[1]। मूर्तिवैचित्र्यवतोऽनेकस्य क्रियावैचित्र्यात् कालवैचित्र्यं वर्तितं[2] विवृतं च। अपिशब्दसूचितं तु तद्वैचित्र्यविकलस्य अपि एककालवैचित्र्यं यत्, तस्य या वृत्तिः **'एकस्य'** इत्यादिका; तां विवृणोति **'एकस्य पुनर्'** इत्यनेन देशक्रमाभावं दर्शयता तु व्याख्याता। गृहेऽपि यत् वैतत्यं, तत् न गृहस्य देशभेदं करोति; अपितु गृहावयवानाम्। भेदा भिन्ना एव। अत एव अवयवी न देशभिन्न एकत्वात्। ततस्तद्देशत्वातद्देशत्वचोदना[3] तत्र अनुभवबहिर्भूता एव। पट इति हि नियतपरिमाणे तत्र प्रत्ययः। नच परिमाणमेव वैतत्यम्। वैतत्यं हि भूयोदेशसंयोगः। देशस्य भूयस्त्वं भेदात्। भेदश्च[4] अस्य आधेयभेदात्। आधेयश्च अवयवी नाम एकः, नतु अनेकः। अनेकत्वं तु तन्तूनाम्। तेषां देशक्रम एव वैतत्यम्। तन्तुबुद्धौ च न पटः परिस्फुरति, पटधियि च न तन्तवः। आभासनसारं च वस्तु। कश्चित् प्रमाता हि क्वचिदाभासे प्रतपति। ततोऽसङ्करेण एव अवयवा अवयवी च,—इत्यास्तां तावत्। मात्रपदेन देशक्रमम्, एवकारेण स्वरूपभेदं निरस्यति। **'तेषामेवच'** इति क्रमवताम्। तत्रापि क्रमो यावदेकः क्षणः। स च पूर्वापरम-

---

१ ग. 'इत्यादौ मूर्ति'। २ ग. 'वर्तितम्' इत्यारभ्य 'कालवैचित्र्यम्' इत्यन्तं नास्ति। ३ ग. 'तद्देशचोदना'। ४ ग. 'भेदश्च' इत्यारभ्य 'भेदात्' इत्यन्तं नास्ति।

श्यपाती व्यवहार्यो, नतु शुद्धः,—इति तत्रापि क्रमवत्ता एव । यत् तत्रभवान्

'पूर्वोत्तरैस्तथा क्षणैः(दा भागैः) समवस्थापितक्रमः ।
एकः सोऽपि तदध्यासादाख्यातैरभिधीयते ॥'

(वा० प० ३।८।११)

इति । अचेतनगतमपि परिणामं भेदेन व्याचष्टे **'दाडिमादिफले'** इति । पाकाख्योऽयं परिणाम इत्यर्थः । **'उद्भवन्ती'** इति अविच्छिन्नत्वेन अबाधितत्वं दर्शयता सन्तानाध्यवसायं सन्निवर्तकधर्मकबाधकशतैरिच्छन् बौद्धोऽङ्गीकरणीय एव । क्रियातत्त्वप्रतिभासमुखप्रेक्षिणावेव हि विरोधाविरोधौ, नतु शुष्कावेव अङ्गुलिमोटनटङ्कितौ वस्तुसिद्धिं[1] कुरुतः,—इति निरूपितम् । **'एकाश्रयत्वेन'** इति एकस्मिन्नपि प्रत्यभिज्ञाप्रत्यवमर्शैक्येन सिद्धेर्[2]यतो भवति, ततो देशक्रमादनेकत्रैव[3] वर्तमानात् भिद्यते, न अत्र देशक्रमः संभावनीयः,—इति यावत् । ननु एकाश्रयता एव कालक्रमे प्रयोजिका वसन्तग्रीष्मादौ तस्यामसत्यामपि तद्दर्शनात् । ननु भवतु एवं क्रमरूपता कालस्य, वर्तमानादिरूपता तु कथम् । इत्थमित्याह **'स्नान'** इत्यादिना । उत्तरसूत्रवक्ष्यमाणेन न्यायेन वर्तमानः स आभास उच्यते यस्य स्फुटादिरूपता । तादृशश्च कः । यस्य ग्राहकाभासेन शरीरादिना मायीयेन सहैव प्रथनं, स सहभावः,—इति चेत्, आह **'अन्तर्'** इति । यदा स ग्राहकाभासः, तदा तस्य ग्राह्यस्य आभासनं न; यदाच स ग्राह्याभासस्तदा तस्य ग्राहकस्य आभासनं न,—इत्येवंभूतो योऽन्योन्यमभावस्य आभासः 'आभाससत्त्वम्' इत्येवं पूर्वमुक्तः; तेन यो व्यवधानाभावः,

---

१ ख. 'वस्तुसिद्धत्वं' । २ ख. 'सिद्धेः' । ३ ग. 'अनेकत्रैव' ।

तमवलम्ब्य सा सहप्रथेति, उच्यते—अयमसौ सहभावो नाम। एतत् लोकेन संवादयति '**स्फुट**' इति। ननु एवमभावव्यवधाने सति वर्तमानत्वाभावे तुल्ये कथं भाविभूतत्वभेदः,—इत्याशङ्क्य तमुपपादयति '**असत्त्वम्**' इति। एवकारव्यवच्छेद्यं दर्शयन् भूतकालमुपपादयति '**बालः**' इत्यादिना। '**भवनधर्मापि**' इति एवं स्फुरितस्य बाह्यरूपस्य एव बाल्यस्य अधुना अपि संस्कारतया अन्तरपरिक्षतं भवनमित्यर्थः। '**अवभासस्य**' इति बाह्यतारूपस्य[1]। इदानीमेतस्य कालक्रमस्य सकललोकसिद्धत्वेन स्वसंवेदनसिद्धत्वेन च अनपह्नवनीयस्य बाह्यार्थनये[2] भेददृशि समर्थना न कथञ्चित् युज्यते। तदवश्यसमर्थनीयेऽस्मिन्नाभासवस्तुवाद एव शरणम्, न बाह्यवादः,—इति दर्शयन्नीश्वरप्रत्यभिज्ञोपयोगमस्य कालप्रकरणस्य दर्शयति '**अत एव**' इति उक्तनयेन योऽयं कालव्यवहारो भावाभावानुप्रवेशे निमित्तत्वेन उक्तः, तत एव हेतोरेकस्य तौ विरुद्धौ तन्निमित्तकस्य अपि कालाख्यस्य क्रमस्य विरोधमुत्थापयतः। '**तथा**' इति विरुद्धः। स्यादेतत्—न एकस्य कश्चित् कालक्रमः। अपितु स एव भूत्वा न भवति, अभूत्वा च भवति। अयमेवच परमार्थो भूतभाविवर्तमानविकल्पैर्व्यवह्रियते। नैवं,—इत्याह '**सतः**' इति। असतश्च उत्पत्तिः,—इति मन्तव्यमिह। एतच्च

'यदसत् तदसत्................................।' (२।४।३)

इत्यत्र वक्ष्यते। यदातु न कश्चिदर्थो नाम परमार्थतः, तदा तु कस्य विरोधपर्यनुयोगः। यत् किल अस्य तत्त्वं, तत् चिद्रूपं स्वतन्त्रं चेति तस्य अपि कः पर्यनुयोगः। एवं प्रसङ्गादा-

---

१ ग. 'बाह्यार्थतारूपस्य'। २ ग. 'नयभेदे दृशि'।

भाससारत्वं वस्तूनामभिधाय, प्रकृतमेव निरूपणीयम्,—इति दर्शयति '**योगिनां तु**' इति। तुशब्द आशङ्कामिमां सूचयति—यदि स्फुटाभासमानता एव वर्तमानता, तर्हि योगिनो यदतीतानागतवस्तुसाक्षात्कारि ज्ञानं, [1]तत्र तयोरतीतानागतयोः स्फुटत्वं तावत्—साक्षात्क्रिया हि अन्यथा का—ततश्च तयोर्वर्तमानताप्रसङ्गः इति। अत्र निराकरणहेतुः '**अन्योन्य**' इति। एतदुक्तं भवति—योगिनोऽपि सर्वदा परित्यक्तमायाप्रमातृपदस्य को नाम अतीतादिभेदः। तत्तु अपरित्यजत एव संस्कारशेषतया भवेत् सः। तदपरित्यागे च देहाभासेन समाधानकालभाविना सह तस्य ग्राह्याभासस्य उक्तस्थित्या संभवत एव आभासानाभासौ,—इति कथं वर्तमानता। नहि स्फुटत्वमेव सा सत्त्वमिति उक्तम्। अतीतग्रहणं भाविनोऽपि उपलक्षणम्॥ ५॥

ननु उक्तनीत्या देशकालक्रमावाभासेषु एव स्याताम्, न प्रमातरि। निराभासो हि असौ। तस्य हि सर्वमाभासते, नतु कस्यचित् सः। नच असौ कदाचित् न आभासते। अनाभासानुप्रवेशनिमित्तकौ च तावुक्तौ[3]। तत् सततप्रकाशस्वभावे कथं स्याताम्। कारणानुपलम्भात् हि तदभाव एव युक्तः। दृश्येते च एतौ—अभवम्, भवामि, भविष्यामि,—इति; गृहे, ग्रामे, अरण्ये तिष्ठामि,—इति; प्रासादात् मञ्चकस्थानम्,—इति च। प्रमातरि च तदभावे भावेषु स्वात्मनो भूतादेर्दूरादेश्च अयोगः,—इति कृत्वा प्रतीतिपर्यालोचनया तदपेक्षया एव भावेषु निरूपितौ तौ ग्राह्येषु अपि कथं स्यातामिति कुत्र इमौ बद्धनिवेशाविति यो मुह्येत्, स प्रत्याय्यते सूत्रद्वयेन। तत्र कालक्रमस्तावदुप-

---

१ ख. 'तत्र' इत्यारभ्य 'का' इत्यन्तं नास्ति। २ ख. 'तत्र'। ३ ख. 'उभौ'।

पाद्यते प्रथमसूत्रेण

सर्वत्राभासभेदोऽपि भवेत् कालक्रमाकरः ।
विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत् ॥ ६ ॥

अपिशब्दः प्रमेयं समुच्चिनोति । सर्वेषु एकानेकरूपेषु भावेषु यः कालक्रम उक्तः, तस्य य आकरः प्रथमोत्पत्तिनिमित्तभूत आभासस्य[1] भेदो भवनाभवनवैचित्र्यं, स शून्यधीप्राणदेहलक्षणस्य प्रमात्रीकृतस्य भवति,—इति संभाव्यते, यतोऽसौ विच्छिन्नभाः । तस्य हि भासनं न स्वरूपं नीलादिवदेव जडत्वात् । संवित्स्फुरणमेवहि अस्य अपि भासनम् । यदाहि न संवित् तदात्मतया स्फुरति, तदा न अस्य भासनं मूर्च्छायामिव । ततस्तस्य अनाभासनयोगादस्ति भूतादिरूपता, तदपेक्षया च भावानामपि । यस्तु 'सकृद्विभातः ।' इत्यनया ब्रह्मविद्याचोयुक्त्या सततमविच्छिन्नप्रकाशनैकस्वभावः परमार्थप्रमाता निरूपितः, तस्य न कदाचिदाभासभावाभावौ । ततो न कालयोगस्तत्र, नापि तदपेक्षया भावेषु अपि स इति सूत्रार्थः । यदविचलं भावस्य, तत् न अन्यापेक्षं नीलत्वमिव; नच अविचलमेतत्,—इति अनन्यापेक्षत्वव्यापकाविचलत्वविरुद्धं विचलत्वमुपलभ्यमानमनन्यापेक्षतां व्याप्यां निषेधति,—इति विचलत्वमुपपादयति **'तथाहि'** इति **'अतीतानामागामिनाम्'** इति एवंहि सर्वज्ञब्रह्मविष्णवादयो मन्त्रेश्वरादयश्च व्यवहरन्ति । ऐदंयुगीनो व्यवहारो रामादेरागामितया परिस्फुरणयोग्यः कर्किविष्णुप्रमुखानां च भूततया,—इति यदा **'तदा'** इति तस्मादित्यर्थे[2] । **'विवृतम्'** इति भावे क्तः । सूत्रानुपात्तमर्थपदं वृत्तौ प्रक्षिप्य सूत्रार्थो व्याख्यातः । तद्व्याख्यानं **'तत एव'** इति उक्तरूपमर्थमभिप्रेत्य । **'स हि'** इति ।

---

[1] 'आभासभे' ख. । [2] 'इत्यर्थः' ख. ।

**'शून्यदेहाद्याभासप्राक्काल'** इति बहुव्रीहिः । **'स्मृतिम्'** इति स्मृतौ केवलं भासते इत्यर्थः । **'अविशेषेण'** इति प्रमातृभागो वा अर्थभागो वा न अत्र उद्दिष्ट इत्यर्थः । आभासाभावं देहादेर्दृढीकरोति **'शरीरादेः'** इति । अवस्थाभासो यथा विच्छिद्यते, तथा अवस्थातुरपि स्वरूपम्,—इति वक्ष्यते

'तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं[1] प्रलयोपमम् ।' (३।२।१५)

इत्यत्र । **'तथा'** इति । प्रकाशनमस्य स्वभावः[2] । वाग्रहणेन वाचोयुक्तिद्वयस्य आपाते भङ्गीभेदेऽपि फलतुल्यतामाह । ननु एकत्वे क आवर्तनार्थः इति एकशब्दात् कथं कृत्वोऽर्थप्रत्ययप्रयोगः[3],—इत्याशङ्कां निवारयति **'एकस्याः'** इत्यादिना । स्थितिरेव आवृत्तित्वेन उपचर्यते, निमित्तं च अत्र द्वितीयतृतीयादौ स्थितौ; तदेकभावविश्रान्तक्रियाया यदावृत्तिरूपत्वमस्ति, तत् साहचर्यं नाम । द्वितीयादिकां हि स्थितिं निषेद्धुं यावत् तामाद्यां स्थितिं विवक्ष्यति, तावत् सा प्रथमा स्थितिर्द्वितीयादिस्थितिभिर्निषिषित्सिताभिः सह स्फुरति । प्रयोजनं च उपचारे आवृत्तिप्रतिपत्तिः । एका स्थितिरावृत्तिः,—इति हि उक्ते द्वितीया अपि आवृत्तिरूपत्वेन अस्ति,—इति संभाव्यते । अवश्यं च एतदेव मन्तव्यम्, अन्यथा लोकस्थितिः प्रसिद्धा विपर्यस्येत,—इति दर्शयति **'अन्यथा'** इति उपचारे न अङ्गीकृते, आवृत्तिशब्देन द्विवचनान्तेन 'आवृत्ती' इत्यनेन द्वे स्थिती न उच्येयाताम् । आद्या हि स्थितिरेव, न आवृत्तिः; द्वितीया तु स्थितिः, एका आवृत्तिः; तृतीया स्थितिः, द्वितीया आवृत्तिः,—इति द्विर्भुङ्क्ते इति तिस्रो भोजनस्थितयः प्रतीयेरन् । तदाह **'एकारब्धत्वात्'** इति । द्वे हि स्थिती एकया आवृत्त्या द्वितीयस्थितिरूपया

---

१ 'सौषुप्त' ख. । २ 'प्रकाशमानस्य स्वभावस्य' ग. । ३ 'प्रत्ययः' ग. ।

आरब्धे न द्वाभ्यां आवृत्तिभ्यां, एवंच सकृदित्यनेन द्वे स्थिती उच्येयाताम् । नच एवं लौकिकः शब्दार्थ इत्येवमयं ग्रन्थो गुरुपादैः सङ्गमितः । **'द्वे'** इति **'द्वयोः'** इति च आवृत्तिविषयत्वेन चेत् स्पष्टेन पथा व्याख्यायते, तत् द्वयोरावृत्त्योः का अनुपपत्तिस्तिसृषु स्थितिषु । तस्मात्[1] यथोक्तैव गमनिका युक्ता । **'तेन'** इति उक्तेन न्यायेन औपचारिकवृत्त्या सकृच्छब्दार्थः इति लोकप्रसिद्धः,—इत्याशयः । **'यदि नाम'** इति श्रीसदाशिवेशदशायाम् ॥ ६ ॥

देशक्रमस्य अपि एषा एव वार्ता,—इति सूत्रेण उच्यते

**देशक्रमोऽपि भावेषु भाति मातुर्मितात्मनः ।**
**स्वात्मेव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु ॥७॥**

मितात्मन इति हेतुः, षष्ठ्यन्तं च इदम् । आवृत्त्या तु ल्यब्लोपे पञ्चमी वृत्तौ व्याख्याता, नतु पञ्चमी एव तत्प्रक्रमे षष्ठीनिर्वाहे प्रक्रमविरोधे तुशब्दस्य असङ्गतेः । स्वात्मापेक्षषष्ठीयोजने क्लिष्टता । स्वात्मना पूर्णा यतः प्रकाशमात्रस्वभावा अपरिमितस्य प्रमातुर्भावा भान्ति[2], ततः स्वात्मतुल्या एव, अमिता एव, देशक्रमविहीना एव भान्ति आत्मनि; इति शुद्धस्वात्मापेक्षया न ईश्वरस्य देशक्रमो, नापि ईश्वरापेक्षया भावानाम् । घटादेः पदार्थस्य स्वं रूपं देशः, शरीरप्राणशून्यादेरेवम्[3]; ततः परस्परदेशपरिहारेण अवस्थानमिति स शरीरादिः प्रमाता घटादिं पदार्थवर्गं स्वतः परस्परतश्च भिन्नदेशं पश्यति । देशभेदमेव बहुधा दर्शयति **'पुरः'** इत्यादिना । संस्थानं वक्रादिरूपं तस्य प्रथते । तच्च किंरूपम् । आह, दिशा पूर्वापरादिरूपया, देशेन विततादिना यः क्रमविशेषः,

१ 'तैः स्यात्' । २ 'भवन्ति' ग. । ३ 'एव' ग. ।

तस्य य आभासः—एतदेव रूपं चतुरश्रतादेः संस्थानस्य तथा च चतसृषु दिक्षु समेन देशवैतत्येन यदाभासनम्—इदमेव चातुरश्र्यम् । एवमन्यत् । स तर्हि दिग्देशक्रमः किंनिमित्तकः । आह, चित्राभासकारित्वलक्षणया उक्तरूपया संविच्छक्त्या युगपत् समकालमुपपादितौ यावाभासस्य नीलादेः सद्भावासद्भावौ—नीलं भाति, न भाति चेति, ताभ्यामानीतो यो भेदोऽन्यत्वं; तन्निमित्तकोऽसौ । अत एव मया स्तुतम्

आभासप्रतिभासतद्विरहयोश्चित्रात्मनोश्चञ्चला
स्वातन्त्र्यादवभास्वरस्ववपुषोस्त्यक्तक्रमं या स्थितिः ।
तत्संवेदनसागरस्य विलसच्चन्द्रार्धशोभाभृतो
रूपं भावविभातृतामयमहं नित्योदितं संस्तुवे ॥

इति । **'न क्वापि अप्रकाश'** इति वृत्तिवाक्यस्य इयं योजना—

'सकृद्विभातोऽयमात्मा पूर्णस्यास्य न क्वाप्यप्रकाशनसंभवः ।'

इति सारस्वतसङ्ग्रहसूत्रैकदेशार्थोऽध्यासदृष्ट्या शब्दे हेतुत्वेन उक्ते कथित एव [1]भवतीति आगमोऽयं, न स्वमनीषिका,—इति च प्रथितं भवति,—इत्याशयेन अनुकरणात् पञ्चमीं विधाय हेतुतया वृत्तावुक्तः इति । यथा न वेति विभाषायामर्थग्रहणमिति वाक्यैकदेशात् पञ्चमीविग्रहेऽपि नञः पर्युदासवृत्तित्वं समर्थयिष्यते इतिवा आशयेन अप्रकाशस्य असंभवात् ,—इति योजना । घनता यद्यपि काठिन्यं 'मूर्तौ घनः' इति वचनात्, तथापि तेन इह असंभवता स्वसहचारिविजातीयाव्यवधानं लक्ष्यते ।

'चिद्घनमात्मपूर्णं विश्वम्............... ।'

इति हि सूत्रम् । **'कर्तृत्वात्'** इति भावतया अवभासने स्वात-

---

१ 'भवति' ग. ।

क्र्यादित्यर्थः । पोषयति सहते इदंभाग इति पूर्वेण संबन्धः । क्रियाप्रसङ्गात् कालशक्तौ वक्तव्यायां तद्दृष्टान्तत्वेन देशक्रम इति

'मूर्तिवैचित्र्यत ..........................।' ( २।१।५ )

इत्यत्र स पूर्वमुक्तः, चरमं तु कालक्रमो दृष्टान्तस्य पूर्वं वक्तव्यत्वात्; इह तु उपसंहारश्लोके प्रकृतः कालक्रमः प्रागुक्तः ॥८॥

ननु एवं भगवति न अस्त्येव क्रियेति आयातं क्रियास्वरूपव्यापककाल[1]क्रमयोगाभावादित्याशङ्कां शमयन्नुभयमपि इदं क्रमरूपं क्रियाशक्तेरेव विजृम्भितमिति च दर्शयन्नस्य कालप्रकरणस्य ईश्वरप्रत्यभिज्ञोपयोगमपि दर्शयति सूत्रेण

**किन्तु निर्माणशक्तिः साप्येवंविदुष ईशितुः ।**
**तथा विज्ञातृविज्ञेयभेदो यदवभासते ॥ ९ ॥**

न एतावत् देशकालक्रमतत्त्वम्, अपितु अन्यदपि अत्र वक्तव्य[2]मस्ति । तदुच्यते '**तथा**' इति देशकालक्रमवांस्तत एव भिन्नः प्रमातृप्रमेयवर्गोऽवभास्यते । एतत् यदवभासनं, तत् भगवत एव निर्माणसामर्थ्यं क्रियाशक्तिरूपम् । तच्च एवमिति तं भेदं विदुषस्त[3]ज्ज्ञानशक्तिमयस्य तत एव तथा इच्छाशक्तियुक्तस्येति अक्षरार्थः । एतदुक्तं भवति—इह इच्छैव भगवतः क्रिया, यदुपसंहरिष्यते

'........एवमिच्छैव हेतुता कर्तृता क्रिया ।' (२।४।२१)

इति । चैत्रस्य अपि पचामीति यैव इच्छा, सैव अधिश्रयणादिस्पन्दसहस्रेऽपि अनपायिनी स्वात्मना अक्रमा अपि क्रमरूपभावाभासरूषिता भाति, तथैव परमेश्वरस्य अपि ज्ञातृज्ञेयक्रम उल्लसतु,—इति या स्वात्मनि इच्छा 'ईशे स्फुरामि प्रत्यवमृशामि घू[4]र्णे' इत्यादिपरमार्था, सा स्वयमक्रमा अपि प्रमातृप्रमेयभेदोपरागात्

---

१ 'कालकाल' ग. । २ 'प्रतिवक्तव्यम्' ग. । ३ 'तज्ज्ञानमयस्य' ग. । ४ 'पूर्णे' ग. ।

सक्रमा भाति, मकुरमण्डलमिव अक्रममपि नित्यप्रवहद्वितत-सरित्क्रमेण उदयमानव्ययमानतडित्सहस्ररूपेण च उपरक्तं सक्रमम् । ततः सर्वत्रैव इयं क्रिया स्वयमक्रमा एव उपरागात् क्रमं प्रतिपद्यते इति न अस्याः शुद्धमेव क्रमरूपं व्यापकं येन व्यापकानुपलब्ध्या भगवति सा निषिध्येत,—इति सूत्रार्थः । इदमेव संवेदनस्य संवेदनत्वम्—यदेवंभूताभासनस्वातन्त्र्यमिति । यथोक्तं

'परिच्छिन्नप्रकाशत्वम्.........................।' (बो० पं० ८ श्लो०)

इत्यादि । अनेन आशयेन अवतारयति **'तदत्र'** इति अत्र उक्तं तदधिकमुच्यते इति **'किन्तु'** इति व्याख्यातम् । **'एवं-विदुषः'** इति व्याचष्टे **'स्थितैव'** इत्यन्तेन । ज्ञानशक्तिरूपा हि श्रीसदाशिवादिदशा । **'तत्र तु'** इति पूर्णतायाम्, अन्यथाहि नाममात्रेण पूर्णता सा भवेदिति भावः । निर्भरतया चमत्कृतिमतो या परमेश्वरता—एषा शक्तिः—इति वाक्यमध्ये वृत्तिखण्डयोजना । महच्छब्दं व्याचष्टे **'यत्र'** इति । अपिशब्दादन्ये कोटिशः सृष्टिसंहाराः । ननु संहारः सृष्टौ प्रविष्टः—ईति[1] का भाषा विरोधात् । न विरोधोऽयमित्याह **'संहारेऽपि हि'** इति । **'बीजात्मना'** इति संस्कारशेषतौचित्येन । ननु एवं कः संहारार्थः । आह **'केवलम्'** इति । आभासानां योजना-योजनयोरयं व्यवहारभेदः,—इति यावत् । **'अस्याः'** इति महत्याः सृष्टिशक्तेर्यो ब्रह्मादिरूपतया विशेषो ज्ञातॄणां प्रजापत्यादिस्थावरान्तानां गुणमयानां प्रमेयानां च घटसुखादीनां गुणमयानां तथा तथा सृज्यमानानामेकघनसृष्टितायामपि इयं सृष्टिशक्तिः, इयं स्थितिशक्तिः, इयं संहारशक्तिः,—इति समुच्चीयमानः, स मायाशक्त्या कृतः । **'तत्र हि'** इति मायापदे ईश्वर

१ 'इति इति विरोधात्' ख. ।

एव ब्रह्मादिरूपेण स्थितः। अनेन महासृष्टिकर्तृत्वेऽपि परमेश्वरस्य सृष्टिस्थितिसंहारकारित्वेन पूर्णमेव सर्वकर्तृत्वमुपपादितम्। सर्वदा ब्रह्मरूपेण विष्णुरूपेण रुद्ररूपेण ईश्वररूपेण च नवतया अनुवर्तमानतया बीजावशेषितागमनेन च अवान्तरवैचित्र्यमात्रात् सृष्टिस्थितिसंहारशब्दवाच्या, अपिशब्दाच्च शुद्धरूपेण महासृष्टिशब्दवाच्या सृष्टिर्नाम या उच्यते; सा उक्तस्य ज्ञातृज्ञेयविभागस्य यदवभासनं, तदात्मिका एव। तदेव महासृष्ट्यन्तर्भूतं सृष्ट्यादित्रयं सृष्टिरूपं व्याचष्टे '[2]तादृशां च' इति विभागेन अवभासितानाम्। अनया भङ्ग्या सा मितसृष्टिर्व्याख्याता माभूत् पुनरुक्तता,—इत्याशयेन। 'एवं त्रैरूप्येण' इति ब्रह्मादिरूपत्वोचितेन सृष्ट्यादित्रयेण। ननु एवं देवतात्रितयस्य सदा[1]सन्निहितत्वे रुद्रभट्टारकोदि[3]तैः संहार [4]उभयविपक्ष इति न सृष्टिस्थिती दृश्येयाताम्। अत्र उच्यते 'तत्र च' इति देवतात्रयमध्ये। एतदुक्तं भवति—आभासपरमार्थवस्तुवादे यस्य प्रमातुर्येषु यथा मम एवममी भासन्ते इति व्यवहारः, तस्य ते तथा। क्वचित् तु आभासांशे भगवदिच्छात एषां मेलनमिति उक्तम्। ततश्च आद्यत्वे भगवद्रुद्रप्रमात्रपेक्षया परनिरोधसमवस्थितसुषुप्तिभूमिकारूढयोगिप्रमात्रपेक्षया प्रलयाकलविज्ञानाकलप्रमात्रपेक्षया गाढसुषुप्तापन्नजीवदपेक्षया च बीजभाव एव भावानां भाति। ते हि तत्र आभासे मिलिताः। ब्रह्मविष्णुभट्टारकापेक्षया जाग्रत्स्वप्रपदचारिसंसारिप्रमात्रपेक्षया च नूतनता अनुवर्तमानता च भाति ते अत्र अन्योन्यं मिलिता यतः। ननु अनेन विभागावसायेन विभागस्य एव अवभासनात् प्रकाशाविभागो विच्छेदितः इति प्रकाशमानत्वं न स्यात् भावानामित्याशङ्क्य या वृत्तिः 'नच' इत्यादिका, तां

---

१ 'सदा ग.। २ 'तादृशम्' ख.। ३ 'चितः' ग.। ४ 'उभयपक्ष' ग.।

विवृणोति **'महेश्वरस्य तु'** इति । विद्यादिशिवान्तकतत्त्व-पञ्चकमयस्य ब्रह्मादिरूपतया विभागं कुर्वतस्तद्रूपस्य सतो भेद-निर्देशयोग्या अपि स्वात्मनि अहन्तया सामानाधिकरण्येन[1] एक-लोलीभावगमनपर्यन्तेन अवच्छादितास्तथाविधसमापत्तिलक्षण-तुर्यतदतीतपदभाजां च भासन्ते कर्तृताया उद्रेकात्

'मुख्यत्वं कर्तृतायाः………………… ।' (३।२।१२)

इत्यत्र वक्ष्यमाणात् । **'एतेन'** इति **'नच'** इत्यादिना वृत्ति-ग्रन्थेन विरोधः परिहृतः । कोऽसौ । यः पूर्वके वृत्तिग्रन्थे सौत्रस्य अपिशब्दस्य विवरणे अपिशब्देन आशङ्कितः सम्भा-व्यमानत्वेन उक्तः । कस्य असौ विरोधः । ज्ञात्रादिविभागस्य अवान्तरोक्तस्य प्रकाशघनत्वस्य पूर्वसूत्रार्थप्रस्तावादिहापि आप-न्नस्य । ननु भगवन्तं शिवादिविद्यान्तमपेक्ष्य यत् भावाभासनं महासृष्टिशब्देन उक्तम्, तत् संहारोऽपि न कस्मात् । आह, भवतु असौ संहारः; यथाहि[1] बीजतोपगमनं संहारः, तथा अहन्तान्तर्मग्नतापि । शिवत्वे तु भावानां नाम अपि नास्ति,—इति ननु सृष्टिर्न संहारः । तदर्थमेव उक्तं **'सदाशिव'** इति । **'उक्तिः'** इति वस्तु एकमेव सृष्टिसंहारवाचोयुक्त्यो-रत्र । ननु पूर्वावस्थायां सृष्टिरूपता, उत्तरावस्थायां संहाररूपता; तत् कथं वस्तु अत्र न भिद्यते इति । अत्र आह **'नतु'** इति । नहि अत्र पौर्वापर्ये किञ्चित् परमार्थता । एवंरूपप्रथा च अनुग्रहः, स्थितिसृष्ट्यवान्तररूप एवच विलय इति कृत्यपञ्च-कप्रपञ्चनशक्तिसारो भगवानिति तात्पर्यार्थः इति शिवम् ॥ ९ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचिता-यामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां क्रियाधि-कारे क्रियाशक्तिविमर्शः प्रथमः ॥ १ ॥

---

१ 'करण्येकलो' ग.। १ 'यथाहि' इत्यारभ्य 'न संहारः' इत्यन्तं नास्ति ख.।

## अथ द्वितीयो विमर्शः ।

संजीवनतुर्यकलाकलितविबोधं समस्तभावानाम् ।
दूषणविषशीर्णानाममृतोद्गारं शिवं वन्दे ॥

अथ

'क्रियासंबन्ध.................. ।'

इत्यादिना

'तेन न भ्रान्तिरीदृशी................ ।'

इत्यन्तेन श्लोकसप्तकेन अप्रतिहतमेव स्वातन्त्र्यं क्रियाशक्तिरूपं भगवतो निर्वाह्यते परदूषितस्य क्रियासंबन्धादिपदार्थस्य बाह्यवादे अनुपपद्यमानस्य अत्र दर्शने पूर्णैव उपपद्यमानता—इति विमृशता । एकानेकरूपं क्रियादि विरुद्धधर्माध्यासात् परैर्दूषितमपि अवश्य-समर्थनीयमिति एकः समस्तवक्तव्यग्रहणकसूत्रकल्पः श्लोकः, एकस्तत्र समर्थनोपपत्तिसूचकः, निर्विकल्पकानुभववेद्योऽपि अयं पदार्थवर्गो विकल्पावसरे एव स्फुटरूप इत्यर्थसूचक एकः, द्वावे-कत्वानेकत्वविषयविभागनिरूपिणौ, प्रथमसूत्रोद्दिष्टसंबन्धस्वीकृत-क्रियाकारकभावादिस्वरूपाभिधायी षष्ठः, सप्तमे अर्थक्रियोपयोग-मेषां चिन्तयति,—इति प्रकरणार्थः; प्रतिसूत्रमर्थस्तु विचार्यते । निर्माणशक्त्या निर्मीयमाणस्य अवभासनैव निर्माणं, न अन्य-दिति उक्तम् । सा च द्विचन्द्रादेर्नीलसुखादेस्तन्निष्ठस्य क्रिया-सामान्यादेरविशिष्टा,—इति असत्यं, सत्यं, संवृतिसत्यमिति विभा-गेन कथं व्यवहारः । सत्यं, संवृतिसत्यं न किञ्चित् सामान्यादेः सत्यत्वात्, असत्यं तु भवति द्विचन्द्रादि । तथाहि इयमत्र उप-पत्तिः—इति सूत्रेण आह

**क्रियासंबन्धसामान्यद्रव्यदिक्कालबुद्धयः ।**
**सत्याः स्थैर्योपयोगाभ्यामेकानेकाश्रया मताः ॥ १ ॥**

संवित्तत्त्वादन्यत्र या क्रियाबुद्धिः क्रियाभास एकानेकरूपं मायाशक्तिविच्छेदितं क्रियातत्त्वं विषयत्वेन आश्रयस्तल्लग्नः सत्य एव यतः स्थिरो बाधकेन अनुन्मूल्यमानविमर्शः संवादवांश्च अभिसंहितायां ग्रामप्राप्तिलक्षणायां क्रियायामुपयोगी । भावो हि अर्थक्रियां कुर्वन् भेदाभेदं स्वीकरोति संवादवांश्च । तत्र यत् तस्य अव्यभिचरणीयं स्वरूपमेव, सा मूर्तिः; यदाभासबलेन अस्वरूपमपि स्वरूपीभवति मूर्तिलग्नमेव, सा क्रिया । तथाहि तत्तद्देशकालाकारभिन्नचैत्रमैत्रशरीरं तदेव इदमिति एकतामत्यजदेव निर्भासते । तदेव क्रिया—चैत्रो गच्छतीति । न तथाभूतायामस्यां विमर्शोऽनुवर्तमान उन्मूल्यते कदाचित्, यथाध्यवसायं चैत्रग्रामप्राप्तिरखण्डितैव अर्थक्रिया; द्विचन्द्रसंवेदने तु उन्मूल्यते एव अनुविवर्तिषितो विमर्शः; आह्लादोद्वेगहेतुत्वेऽपिच एकचन्द्रजातीयतया अधिकतिमिरापसारणप्रभृत्यर्थक्रियोपयोगवैकल्यादसत्यो विषयस्य । एवं सम्बन्धादिषु कालान्तेषु उत्तरसूत्रानुसारेण योज्यमिति सूत्रार्थः । क्रियाशक्त्यैव व्याख्यातया बाह्यापि क्रिया व्याख्यातैव भवति,—इत्याशयेन वृत्तौ क्रियाशब्दः सौत्रो दृष्टान्तस्य अयं द्वन्द्वनिर्देशः इत्येवं व्याख्यातः । **सर्वदोपयोगिनाम्**' इति स्थैर्यमुक्तम् '**अर्थवत्त्वेन**' इति अर्थक्रियोपयोगः । सूत्रार्थमवतारयन् प्रकरणेन प्राच्येन प्रकरणान्तरं योजयति '**तदेवम्**' इत्यादिना । क्रिया अत्र दृष्टान्तत्वेन उपात्ता,—इति सूचयति यथातथाशब्दाभ्याम् । असद्दर्शन एव एतदुपपद्यते इत्याह '**तदेकेश्वर**' इत्यादि । नच एतदसमर्थ्यं उदासितुं युक्तमित्याशयेन सतताविगीतपदेन स्थैर्यम् '**एक**' इत्यादिना स्वरूपं '**निर्वाहित**' इत्यादिना अर्थक्रियावत्त्वलक्षणमुपयोगं व्याचष्टे । '**प्रकाशित**' इत्यादिना ईश्वरप्रत्यभिज्ञोप-

**योगमेतस्य सूचयति** । उक्तं हि

'................संबन्धे सावधानता ।' (वि०भै०१०६)

इति । आभासमानतैव भावानां रूपं, नतु अर्थक्रियाकारित्वम्; साच एषामस्ति,—इति हृदये गृहीत्वा अर्थक्रियाकारित्वं परीक्षते '**इह**' इत्यादिना '**उक्तं वक्ष्यते च**' इत्यन्तेन भूयसा सन्दर्भेण । तत्र अर्थक्रियाकारित्वं सत्त्वस्य तादात्म्याद्व्यभिचारिधर्मतया व्यभिचारिधर्मतया च स्वरूपं वा लक्षणं वा लक्षणसमीपवृत्तित्वेन उपलक्षणं वा,—इति विचारयति । तत्र स्वरूपत्वमौपचारिकमिति ब्रूते '**उपचारात्**' इति । तथाहि शाखादिमत्तैव वृक्षतेति एकव्यावृत्तिमात्रं पर्यायरूपत्वात् न तथा असन्नर्थक्रियां करोति इति लोके पर्यायत्वेन अविदितत्वात् । नच लक्षणत्वमिति दर्शयति '**लक्ष्यते च**' इति । हेतुमति लिङ्ग लक्षणताया हेतुरव्यभिचारणीयता अन्योन्यम्, अन्यथाहि अव्याप्त्यतिव्याप्ती स्यातामिति दर्शितम् । यद्यपि हि साक्षात्कारिज्ञानं कल्पनाशून्यं वेदनं चेति न इदं पर्यायरूपं भिन्नव्यावृत्तिनिष्ठत्वात्, तथापि परस्परमव्यभिचारात् लक्ष्यलक्षणभावोऽनयोः । '**अन्येषाम्**' इति ज्ञेयानाम् । अनेन इदमाह—यस्यैव यत् साक्षात्कारानुभवरूपं ज्ञेयस्य, तस्यैव तत् प्रत्यक्षं; तेन विकल्पः स्वत एव प्रत्यक्षं; नतु अर्थ इति । प्रकृते तु न अयं न्यायो व्याप्तेः,—इत्याह '**तत्तु**' इति लक्षणत्वेन अभिमतम् । '**ततश्च**' इति अर्थक्रियाकारित्वस्य अभवनात् । चो विरोधं दर्शयति । लक्षणाभावे लक्ष्यं भवति,—इति हि विरुद्धम् । क्रियावत्त्वमपि न द्रव्यस्य लक्षणम् । अनन्यवृत्तितामात्रेण लक्षणत्वे घटत्वाभिसम्बन्धोऽपि अस्य लक्षणं स्यात् । नच अन्यतो व्यावर्तकत्वमात्रमेव लक्षणस्य स्वरूपम्, अपितु लक्ष्यते येन

तद्रूपसर्वस्वं निश्चीयते। नच एतद्व्याप्तिमतः संभवति। तस्मात् क्रियावत्त्वमुपलक्षणं, स्वातन्त्र्यं तु उपलक्षितं सत् तस्य लक्षणमिति। अथ उपलक्षणतां शङ्कते '**अथ**' इति। एतत् दूषयति '**तथापि**' इति अस्मिन् वाक्ये यदुक्तं, तदपि न लभ्यते किञ्चिदित्यर्थः। '**ततः**' इति स्वरूपव्यतिरेकेण तस्य अनुपलम्भादर्थक्रियाविशिष्टतायामेव तत्सामर्थ्यस्य उपलक्षणं संवेदनं स्यादिति संभाव्यते '**यदि परम्**' इति। अरुचिं सूचयन्निदमाह—जलं स्नानपानादिकालेऽपि न जलत्वादधिकेन रूपेण लक्ष्यते, प्रमाता केवलं तत्कार्यावलोकने सति करणमिदं, इदं समर्थमिति विकल्पयन् व्यवहरतीति। अथ परो व्याप्तिमपसारयन् लक्षणतां प्रत्युज्जीवयति '**ननु**' '**अन्ततः**' इति अन्यस्य ज्ञातुरभावे इत्यर्थः। '**तदुपलक्षितम्**' इति तल्लक्षितमित्यर्थः। एतदपि अतिव्याप्त्यापादनेन दूषयति '**तत्रापि**' इति। '**ज्ञेयत्वम्**' इति ज्ञेयत्वबलेन केवलं कल्पनीयमिति यावत्। '**ततश्च**' इति ज्ञेयत्वबलोपनतं ज्ञानजननं द्विचन्द्रकेशमक्षिकादावसदभिमतेऽपि अस्ति,—इति अतिव्यापकम्। ननु न ज्ञेयत्वमात्रबलेन ज्ञानं प्रति जनकत्वमर्थस्य, अपितु सति अर्थे पूर्वभाविनि भवति ज्ञानमिति योऽन्वयोऽसति न भवतीति च यो व्यतिरेकः, तदात्मकं तद्द्वारेण व्यवहरणीयम्। तदेतदपि न दृश्यते '**ज्ञेयता**' इत्यादिना '**ज्ञानात्**' इति कार्याभिमतात्, अनेन अन्वयाभावो दर्शितः। ननु पर्वतस्य उपत्यकामाश्रितो धूमादग्निमनुमाय यदा अधित्यकाधिरूढस्तं पश्यति, तदा तस्मात् दर्शनात् पूर्वसिद्धो वह्निरस्ति,—इति सिद्धोऽन्वयः। एतत् न सार्वत्रिकमिति दर्शयति '**नहि**' इति सहचार्येकसामग्र्यधीनं कपित्थे मृदुस्पर्श इव नीलरूपस्य। ननु नीलज्ञानं

कादाचित्कं तत्र चक्षुरादिषु सत्स्वपि न सदा भवति, ततोऽन्य-निमित्तकेन अनेन भवितव्यम् । एवं यस्तदभावे कार्यस्य व्यति-रेकः प्रसज्यमानोऽभावः, ततः प्रसङ्गविपर्ययद्वारेण पूर्वसिद्धो-ऽर्थो हेतुरस्ति,—इति सिद्धं ज्ञानजनकत्वं सत्त्वमिति । एतदा-शङ्क्य दूषयति **'कार्य'** इत्यादिना । तुर्भिन्नक्रमः । **'यदि तु'** इति यदि पुनरेवमुच्यते—कार्यव्यतिरेकेण अपि भवति अनु-मानमिति, तदा भवदपि न स्वार्थं पुष्णाति यतस्तादृगनुमानं कस्यचिदेव भासनसमकालात् भासमानात् नीलादन्यस्यैव कारण-मात्रस्य स्यात् । **'तस्यैव'** इति आभासमानस्य । भासनसम-कालस्य नीलादेः सत्त्वं किं स्यादिति च प्रस्तुतो विचारः, तदेव हि विचारणीयं, न पुनरितरत् नरशृङ्गप्रायम् । तत एव आभा-समानस्य भासनादनर्थान्तरत्वे सिद्धे कृतकृत्यमानी विज्ञानवादी यदाह

'बाह्येऽप्यर्थे ततो भेदो भासमानार्थतद्विदोः ।'

इत्यादि, तत्र च तज्ज्ञानकारितया कारणस्य कस्यचिदर्थक्रिया-कारित्वं सत्त्वमिति सिध्यति; नतु आभासमानस्य तज्ज्ञानसम-कालस्य नीलस्य । ननु अस्तु भासनसमकालस्य अपि कारणत्वम् । अत्र एतदेव तावत् वक्तव्यं—तुल्यकालयोः कार्यकारणभावः इति, एतत् तु न उक्तं प्रमेयान्तरपरिघटनायेति दूषणान्तरम् । अत्र आह **'तुल्य'** इति भासमानतैवहि तदानीं कारणता-व्यवहारे निमित्तं, तच्च अविशिष्टं द्विचन्द्रेऽपीति भावः । अथ सतोरेव अन्वयव्यतिरेकयोर्यत् निर्भासमानं प्रतिभासनतुल्य-कालं, तदेव ज्ञानकारणं, तौ नीले स्तः, तत् विज्ञानात् पूर्वम-भूदेव, नतु द्विचन्द्रे । एतदाह **'तथा'** इति । ननु योऽसौ भासनात् पूर्वकालभावी नीललक्षणो यदन्वयव्यतिरेकानुवर्ति

भासनलक्षणं ज्ञानं, स एव भासमानः क्षणो न भवति; ततश्च स एव प्राच्यो दोषो भवेत् '**तस्यैवच अर्थक्रिया**' इत्यादिः । एतत् परिहरति '**नच**' इति । त्वद्दर्शने तावदयं दोषो न अवतरति,—इति निष्प्रत्यूहमुद्यतां त्वया अर्थक्रियाकारित्वं सत्त्वमिति दृष्टिः । तेन भवत्पक्षे कारणं ज्ञानस्य यत् , तदेव निर्भासते इति अविरुद्धमेव । एवंहि भवतः संवेद्यस्य धर्मः पारिमित्यलक्षणः कालः, वेद्यश्च वेदनमेव, नच तत्र कालस्पर्शः; स्वरूपमेवच क्षण इति च परिभाषा निमेषादिक्रियान्तरेण, तस्य कः सन्बन्धः इति का क्षणिकतेति । ननु भवता इदानीमुत्सवकारिणा दरिद्रेण इव परदर्शनपरिपूरणं कामं कृतं, निजा तु दृष्टिरपूरितैव । पूरिता च,—इत्याह '**क्षणभङ्गेऽपि**' इति । सन्तानाभिप्रायेण तदेव पूर्वोत्तररूपमिति अभिमानात् सुसमर्थोऽयमर्थो यद्यपि, तथापि किमियता यत्नेन, यतः पूर्वक्षण उत्तरं क्षणं, सोऽपि अनन्तरमित्यादिप्रबन्धेन अर्थक्रियाकारित्वं सिध्यत्येव सत्त्वमिति परेण समर्थितं स्वपक्षं दूषयति '**अत्र**' इति । अन्वयव्यतिरेकानुगृहीतं निर्भासमानं ज्ञानकारणं नीलमित्युच्यमाने द्विचन्द्रोऽपि कस्मात् न एवंविधः,—इति न निश्चितम् । नहि अनिर्भासने प्राच्यस्य नीलक्षणस्य द्विचन्द्रक्षणस्य वा विशेषः कश्चित् । अत्र अपरमाशङ्कते '**नीलज्ञानम्**' इति । '**अन्यत्**'इति तिमिरादि । '**नास्ति**' इति वेदवाक्यादेस्तथा निश्चय इति मन्यते । '**तथा**' इति पूर्वभासि सत् निर्भासमानमधुनेत्येवम् । '**नान्यत्**' इति वासनाप्रबोधादि । ननु यदि द्विचन्द्रोऽपि पूर्वक्षणे स्यात् भासनक्षण इव, तदूर्ध्वमपि स्यात्; नच एवमस्ति निवृत्ते तिमिरे तदैव तददर्शनात् । अत्र आह '**तथा**' इति ज्वालावत् निरन्वयविनाशस्य अपि संभाव्यमानत्वात् घटादेरपि तथाभावात् कपालादिस्थानी-

यस्य च कार्यमात्रस्य यादृशतादृशस्य धूलिपवनपुञ्जप्रायस्य मिलितैकपिण्डीकृतचन्द्रस्यैववा द्विचन्द्रोपादानकतया सुकल्पत्वात्। यच्च अपि उक्तमुत्तरोत्तरस्वसन्तानगतक्षणकारणत्वादिति, तदपि अनेनैव प्रत्याह '**तथा**' इति। ज्वालायामन्त्यः क्षणो न कंचित् सजातीयं प्रसूते क्षणमितीयता अर्थक्रियाकारणं सत्त्वमिति यत् प्रत्यावर्तितं, तत् दूषितमेव। अधुना अधिकदूषणाभिधित्सया '**अथापि**' इत्यादिना तत् प्रत्यावर्तयति। यदुक्तं 'अथ व्यभिचार्यत्वेऽपि यथा काक' इत्यादि 'रूपमेव' इति 'सस्वरूपतैव सत्त्वम्' इति युक्तम्, तच्च एवमनुसृतं भवतीति एवकारः। ननु स्वरूपविशेष एव चेत् तत्, तर्हि अर्थक्रिया अस्य किमर्थमुपलक्षणीकृता। उच्यते '**तत् केवलम्**' इति। '**विवेचनीयम्**' इति शक्येऽर्हे च। '**निश्चीयते**' इति सत्त्वासत्त्वविभागेन। '**केचित्**' इति आबाल्यादभ्यस्तव्यवहाराः प्रतिभानादियुक्ताश्च। एतत् प्रतिवक्ति '**अत्रापि**' इति। '**मणि**' इति वैधर्म्येण। मणेर्हि गौरसंस्थानप्रमाणवर्णप्रभास्पर्शशब्दविशेषयोगात् जात्याजात्यव्यवस्था युक्ता, तच्च एवं येन सा उपदिश्यते परस्मै। केशस्य तु रूपस्वरूपलक्षणस्वभावस्य न वैचित्र्यमुपलभ्यते व्युत्पन्नैरपि। तिमिरपरीतनेत्रतायां व्युत्पन्नोऽपि केशं केशान्तरजातीयमेव पश्यति। तिमिरान्ममैवमित्यपि संवेदयमानो न न पश्यति तावता, अपितु कारणान्तरप्रभावितोऽसौ स्यात्, नतु न केशः। ज्ञानं तत् तथेति चेत्, नीलेऽपि न दुर्वचमेतत्। ननु स तावत् केशोऽन्य एव व्युत्पन्नस्य प्रतिभासते यो न स्पृश्य इत्याशयेन आह '**अस्तु वा**' इति। '**तत्**' इति स्वरूपवैचित्र्यम्। '**पारिभाषिकी**' इति स्वरूपे हि सति वैचित्र्यं, स्वरूपमेवच सत्ता,—इति युक्तम्। तदेकतरवैचित्र्य एव सत्त्वम्, न अन्यत्रेति समय-

मात्रमेव इदम् । एतदेव घटयति **'तथाहि'** इति नञ्प्रयोगे प्रसज्यप्रतिषेधात् तुच्छतैववा प्रतीयते असूर्यंपश्येति यथा । अत्र हि दृश्यमानविषयदृगभाव एव तात्पर्यम्, शङ्कितपराकरणदिशा तत्सदृशता वा अब्राह्मणेन हुतमिति यथा । अत्र हि क्षत्रियप्रतिपत्तिः । 'लाक्षणिकविरोधसम्भवे सति वस्तुस्वभावप्रतिपिपादयिषया प्रसज्यप्रतिषेधयुक्तवस्त्वन्तरप्रतिपत्तिर्युक्ता' इतिनयेन तदन्यरूपतामात्रं वा यथा सर्वत्र अनुमानादौ । द्वैराश्यकल्पनायां नीलानीलाग्न्यनग्निब्राह्मणाब्राह्मणादौ त्रिधाऽपिच असत्ता न उपपद्यते इति दर्शयति **'किं सत्ता'** इत्यादिना । **'अथ'** इत्यादि तृतीयप्रकारनिराकरणम् । **'यदि नाम'** इति अभ्युपगम एव अयमिति दर्शयति । ननु दृश्यत्वे अस्तु एवम्, विकल्पनीये तु का वार्ता । तत्र आह **'यदपि'** इति । तदुक्तं भट्टपादैः 'तत्राभेदो भ्रमः' इति 'अवपुः' इति च । एतदुक्तं भवति—न तावदिह निःस्वरूपता युक्ता केशोण्डुकपीतशङ्खचञ्चलपादपालातचक्रादिसंवेदनानां मूर्च्छाकल्पत्वेन अभेदप्रसङ्गात् । भेदेन सस्वरूपता चेत्, इयमेव तर्हि असामयिकी सद्रूपता,—इति स्थितमेतत्—प्रकाशमानतैव सत्तेति। एतत् प्रमेयमुपसंहरन् प्रकृते उपयोजयति····मित्यादिना। ननु इयता तैमिरिककचप्रभृतिना विकल्प्यरूपे घटाभासादिना तुल्यैव सत्ता क्रियासम्बन्धादेः प्रतिपादिता भवति । नच एतदनङ्गीकृतं परेण । नच इयता परीक्षणीयता युक्ता । अर्थक्रियार्थिनो हि वस्तु परीक्षन्ते लौकिकास्तदुपदेशोद्यताश्च परीक्षका इत्याशङ्कां निकृन्तति **'उपयोगित्वेन'** इति **'स्यादेव'** इति । ततश्च द्विचन्द्रादेरपि उपदेश्यता स्यादिति चोद्यशेषः । एकस्मिंश्चन्द्रे यादृशी दृष्टा तेन अर्थक्रिया, न तद्विगुणा सैव द्विचन्द्रात् । ततश्च अपरशशिसमान-

जातीयो द्विचन्द्रो न भवति अपरकेशस्थानीयश्च तैमिरिककेशः। आभासान्तरभावाभावतश्च एवं, न केशाभासेन । नच तथा तत्र केशादिना ख्यातव्येन रूपेण ख्यायते इति भ्रान्तत्वमसत्यता चेति । तेन आभासस्य एव सत आभासान्तरमिश्रितादभिलषितात् केशाभासादन्यो यः केशाभासः, तत्र असत्यसंज्ञा । तदाह '**उक्ता**' इति। '**सत्याभासाः**' इति वृत्तौ कर्मधारयपक्षेण तावत् विवृणोति '**आभाससारत्वात्**' इति । ननु सम्बन्धादय एकानेकस्वभावाः, नतु तद्विषयाः । सत्यं, यत्तु बाह्यमेकानेकरूपं सम्बन्धादि, तत् बुद्ध्याभासानां विषयः; ततो विषयिणो धर्मं विषयेषु उपचर्य इत्थमुक्तम् । उपचारे प्रयोजनमाह '**आभाससारताम्**' इति । एवमुपचारे सति यत् परिनिष्ठितं जातं, तत् दर्शयति '**सम्बन्ध**' इत्यादिना । '**अग्रे**' इति

'स्वात्मनिष्ठा विविक्ताभा················ ।' (२।२।४)

इत्यादिसूत्रेषु। सत्यपदस्य व्यवच्छेद्यं दर्शयति '**आभासमानत्वादेव**' इति । ननु सत्यत्वं विषयस्य वक्तव्यं, नतु आभासानां विषयिणां; तत् कथं कर्मधारयः । ननु सत्यानामाभासाः इति षष्ठीसमासो युक्त एकत्रैव वाक्ये संबन्धादीनां मुख्योपचारविभागेन युगपदाभासेभ्यो भेदाभेदयोगात् । एतत् परिहरति '**आभाससत्यतयैव**' इति । न अयमुपचार उपचार एव, मायापदापेक्षया हि अयमुपचारः । यथा उच्यते

'भगवदधिष्ठितत्वात् भगवानेव सर्वम् ।'

इति । ततो न अत्र आभासादाभासमानस्य भेदः कश्चित् । तदाह '**तद्रूपत्वात्**' इति । एवं मायापदेऽपि परमार्थपदमनुज्झता कर्मधारयेण व्याख्यातम् । अथ बहुव्रीहिपक्षाश्रयेण

मायापदमेव आश्रयन् व्याचष्टे '**अथवा**' इति। '**अमीषां तु**' इति सम्बन्धादीनाम् । '**सोऽपि**' इति उपयोगः। '**अत एव**' इति अस्मत्प्रसाधितैरेव न्यायैर्योऽर्थक्रियोपयोगः, तत एव हेतोः,— इति वैयधिकरण्येन तसिपञ्चम्यौ योज्ये, अन्यथा एवकारद्वयमसङ्गतमेव स्यात् । '**एते**' इति सम्बन्धादयः । एतदेव घटयति '**संवृति**' इत्यादिना । केन वचसा ते ऐन्द्रियिकात् मानसाच्च भ्रमात् पृथगुक्ताः । आह '**तथाच**' इति । यदिहि भ्रमरूपतो वैलक्षण्यं संवृतिसतोऽभिमतं स्यात्, तत् भ्रान्तिशब्दोक्तात् मानसात् हि भ्रमात् तैमिरोपलक्षिताच्च ऐन्द्रियिकात् न अस्य पृथक् निर्देशो युक्तः स्यात् । भ्रान्तेरेव प्रपञ्चात् तथा निर्देशः कुतश्चित् विशेषलेशात इति चिरन्तनप्रामाणिकव्याख्यानं दूषणाय आचष्टे '**तत्पुनः**' इति। अनेन स्वव्याख्यानात् विशेषो द्योतितः। एतत् न सहते '**एवं खलु**' इति। खलुशब्द उपहासं द्योतयति। अनेन इदमाह—भ्रान्त्यन्तरात् विशेषलेशोऽत्र व्याख्याने न लभ्यते येन पृथगभिधानार्हता भवेदिति। ननु विकल्प्येन रजतेन दृश्यं कथमाच्छाद्यते । सामान्यादिना अपि तर्हि कथम्। दृश्यावष्टम्भेन अध्यवसायादिति चेत्, समानमिहापि एतदिति निरूपयति '**शुक्तिदेश**' इति । ननु न तद्देशावष्टम्भनमात्रमवच्छादनं, किन्तु बाधकयोगेऽपि सदातनप्रसरत्वं येन तद्विविक्तोऽर्थो निजेन वपुषा न कदाचिदवसीयते इत्येवंभूतमवच्छादनम् । तच्च सामान्यादिनैव विकल्पनीयेन दृश्यते, न रजतादिना,—इत्येतेन लेशेन भ्रान्तेः पृथगुपादानम् । एतत् '**अथापि**' इत्यादिना अनुभाष्य दूषयति '**तदेतत्**' इति। इह कारणमविद्याशक्तिस्तिमिरमिव कचकूर्चके, दूरतासादृश्याप्रणिधानानीव च रजते। '**निवर्तन्ते**' इति न तावता विशेषलेशः कश्चित् भ्रमत्वस्येति मन्तव्यम्, ननु परेण

उक्तं–भ्रमव्यवहारोऽत्र नास्ति–इति । '**बाधज्ञानेऽपि**' इत्यत्र च्छेदः । '**तस्य**' इति बाधज्ञानस्य । हिशब्देन हेतुत्वमस्य द्योतयता अयमर्थ उक्तः–ज्ञातबाधत्वेन यतः प्रवृत्तिर्न भवति द्विचन्द्रादिभ्रान्तितः, ततोऽप्रवृत्तस्य विसंवादनं विप्रलम्भात्मिका विडम्बना न संभवति अप्रवृत्तत्वादेव; तथापि न तत् सत्यरूपग्राहि,–इति भ्रान्तमेव द्विचन्द्रसंवेदनं भवन्मते युक्तम् । यत्तु

'भ्रान्तित्वे चावसायस्य…………… ।' (१।३।५)

इत्यत्र उक्तम्–नहि ऐन्द्रजालिकस्य असत्यवस्तुदर्शनमसत्यत्वेनैव ज्ञायमानं भ्रान्तिव्यपदेश्यमिति, तत् परदर्शनाभिप्रायेणेति न पूर्वापरविरोधः । '**तादवस्थ्यात्**' इति अन्यभ्रमेभ्यो निर्विशेषत्वात् । '**अन्यथा**' इति सविशेषत्वे यतो भ्रान्तिमात्ररूपतैव । '**तत्**' इति ततो हेतोः । ननु संवृतिबुद्धिरेवमाच्छादिका भवति यदि बुद्ध्युत्थापित एव न कदाचिदपि यो दृष्टः, स आरोप्यते सामान्यादिरिति आरोपे तुल्येऽपि अनेन विषयेण सांवृतस्य पृथगुपादानम् । एतत् दूषयति '**नापि**' इति चन्द्रस्य द्वित्वस्य दृष्टतैवेति चेत्, अनेकग्राह्यसाधारणस्य अपि एकस्य दृष्टतैवेति तुल्यो विधिः । एवमियता भ्रान्तित्वस्य न कश्चिदधिको विशेष इति उपपाद्य भ्रान्तिविशेषता अपि न संमता ग्रन्थकृत एव द्वन्द्वेन निर्दिशत इति ब्रूते '**समारोप्य**' इत्यादिना । युगपदधिकरणतायां द्वन्द्वः । सा च तुल्यस्वरूपयोरेव । सामान्यं च सकलविशेषानागूर्य वर्तमानं विशेषान्तरवन्तमपि विवक्षितं विशेषं क्रोडीकुर्वन् पृथगप्रतिलब्धशब्दनिवेशमेव करोतीति । '**आञ्जस्येन**' इति लोकप्रतीत्या स्पष्टया । दान्तवलीवर्दादिशब्दैरेवहि आर्यलौकिकाः पुङ्गवानाहुः, गोशब्देन तु स्त्रीगवीरेवेति तथैव प्रतीतिः । गोमदिदं नगरमित्युक्तौ हि दधिक्षीर-

सम्पत्तिरेव निर्भाति। **'सांवृतत्वम्'** इति सांवृतस्य लक्षण-मेतावन्मात्रमिति परेण अनिच्छतापि इयदेव अङ्गीकर्तव्यम्। तल्लक्षणं लक्ष्यपदेन सह निर्दिशति **'यत्तथा'** इत्यादिना। अस्मिंश्च लक्षणे अवभासनोपयोगाभ्यामपासिते अनुपपन्नत्वे अस्माकं जयः, अनुपपन्नतया पुनरपाकीर्णे उपयोगे परस्येत्यनेन आशयेन परापेक्षां तावदाह **'ननु'** इति। अवयविना सुप्रसिद्धेन तुल्ययोगक्षेमः सम्बन्धादिः पदार्थराशिरिति अवयविनमेव प्रसिद्धं पुरस्कृत्य अयं विचारः। **'तथैव'** इति एकस्थूलरूपतया। **'तथैवच न'** इत्यत्र हेतुः **'स्थूलस्य'** इत्यादि। ननु परमाणवो बहवः, ते कथमेकां नियमेन अर्थक्रियां कुर्युः। उच्यते—रूपादयो भिन्ना यथा एकं ज्ञानं जनयन्ति नियताः, तथा परमाणवोऽपीति। व्यक्तय एवच भिन्नास्तदेवमुपयुक्तनयेन एकाकारां बुद्धिं जनयन्ति। भिन्ना एव च क्षणा एकौदनसम्पत्तिफलाः पाकव्यपदेश्याः। ननु कस्मादेषैव व्यवस्था सर्वत्र,—इत्याशङ्क्य हेतुमाह **'नहि'** इति। इन्द्रियादयो भिन्नत्वेनैव संविदिताश्च अध्यवसिताश्च बीजभूमिजलातपवदिति त एव एकं ज्ञानमङ्कुरबुद्धिं ददीरन्निति युक्तं नाम, इहतु एकमवभातमध्यवसितं च स्वकार्यैकारि,—इति कथमन्यस्य प्रकल्पनम्। नीलेऽपि अवभाताध्यवसिते अर्थक्रियाकारिणि पीतमर्थक्रियाकारि,—इति हि न निर्बन्धनं कल्प्येत। ननु इह अनुपपद्यमानता अस्ति,—इति अन्यकल्पनमित्याशङ्क्य तामेव दूषयति **'एषैवच'** इति। अवभाततैव अत्र नास्ति,—इत्याह परः **'ननु'** इति। अत्र उपपत्तिमाह **'स्थूलावभासो हि'** इति। **'युक्तः'** इति वैतत्यं हि देशभेदः, सच स्वरूपभेदमन्वायतते इति सर्वतःसङ्कुचितो मूर्तितः कालतश्च यः, स एव विरुद्धधर्माध्यासवन्ध्यः परमार्थः परमाणुः

क्षणश्च। ननु प्रतिभासत एव स्थूलता। सत्यं, सा तु निरन्तरबहुतरपरमाणुप्रतिभासनान्तरीयकस्वभावैव द्वित्वमिव घटपटावभासमात्रनान्तरीयकम्। ननु यदि विकल्प एव स्थूलः, ततः किम्। आह '**निर्विकल्पश्च**' इति। एतत् दूषयति '**तत्**' इति। विकल्प्यतानिबन्धनमसत्यत्वमाचक्षाणेन तद्व्यापकविरुद्धनिर्विकल्पत्वोपलब्ध्या विकल्प्यत्वव्याप्तस्य असत्यत्वस्य हठादेव निषेधः कर्तव्य इति द्विचन्द्रपीतशङ्खादीनां सत्यत्वप्रसङ्गः। निर्विकल्पकता च न प्रामाण्यस्य व्यापिकेति दर्शयति '**अनुमान**' इति। स्यादेतत्। वस्तुमूलः कोऽपि विकल्पः, कोऽपि अविद्यामूलः। वस्तुमूले प्रथमप्रत्यक्षं निर्विकल्पकमेव प्रतपति, तन्मूलमेव तत्र प्रामाण्यम्; द्वितीये तु अप्रामाण्यमेव, अवयव्यादिविकल्पश्च अविद्यामूलः। एतदाशङ्कमानो दूषयति '**यदि च**' इति। '**ततः**' इति। अनुभववासना चेत् तद्विकल्पोत्थापिका, तर्हि अविद्यावासनाकल्पने किं निदानम्। ततश्च अपिशब्दोऽनुपादेय एव। एतदेव घटयति '**अतश्च**' इति। यदि हि अनुभवस्त्यज्येत, तत् नीलांशोऽनुभूयमानः, तद्गतं च अवभासनं अनुभवस्य यत् स्वभावभूतं तदनुभूयमानातिरिक्तस्थूलात्मकविकल्प्यैकनिष्ठे विकल्पे सर्वथा परिहीयेत। परः सत्यपि अनुभववासनाया उपयोगेऽस्ति अविद्यावासनाया अवकाश इत्याह '**तत्तु**' इति। अननुसरणं स्फुटयति '**अनुभवो हि**' इति। विरुद्धधर्मयुक्ता दिग्भेदादिभेदभाजो बहवः परमाणवो घटाद्याकारेण स्थूलस्वलक्षणस्वभावाः—अनेकधर्मो हि स्थूलता, एकधर्मस्तु परमाणुत्वमिति अवबोधमाह बाह्यार्थवादी—प्रतिभासन्ते यस्मिन्; तथा घटान्तरादन्यदेशकालात् विरुद्धधर्मयोगी घटाद्याकारो यः स्थूलः स्वलक्षणात्मा, न तु सामान्याकारः, स प्रतिभासते यस्मिंस्तादृगनु-

भवः; एतद्विपरीतस्तु विकल्प इति ब्रूते '**विकल्पाभासस्तु**' इति। '**एकत्वम्**' इति नतु बहवः। '**अनुगतत्वम्**' इति न स्वलक्षणम्। ननु एवं सदैव विकल्पोऽविद्यावासनामपि उपजीवति, ततश्च असावप्रमाणमिति अनुमानविकल्पस्य कथं प्रामाण्यमित्याशङ्क्य परिहरति '**केवलम्**' इति। '**अतद्ग्राहिणापि**' इति। वस्तु अगृह्णतापि अतत्कारिणस्तदर्थक्रियाकरणशून्यादर्थात् यत् व्यावर्तनमपोहनं व्यवच्छेदात्मकं संविद्रूपविधिविलक्षणनिषेधस्वभावं, तदेव परं कर्तव्यं यस्य, तस्य भावः; तेन हेतुना यस्य वस्तु विकल्पेन अवसीयते; ततो हेतोर्बाह्येऽर्थे औचिती सा विकल्पस्य। तामेव घटयति '**बाह्येऽपि हि**' इति। '**तत्र च**' इति विकल्पे सति। '**यत्र**' इति अनुमाने, प्रत्यक्षानन्तरभाविनि च अध्यवसाये। '**अन्यत्र**' इति स्वतन्त्रविकल्पे। '**तदर्थ**' इति विकल्पः। '**तदर्थे**' इति योऽर्थः परम्परायातं विकल्पमजीजनत्, तस्मिन्नर्थे। ननु विकल्पयस्य असत्यत्वम्, असत्यस्य च न उपयोगः क्वापि,—इति स्थापिते सांवृतस्य तर्हि किं लक्षणमित्यागूर्य आह '**तत्**' इति विकल्पविषयीकृतस्य प्रतीतिः सार्वत्रिकी सदातनी च यतो न निवर्तते। केशरजतादि तु न सार्वत्रिकतया सदातनत्वेन वा परिस्फुरति, ततश्च भ्रान्तिविशेष एव सांवृतं, द्वन्द्वस्तु भ्रान्तिशब्दस्य आसमञ्जस्येन केशरजतादावेव प्रसिद्धेरिति त्वत्प्रतिसमाधानादेव लब्धः। ननु यदस्माभिरुक्तं लक्षणं—क्वचिदुपयुज्यतेऽपीति, तत् किमिति त्यज्यते। आह '**उपयोगोऽपि**'। इति '**अन्यथा**' इति अनेकतया रक्तस्य अमतया च। '**सत्त्वापि**' इति प्रदीपः। '**तस्य**' इति तैमिरिकस्य। '**तथा**' इति अन्यथारूपेण। '**अभीष्टम्**' इति वस्तुप्रकाशनादि। अपरिहार्यतिमिराविद्यादेरनिवृत्तौ यत् तथेति विचित्रं

मिथ्यादर्शनं तदुपायमात्रं प्राप्तये यस्य प्रदीपस्य परमाणुसञ्चयस्य वा, तस्मादेव अर्थक्रिया, नतु अवस्तुनो विकल्पात्। नहि विकल्पे किञ्चिदाभासते, अभिमानमात्रं परं तत्र, नतु आभासः कस्यचिदिति । अत्र पूर्वपक्षे तदिति समुचितमुत्तरं यत्, तदुक्तप्रायम्, उक्तः प्रायः प्रपञ्चो यस्य तदिति वा उत्तरवाक्यार्थपरामर्शः । अथवा यतोऽयं पूर्वपक्ष एवंभूतः, तस्मात् न अत्र अधिकं वक्तव्यम् । अनुभवस्य अननुसरणं यत् कथञ्चिदुक्तम्, तत् दूषयिष्यन्ननुभवानुसरणं तावदाह **'विकल्पेऽपि'** इति । अननुसरणं तु कथं, किं तावत् तत्रैव आभाते धर्मभेदात्, अनुभवापरिगृहीतवस्तुविलक्षणवस्त्वन्तरोल्लेखात् वा । धर्मभेदात् न अन्यत्वमित्याह **'स्फुट'** इति । **'विचारितः'** इति

'विशेषोऽर्थावभासस्य················ ।' ( १।८।२ )

इत्येतस्मिन्विमर्शे । **'विचारयिष्यते च'** इति

'दूरान्तिकतया················ ।' ( २।३।१० )

इत्यत्र । द्वितीयमपि पक्षं निराकरोति **'सामान्य'** इत्यादिना । यदेव हि अनुभूतं, तदेव भाति विकल्पे । घट इति हि विकल्पे दृष्टस्वभाव एव भाति अनधिकः पृथुबुध्नोदराकारो लोहितः । गौः पवित्रमित्यपि सास्नादिमद्रूपमेव दृष्टम्, नतु दृष्टातिरिक्तं किञ्चिदवयविशब्दवाच्यं सामान्यशब्दवाच्यं वा लौकिकं भाति । ननु यदेव तत् दृष्टं भाति, तदेव सामान्यं तादात्म्यात् तत्समवायाद्वा ताद्रूप्येण प्रवृत्तेः; सिद्धान्तदृशा वा अविशेषणचिकीर्षिताभासान्तरविरहात् दृष्टमेव नीलादि यत्, तदेव सामान्यम् । आदिग्रहणात् क्रियावयव्यादि । एवं तर्हि बाह्यमेव तत् तथारूपमिति निर्विकल्पकेन अपि किं न गृह्यते । संनिहितविषयबलोत्पन्नं

हि तत् घुष्यते । ततश्च यदुक्तं—न सम्बन्धावयविक्रियासामान्यादीनामित्यादिकं स्वोक्तकल्पसमर्थनाय, विकल्पाभासस्तु एकत्वानुगतत्वादिना स्फुरति, न अनुभवाभासः—इति, तत् स्वयमेव त्यक्तं भवेत् यतो बाह्यरूप एव सामान्यात्मनि उपगम्यमाने निर्विकल्पकग्राह्यता अस्य प्रसजति । अत एव हेतोर्विकल्प्यरूपस्य सामान्यस्य बाह्येऽर्थे अनुगमाभावमवोचत् ज्ञानाद्व्यतिरिक्तमिति आत्मख्यातौ ज्ञानात्मभूतम्, असद्ख्यातावस्तुभूतत्वेन ज्ञानात् न अन्यत् । ननु न विकल्पेन नीलघटादि वस्तु स्पृश्यते येन तस्य समानादिरूपत्वे निर्विकल्पकस्य अपि सामान्यादिविषयता प्राप्नुयात्, किन्तु अनर्थ एव तेन स्पृश्यते वस्तुनि पुनरभिमानमात्रादारोपलक्षणात् प्रवृत्तिप्राप्ती विकल्पात्, तत एव अस्य क्वचित् प्रामाण्यमिति यत् पूर्वपक्षे निरूपितं **'केवलमनुभवविषयीकृतस्य'** इत्यादिग्रन्थेन, तत् दूषयति **'अध्यवसायोऽपि च'** इति । आरोपयतौ नयताविव द्विकर्मके प्रधानकर्म बाह्यमजास्थानीयम्, अप्रधानकर्म पुनरबाह्यं संभाव्यव्यधिकरणताकं ग्रामस्थानीयम् । **'अभिनिविशते'** इति अभिमन्यते । एतच्च वाचोयुक्तिवैचित्र्यमात्रम्, नतु भिन्नार्थम् । नच असंविद्रूपः संविद्रूपस्य व्यापारो युक्तः । व्यापारो हि नाम तस्यैव फलावच्छिन्नं स्वरूपमुच्यते । अत एव संवेदनसुखादिवदभिमानो धर्म इत्यपि असत् सुखादिवदेव अर्थं प्रति अकिञ्चित्करतापत्तिप्रसङ्गात् । अथ उच्यते दृश्यविकल्प्ययोर्विवेकाप्रकाश एव अभिमान इति उच्यते, तत्रापि आह **'यदिहि'** इति । **'अवभासमान एव'** इति सप्तमी प्रथमा च श्लेषेण आरोप्यस्य आरोपस्थानस्य च प्रकाशमानतां निरूपयितुम् । **'प्राक्'** इति

भ्रान्तित्वे चावसायस्य············ ।' ( १।३।५ )

इत्यत्र । सेति अभिमानशब्देन यदुक्तम्, तत्र मूर्खस्य पण्डितोऽहमिति यथा शब्दप्रयोगः; तथा घट इति विकल्पे भवेत् । एतदुपसंहरन् यत् पूर्वपक्षे कथितं—उपयोगोऽपि न विकल्पप्रतीतस्य, अपितु परमाणूनामेवेति, तत् दूषयति 'एवंच' इत्यादिना तद्विपरीतमाचक्षाणः। नहि अनाभासमानेन अर्थक्रिया काचित् । आभासनं च न अविमृष्टे । नच परमाणुविमर्शो घटादिप्रतीतौ कस्यचित् स्वप्ने सङ्कल्पेऽपिवा । विभागे अल्पतरप्रसङ्गे यतो न अल्पीयस्तत्र अवस्थानमित्यनया तु नीत्या भवन्नपि असौ न घटविषयः कदाचित्, अपितु तन्नाशोत्प्रेक्षायां दूरव्यवहितवस्त्वन्तरविषयः । नच अन्येन अर्थक्रियाध्यवसायेन अन्यस्य सा कार्या,—इति युक्तमतिप्रसङ्गात् । तदेतत् सर्वं वृत्तिपृष्ठे योजयति 'युक्तमुक्तम्' इति । तदयं प्रयोगः—न असत्यविषया द्रव्यादिबुद्धयोऽबाधितार्थक्रियाकारिरूपविषयत्वादिति असत्यविषयत्वविरुद्धेन सत्यविषयत्वेन व्याप्तस्य अस्य हेतोरुपलब्धिः । न घटाद्यर्थक्रियासु परमाणवोऽर्थक्रियाकारिणः इति कदाचिदपि तथानध्यवसितत्वात् । अस्य इयमर्थक्रियेत्यत्र व्यवहारे कारणं तथाध्यवसायः, तद्विरुद्धश्च अनध्यवसायः,—इति कारणविरुद्धोपलब्धिः

'············तेन हेतोः सिद्धिरबाधिता ।'

इत्यादेः,अन्यथा परमाणूनामर्थक्रियाकारित्वहेतुरसिद्धो भवेत्।। १।।

ननु तथापि न हेतोः सिद्धिरबाधितत्वविशेषणस्य असंभवात्, एकानेकात्मका हि द्रव्यादय इतिवदता भवता यदेव एकं, तदेव अनेकं; तच्च कथमिति स्वयमेव बाधकमुक्तमित्याक्षेपं प्रतिक्षेप्तुं

तत्रैकमान्तरं तत्त्वं तदेवेन्द्रियवेद्यताम् ।
संप्राप्यानेकतां याति देशकालस्वभावतः ॥ २ ॥

तत्र क्रियादौ क्रियादेः सत्यत्वे वा स्थिते सति क्रियादेर्वा ये एकत्वानेकत्वे उक्ते, ते वृत्तिगुणीकृते अपि प्रधानप्रमेयतया इह समर्थनीये इति परामृश्य निर्धारणम् । तयोरेकत्वानेकत्वयोर्मध्ये एकत्वमेवं समर्थ्यते, अनेकत्वं च एवमिति नीलादीनां भावानां पारमार्थिकं यदान्तरं संविन्मात्रलक्षणं तत्त्वं, तत्र न कलना काचिद्भेदघनत्वादेकताया अपि तत्र अभावात् । यत्तु आन्तरमाभासान्तरानामिश्रमन्तरङ्गम्, आन्तरं च अन्तःकरणमात्रवेद्यं तत्त्वमेकम्; तदेकम् । तदेव पुनरत्यक्तैकताकं बाह्येन्द्रियवेद्यतां प्राप्य इह—अमुत्रेति अधुना—तदेति कृशोऽकृश इति च देशादिभेदादनेकतां याति । नच विरोधः प्रतीतेरखण्डनात् कारणत्वाकारणत्वयोरिव व्यवहारमात्रपरमार्थतया विषयभेदस्य अपि सुवचत्वात् । तस्मादेकत्वानेकत्वयोर्न विरोधः कश्चित् चैत्रश्चलतीति क्रियायाम्, एवं सम्बन्धादौ वाच्यमिति सूत्रार्थः । अन्तरभिन्नं तत्त्वं संविन्मात्रतया, मायाप्रमातुः पुनरन्तःकरणाभासात् बाह्यकरणाभासाच्च बहिर्भेदात् वस्तु फलत एकानेकम् । अनेकत्वे हेतुः **'बहिः'** इत्यादीतिवृत्तिसंगतिः । **'एवं सति'** इति विद्यमाने क्रियादौ तद्गते च सत्यत्वे इति साधारणी उक्तिः । **'एवम्'** इति यथा श्लोकपादेन उक्तम् **'परतः'** इति यथा पादत्रयेण शिष्टेन । प्रथमं कलनाशून्यत्वेन अभिन्नत्वं व्याचष्टे **'सर्वेषाम्'** इत्यादिना । यदि यत्तच्छब्दौ, तदा एवं योजना—यदेव आन्तरत्वम्, अयमेव एकत्वावभासः । यदातदाशब्दपाठे तु स्पष्टम् । **'अनन्तानि'** इति एकघटाद्यन्यतमाभासभित्तिचित्रीकरणेनेत्यर्थः । रसो मधुरादिः षोढा, अवान्तरभेदेन अनन्तः । वीर्यं

जठराग्निसम्बन्धज उष्णादिस्पर्शः, प्रभावविशेषश्च; जठरानल-संबन्धकृतं तु रसान्तरं यत् मधुरादि, स विपाकः । गुणा अन्ये गुरुत्वस्नेहादयः ॥ २ ॥

ननु विषयभेदादेकमनेकं चेति यदुक्तम्, तत् केन ग्रहीतव्यम्; चाक्षुषानुभवेन तावत् चैत्रो देशभेदभिन्न एव निर्भासते, न अस्य आभासभेदमिश्रीकरणसामर्थ्यमविचारकत्वादिति हि आहुः, विकल्पेन तु मानसेन वस्तु नैव स्पृश्यते । तदत्र उच्यते सूत्रेण

**तद्द्वयालम्बना एता मनोऽनुव्यवसायि सत् ।**
**करोति मातृव्यापारमयीः कर्मादिकल्पनाः ॥ ३ ॥**

इह यद्यपि अविकल्पेऽपि सन्निति वा घट इति वा सत्तामात्र-घटमात्रावभासादौ सामान्यादेराभासो विततग्रहणे च योगिनः कर्मावभासः कालावभास इत्युच्येतापि, तथापि तदा तत् सामान्यादि निजं जीवितं न प्रतिलभते । तथाहि समानोपरञ्जकता, सम्बन्धिभेदोद्रेकः, सन्तन्यमानक्षणभेदैक्यग्रहोऽवयवराशीकरणमवध्यवधिमद्भावावभास इति सामान्यसंबन्धक्रियाद्रव्यदिगाभासानां जीवितं, तच्च विकल्पने स्फुटमभिव्यज्यते । विकल्पनं च मनसोऽनुव्यवसाये यदवसरे मायाप्रमातुरभिव्यक्तिः । तेन मनः कर्तृ अनुव्यवसायं साक्षात्कारविमर्शस्य पश्चाद्भाविनं विमर्शं विदधत् क्रियासंबन्धादिविषयाः कल्पना विकल्पज्ञानानि स्वतन्त्र-प्रमातृव्यापारप्राधान्येन करोति तदुक्तपूर्वं द्वयमेकानेकलक्षण-मालम्बनं यासां, तादृशीः । तेन विकल्पधियैव एकानेकात्मकरूप-द्वयस्पर्शः, ननु वस्तुस्पृक् विकल्पः । प्रमातुः किल अयं व्यापारः । प्रमाता च पूर्वानुभवान्तःस्वसंवेदनरूपो विकल्पनेऽपि पूर्वात्मतां न उज्झति । तस्य तु मायीयताव्यक्तौ मनोऽनुव्यवसाय एव

अवसरः । तत्रैवच व्यावहारिकं क्रियासम्बन्धादि, न शिवतादशायां, नापि सदाशिवादिभूमौ, निर्विकल्पककाले च शिवसदाशिवादिरूपसमुदाय इति सूत्रस्य तात्पर्यम् । एतदवतारयति '**बाह्य**' इत्यादिना '**एकीभवन्तः**' इत्यन्तेन । तावत्यां भूमौ प्रत्युत भेदो विगलतीति न प्रमातृतावसर इत्याचष्टे तद्दशावियोगं च उत्तरदशायां शत्रैवाभ्याम् । स्वस्मिन् निजनिजे प्रमातरि प्रत्यासन्नं यत् मनोलक्षणमन्तःकरणमसाधारणप्रमितिकारितया, तदेव साधनं यस्य अनुव्यवसायव्यापारस्य, तत्र प्रवृत्ताः । '**लोकयात्राम्**' इति लोकव्यवहारम्, यत्र क्रियासम्बन्धादिकमेव निविडमुपयुज्यते इति मन्यते । मनसि अयं कस्मात् भर इति चेत्, आह '**यद्यपि**' इति तावती न सुखादौ, तत एव अत्र न पूर्णा शुद्धिरिति अव्यवहारयोग्या एव इयं दशा अशनक्रियायां भस्मसूतकादिदशावत् । '**अंशभेदैः**' इति

'एकाभिधानविषये मितिः············ ।' ( २।३।२ )

इति हि वक्ष्यते । अनुशब्दं व्याचष्टे '**पश्चात्**' इति । मन एव परिकल्पनाः करोतीति सम्बन्धः । तस्य स्वरूपविशेषणं '**करणम्**' इत्यन्तम्, शत्रन्तद्वयं तु हेतुतागर्भं कल्पनाकरणे । कयोर्मध्यस्थं मनो वृत्तावुक्तमिति शङ्कित्वा ग्राह्यग्राहकयोरिति दर्शयति '**बहिः**' इत्यादिना '**तस्य**' इत्यन्तेन वाक्येन । प्रमात्रा सह भेदसंबन्धौ व्यतिरेकविश्रान्ती व्यवहर्तुमशक्यौ येषाम् । '**तस्य**' इति प्रमातुः । अत्र हेतुमाह '**प्रमातुः**' इति । प्रमाता बाह्यमान्तरं च विकल्प्यं विषयं यदध्यवस्यति विचित्राभिर्योजनाभिः, तदेव उच्यते क्रियासामान्यादि । '**व्यवहरति**' इति वृत्तियोजनां करोति '**मानसीत्वम्**' इत्यादिना । '**हेतुः**' इति वाक्यत्रयशेषः । ननु कोऽन्यः प्रमाता नाम यस्य व्यापारतया क्रिया-

दिविकल्पा उक्ताः, अनुभवविकल्पात्मकसंवेदनसन्ततिमात्रमेव हि अन्तस्तत्त्वमित्याशङ्क्य आह **'प्रमातैव हि'** इति सत्यप्रमाता महेश्वररूप एवेत्यर्थः । **'प्राक्'** इति

'न चेदन्तःकृता............ ।' ( १।३।७ )

इत्यतः प्रभृति । **'संस्कारजा'** इति संस्कारो हि प्रमात्रेकतापर्यवसायीति उक्तम् । ततो बौद्धा यथा अनुभवसंस्कारजन्यतां मन्यन्ते, तथा अत्र न भवति,—इति मन्तव्यम् । **'चक्षुरादिषु च'** इत्यादेः **'निष्ठत्वात्'** इत्यन्तस्य तात्पर्यं व्याख्यातं सूत्रव्याख्यानारम्भ एव । अत्र च सामान्यग्रहणेन सर्वं सम्बन्धादि उपलक्षयति । **'सामान्यरूपा अपि'** इति अस्फुटप्राया इति यावत् । **'सामान्यमुच्यन्ते'** इति न सामान्यमिति व्यवह्रियन्ते । अत्र हेतुं **'तेषाम्'** इत्यादिकं वक्ष्यमाणं सावकाशीकर्तुं सामान्यस्वरूपाविष्करणाय आह **'विशिष्टानामनुगामि'** इत्यन्तम् । ननु अत्र अवसरे स एकाक्याभासः किमुच्यताम्, न तावत् सामान्यमिति त्वमेव अवादीः । नच अविशेषत्वेन अर्थं लोको व्यवहरति । सत्यं न व्यवहरति, अव्यवहरणे तु निदानम्—अर्थक्रियार्थी हि लोकः, नच आभासमात्रमर्थक्रियाकारीति । एतत् दर्शयति **'तदर्थक्रिया'** इत्यादिना, च उक्ताशङ्काद्योतकः, योगिप्रायस्य स्युरपि,—इत्याशयेन विरलत्वमुक्तम् । ननु अभाव एव अभिलषणीय इति सत् वस्त्रं परिदधातीति । ननु गृहे किञ्चिदस्ति नवा,—इतिचिन्तायां सदाभासमात्रेण अपि अर्थक्रिया हृद्भङ्गपरिहारलक्षणा क्रियते एव । वक्ष्यतेच एतत्

'तथैव सद्घट.............. ।' ( २।३।५ )

इत्यत्र । तत् कथमुक्तं **'आभासान्तरमिश्रतायामेव अर्थक्रिया'** इति । अत्र उत्तरमाह **'देश'** इत्यादिना । इह इदानीं

सन्निवेशतयैव सदाभासस्वलक्षणीभूत इति रूपनीलाद्याभासै-र्बहिरङ्गैः स्वलक्षणतायामप्रयोजकैः किं तत्र कृत्यम्। देशकाला-भासाभ्यां विना न आभाससहस्रैः संभेदेऽपि स्वालक्षण्यं पर्यव-स्यति नीलं वस्त्रं विततं कार्पासं मृदु तन्वित्यादौ सामान्यरूपताया एव स्फुरणात्। इदं तदिति तु देशकालाभाससंभेदः सामान्यरूप-तामपहस्तयति। ततः स एव अन्तरङ्गः स्वालक्षण्यापत्तौ। एतदेव उपपादयति **'तयोरेव'** इति देशकालयोः पूर्वापरादिरूपत्वेन। देशो दूरत्वादूरत्वादिलक्षणं परत्वापरत्ववैचित्र्यमुल्लासयति, का-लस्तु नवपुराणतादिलक्षणम्। ननु परस्परमाभासानां तुल्य-मेलने कोऽत्र नियमो यत् सदाभासस्ताभ्यामाभासाभ्यां मिलितः स्वलक्षणमर्थक्रियाकारीति च उच्यते, नतु जातु देशाभासः काला-भासो वा आभासान्तरमिश्रितः इति। अत्र उच्यते **'नित्यमेव'** इति। यत् किल प्रथमानिर्देश्यं पृथक्परामर्शपदवीमवतीर्णं, तदेव वस्तु प्रधानं द्रव्यमर्थक्रियाकारीति युक्तम्। देशकालयोश्च तथात्वे दिश्यतेऽनेन, कल्यतेऽनेनेति यदन्यपरतन्त्रं रूपसर्वस्वं, तदेव विघटितमिति स्वतन्त्राभासरूपत्वे तयोर्देशकालाभासान्तर-संभेदेनैव स्वलक्षणीभाव इत्येष एव उन्मीलति पक्षः। तौ च उपसर्जनीभूतौ किं कुरुत इति चेत्, आह **'व्यापिनित्य'** इति आभासं मूर्तितः क्रियातश्च प्रसिसीर्षुं सङ्कोचयतः, सङ्कुचितश्च उपयुज्यते सङ्कुचितस्वभावस्य प्रमातुः। एवं मेलनं नाम यत्, तदेव स्वलक्षणम्। ननु यस्य सदाभासस्य उन्मीलनं स्वलक्षणं, स सदाभासस्तस्य स्वलक्षणस्य भेदकतामापन्नो भेद्यशरीर-तादात्म्येन वर्तमानं युक्तं यत् भेद्यवृत्तान्तमुद्वहेत्। भेदश्च सङ्कु-चितस्वलक्षणात्मा, ततस्तेनापि युक्तं सङ्कुचितुमिति विनष्टं सामान्यं स्यात्। ततश्च कथमुच्यते नित्यव्यापिरूपं सामान्यमिति। एतत्

समाधत्ते '**विशेषणत्वे**' इति विशेष्यभागो हि प्रधानम्, तत्रैव च विशेषणकृत उपकारो युक्तः, नतु उपसर्जने विशेषणभागे। ततो नीलः पटो मृदुरिति मार्दवं विशेषणं नीलतांशे विशेषणे यथा अकिञ्चित्करम्, तथा सामान्यात्मनि आभासवर्गे विशेषणभूते देशकालविशेषणं न सङ्कोचं विधत्ते। '**तत्र**' इति विशेषणत्वे। '**तस्य**' इति सामान्यस्य। किमतो जातमित्याह '**तदा च**' इति यदुक्तमेतत्, ततो हेतोरित्यर्थः। '**ख्याप्यन्ते**' इति एकलोलीभावेन भासनात्। भासनस्य तु प्रधानभूतं यत् विमर्शाख्यं जीवितं, तद्विशेषरूपं विकल्पो यदादिशति; तद्भावस्तत्त्वमिति दर्शयति '**तथापि**' इति। '**प्रायेण**' इति वाक्यार्थविकल्पोऽपि अयमधुना इह घट इति यदा यदा पुरोऽवस्थितघटाभासः, तदा तदा इत्थमुदेति,—इति प्रातिस्विकदेशकालतत्त्वस्वीकारायोगात् सामान्यविषय एव। अत एव आह '**स्यात्**' इति। तत्र हि तत्कालसन्निहितवक्तृश्रोतृप्रत्यक्षादिप्रमाणान्तरसचिवात् ततो वाक्यात् विविक्षितविशेषप्रतिपत्तिः कामं संभाव्यते, नतु वाक्यार्थविकल्पो नियततत्स्वलक्षणस्वीकाराक्षमः। तत एव

'चमसेनापः प्रणयन्ति व्रीहीन् प्रोक्षति षोडशिनं गृह्णाति।'

इत्यादौ लडपि न विशिष्टं वर्तमानावभासमवगमयितुमलमिति शब्दात् प्रतीयमानोऽर्थोऽङ्गुलिनिर्देशादिसाहाय्यकमन्तरेण देशकालानवच्छिन्न एव प्रतीयते इति अयत्नसिद्धोऽयमर्थः। एतच्च प्रमाणलक्षणे भविष्यति। इयता अनुव्यवसायव्यापार एव सामान्यक्रियादितत्त्वं प्रत्युज्जीवयति। यत् प्रकृतं, तत् निरूपितमिति उपसंहरति '**एवंच**' इति। '**अस्मिन्**' इति यत्र स्वलक्षणसामान्यरूपता चिन्तनयोग्या, तादृशे। '**न तदा**' इति मानसावसायकाले। '**सामान्यम्**' इत्यत्रैव च्छेदः। अत्र हेतुः

'**देशादि**' इत्यादि '**सम्बन्धोऽपि तदा**' इति क्रियापि तदेति सम्बन्धः । ग्रन्थान्तरं हेतुरूपम् । '**उक्तम्**' इति '**मनोऽनुव्यवसायि**' इति '**कल्पनाः**' इति च । '**वक्ष्यते**' इति

'.............आलम्बन्ते विकल्पनाः ।' (२।२।५)

इति ॥ ३ ॥

एवमियता संवृतौ विकल्पबुद्धौ स्फुरतः सामान्यादेः संवृतिसत्त्वं नाम सत्त्वविशेष एव अवतिष्ठते, न द्विचन्द्रादिवदसत्यतेति उपपादितम् । तत्र अयमवतरणक्रमः संविदः—सर्वमिदं स्वातन्त्र्यामर्शनलक्षणायाः क्रियाशक्तेर्विजृम्भितम्—यत् संबन्धसामान्यादि । तत्रापि सम्बन्धरूपतैव अनेकैकरूपतालक्षणा सर्वत्र तात्त्विकं रूपम् । तत्र तु असाधारणरूपान्तरयोगे नामान्तरम् । अनेकव्यक्तिग्रामस्य य ऐक्यात्मा सम्बन्धः, तत्र गाव इति व्यपदेशान्तरसहिष्णुत्वं; तत्र सामान्यवाचोयुक्तिरनेकक्षणप्रवाहे आश्रयबलादेकीभवति स्पन्दते इति व्यपदेशबलात् क्रियाव्यवहारः, तन्तूनामैक्ये पटोऽयमिति द्रव्यव्यवहारः, बाल्याद्यवस्थानामैक्ये अवस्थातृव्यवहारः । एवमन्यत्र । व्यपदेशान्तरग्रन्थिवन्ध्यतायां तु निर्विशेषा संबन्धभाषैव, प्रातिपदिकार्थात् तु यदतिरिक्तं भाति, तत् सम्बन्ध एव सर्वम् । तत एव

'भेदाभेदात्मसंबन्धसहसर्वार्थसाधिता ।
लोकयात्रा................ ॥' (श्लो० १)

इति उक्तं सम्बन्धसिद्धौ भिन्नसामान्यवादिभिरपि समवायस्य सम्बन्धस्य '**अनुगृह्णाति सम्बन्धः**' इति नीत्या सम्बन्धेन वा अनुगृहीतस्य अङ्गीकरणात् । सम्बन्धश्च एकानेकतामयः प्रमातृस्वातन्त्र्यात्मकक्रियाशक्तिमहिम्ना । ततः सम्बन्ध एव प्रमात्रैक्यसिद्धौ मूलं

'............सम्बन्धे सावधानता।' (वि० भै० १०६)
इत्युक्तेः। ततस्तमेव विचारयितुं सूत्रं

**स्वात्मनिष्ठा विविक्ताभा भावा एकप्रमातरि।**
**अन्योन्यान्वयरूपैक्ययुजः संबन्धधीपदम् ॥ ४ ॥**

राजा पुरुषश्च विविक्तत्वेन यतो बहिर्भासेते, ततः स्वात्मन्येव समाप्तौ तथाविधावेव यदा एकस्मिन् प्रमातरि ऐक्यं भजतः। तच्च न ऐक्यमात्रं स्वरूपविगलने सम्बन्धायोगात्, किन्तु परस्परश्लेषसमकालनिमज्जदुन्मज्जद्भेदाभेदकोटिद्वयदोलायमानरूपमन्वयलक्षणम्; तच्चापि न प्रमात्रैव सह, अपितु अन्योन्यं राज्ञः पुरुषः, यदिवा तस्य राजेति। केवलं तद्भावगमने संवित्स्पर्शः एषामुपायमात्रत्वेन अङ्गीक्रियते कनकपृषतमेलने अग्निरिव स्वरूपमलुम्पन्नेव। तादृशेन ऐक्येन युज्यमानौ तौ तौ भावौ सम्बन्धबुद्धेः राज्ञः पुरुष इत्यादिकायाः पदं विषयः। सर्वत्र द्विष्ठ एव संबन्धो यद्यपि कथितनयेन, तथापि सम्बन्धव्यक्तीनामानन्त्यमभिधातुं बहुवचनमिति सूत्रार्थः। ननु अमायीये पदे अभेदस्य एकरसता, मायापदे भेद एकरसः; भेदाभेदजीवितस्तु सम्बन्धः कां दशामधिशेतामित्याशङ्क्य मायादशामेव शुद्धदशाक्षेपेणैव वर्तमानामिति दर्शयति **'कर्तृकर्म'** इत्यादिना **'बुद्धिः'** इत्यन्तेन। अन्तःकरणप्रवृत्तेरवसरे मायाप्रमातरि उल्लसिते लोकव्यवहाराः प्रवर्तन्ते, नतु पूर्वम्। तदाहि संसारिप्रमाता अनभिव्यक्तः। ननु तदापि समस्तबाह्येन्द्रियकरणम्, तच्च परशुरिव च्छेदकपुरुषसंसर्गं छेद्यसंपर्केऽपि प्रमातृसंसर्गं प्रमेयसंसर्गं च न उज्झत्येव,—इति बहिरपेक्षया भेदोऽन्तरपेक्षया च अभेदोऽस्त्येवेति भेदाभेदात्मसम्बन्धमयो व्यवहारः कस्मादनभिव्यक्तोऽभिधीयते,—इति चोद्यमनूद्य परिह-

रति '**तावती**' इति । सा हि पशोरपि सदाशिवेश्वरदशेति प्रतिपादितमेव । तस्यां च अभेद एव विश्रमो भेदांशस्य आच्छादनात् । ननु मायाप्रमातरि अभिव्यक्ते भेद एव एकरसः,—इति पुनरपि कथङ्कारं भेदाभेदमया व्यवहाराः । एतदपि परिहरति '**मुख्य**' इति । प्रकाशमयत्वं हि न भावात् कदाचित् विचलति । प्रकाशश्च तदा देहादिसङ्कोचाभासभागी अपि स्वरूपादप्रच्युत एव । यदजडप्रमातृसिद्धिः

'तदात्मनैव तस्य स्यात् कथं प्राणेन यन्त्रणा ।' (श्लो० २१)

इति । ततो मायीये स्थितेऽपि भेदे प्रकाशमहिम्ना न अभेदो विच्यवते । '**एकैक**' इति एक एव असौ मायाप्रमातुर्व्यापारो येन संबन्धरूपं तत् भावद्वयं सृज्यते च प्रकाश्यते च विमृश्यते च । '**विभिन्नम्**' इति पूर्वस्या असंबन्धावस्थाया विलक्षणमित्यर्थः । अत एव विकल्पव्यापारेण प्रमातृसंबन्धिना उल्लासितत्वादन्तःकरणगम्यत्वेन असाधारणत्वात् प्रमातृभेदेन भावस्य सम्बन्धवैचित्र्ये सम्बन्धावस्था च भवन्ती न दुष्यति । क्वचन आभासांशे हि परमेशः कदाचिदामिश्रयति प्रमातॄन्, अन्यांश्च वियोजयति,—इति उक्तं बहुशः । ननु भेदाभेदमयत्वमेव सम्बन्धलक्षणमिति गुणप्रधानतादिना सम्बन्धिनोर्वैचित्र्यं कुतः, कुतश्च सामानाधिकरण्यादिभेदेन षष्ठी, दण्डकपठितभेदसंभारेण च संबन्धवैचित्र्यम्,—इत्याशङ्कां पराकरोति '**तच्च**' इति । न खलु एकरसतयैव आभासानां संयोजनमिति हि उक्तम् । ननु मानसे विकल्पेऽबाह्ये बाह्यं रूपं न स्फुरत्येवेति शङ्कां परिहर्तुं स्वदर्शनं स्मारयति '**मनसापि**' इति । '**अत एव**' इति यदुक्तं '**बहिरन्तश्च**' इति ततो हेतोरिदमवतिष्ठते इत्यर्थः । **परिहृतविरुद्धधर्म**' इति यदुक्तं, तदेव स्पष्टयति **बाह्यान्तरतया**'

इति। ननु एवं भिन्नविषयतया कामं विरोधः परिहृतो बहिर्भिन्नं अन्तरभिन्नमिति, इयता तु एकस्य एतद्रूपमिति न सिद्धं बाह्यान्तरत्वेन आभासयोर्भेदात्। एतदपि प्रतिसमाधत्ते '**विमर्शबलादेव**' इति ॥ ४ ॥

अथ सम्बन्धानुग्रहादैक्यानैक्यमयत्वेऽपि यथा वैलक्षण्यं जात्याद्यवभासानां, तथा भेदान्तरमभिधातुं प्रक्रमते

**जातिद्रव्यावभासानां बहिरप्येकरूपताम्।**
**व्यक्त्येकदेशभेदं चाप्यालम्बन्ते विकल्पनाः ॥ ५ ॥**

जात्यवभासानामाभासपरमार्थानां जातीनां या ग्राहिका विमर्शिकाश्च कल्पना विकल्पबुद्धयः, ता न केवलमन्तरेव ऐक्यं बहिश्च अनैक्यमेव विषययन्ति; यावत् बहिरपि एकगोत्वानुगमादैक्यमेकप्रातिपदिकप्रयोगप्रयोजनं बहुवचनप्रयोगोपयोगिनं च आश्रयभूतव्यक्तिपरिग्रहावश्यंभाविनं व्यक्तिगतं भेदमालम्बन्ते प्रकाशयन्ति विमृशन्ति च इमा गाव इति बहिर्मुखतयैव अभेदस्य विशेषणतया भेदस्य च विशेष्यत्वेन उपरञ्जनीयतया प्रतीतेः। एवं द्रव्यावभासानां कल्पना बहिरपि एकतामवयवभेदं च आलम्बन्ते घट इति निःसन्धिबन्धनतया एकस्य वैतत्येन च अनेकावयवस्य प्रतिपत्तिर्यतः। आभाससारतया च चित्रसंवेदनवत् न विरोधः कश्चित् रक्तारक्तादिभेदेऽपि,—इति सूत्रार्थः। एनमवतारयति '**संबन्ध**' इति। ननु चाक्षुषे मा नाम आभासान्तराणि आभासिषत, देशकालाभासौ तु इह अधुनेति कथं व्यपगच्छतः। इत्थमित्याह '**यदा**' इति सामान्येन देशकालानवधानेन च यदा प्रकाशः। पशोरपि घननिद्रामूर्च्छामदानन्तरप्रथमप्रबोधाद्यवसरेषु तदा वस्तुमात्रावभासः। स्वरूपभेदं हि मुक्त्वा न तत्र अपरो भेदः प्रतिभाति। स्वरूपं च आभासमा-

त्रमेव । **'स'** इति गोमात्रावभासश्चाक्षुषः, चाक्षुषे इति सप्तम्या पाठे व्यवहारे इति मन्तव्यम् । प्रथमापाठस्तु स्पष्टः । **'स'** इति यः सामान्यस्य लक्षणत्वेन उक्तः समानानां भावः । **'तदापि'** इति न एकाभासे, नापि अनेकाभास इत्यर्थः । **'सम्पद्यते'** इति काणाददर्शनेऽपीति मन्यते । तथाच हेतुः **'अयुत'** इत्यादि । तथाहि तत्रभवान्

'आत्मान्तरस्य येनात्मा तदात्मेवावभासते ।' (वा०प० ३।३।९)

इति । **'अत एव'** इति यदुक्तं—एकानेकरूपता ईदृशी चाक्षुषे न अवभाति—इति विस्तरेण, ततो हेतोरित्यर्थः । **'स्यात्'** इति युक्त्या संभाव्यते तावत् सन्निहितवस्त्ववभासितत्वात् चाक्षुषस्य सामान्यावयव्यादेश्च सर्वसाधारणतया स्पष्टस्य तदापि सन्निधानात् । यदाह कणव्रतमुनिः

'रूपिद्रव्यसमवायाच्चाक्षुषाणि सामान्यानि ।' (४।१।११)

इति । **'अनभिव्यक्तेः'** इति भेदात्मकरूपलक्षणप्राधान्येनैव प्रतीतिविश्रमणादित्यर्थः । **'चैत्र'** इति । यद्यपि घटादिकमपि अवयविसंमतमेव तथाच वक्ष्यति **'तिलस्यान्यतस्तिलात्'** इत्यादि, तथापि अयमहमेतावत् गच्छामि तिष्ठामि वेति एकतापरामर्शस्य न कथञ्चित् जीवशरीरे व्यभिचारोऽस्ति,—इति दर्शयितुमेवमुक्तम् । घटो हि गृहरथग्रामसेनादिवत् समुदायस्वभावोऽपि एकार्थक्रियाकारी स्यादिति भवेदपि संभावना । **'बालाद्यवस्था'** इति । न अत्र अवस्थानामैक्यानुसन्धानं विवक्षितं तस्य अवयविबुद्धावप्रयोजकत्वात्, अपितु एतावानहमयमद्य पूर्वरूपादेतावता भिन्नवैतत्यो निःसन्धिबन्ध इतीयति अत्र तात्पर्यम् । अत एव भेदितैरवयविरूपैराविष्ट एक इति उक्तम्, एवं प्रमेयस्य रूपसौन्दर्यमेवंभूतं यत् कल्पनाबुद्धौ, तदवभास इति

उक्तम्। अधुना तु प्रमातृस्वरूपपर्यालोचनातोऽपि एवमेव युज्यते इति दर्शयति पक्षान्तरं परिगृह्णन् **'अथवा'** इति। **'प्रमाता च'** इति मायोचितः। सम्बन्धमुखप्रेक्षि च सर्वेषां जात्याद्याभासानां रूपमिति व्यापकमुखेन अपि व्याप्यस्य इत्थमेव युक्तमिति तृतीयं प्रकारं दर्शयति समुच्चयद्वारेण **'सम्बन्धादीनां च'** इति। **'तत्प्रसङ्गादपि'** इति एकप्रघट्टकत्वेन एकरसत्वात्। संबन्धवदेव अत्र युक्तं कल्पनाविषयत्वम्। सम्बन्धस्य च व्यापकत्वात् व्याप्यस्य तदेव रूपं प्रसज्यते इत्यपि मन्तव्यम्। ननु एकवचने तर्हि सामान्यमेकमेव अवमृष्टं, न स्वलक्षणभेद इति तत्र न स्यात् समानानां भाव इत्येवंरूपस्य सामान्यस्य प्रतीतिः। अत्र उच्यते **'यत्रापि'** इति स्वलक्षणासंस्पर्शे हि का सङ्गतिरानयेत्यादेः। ननु न बहूनि स्वलक्षणानि स्फुरन्ति प्रतिपत्तुः प्रयोक्तुर्वा अत्र इमा गाव इत्यादाविव बहुत्वस्य अप्रतीतेः। एतदाह **'यद्यपि'** इति। अत्र समाधिः **'तथापि'** इति। **'छायापि'** इति सामान्यमात्रमेव शुद्धमिति। किं तर्हि परिस्फुरति। आह **'एषाम्'** इति गोव्यक्तीनामेकतमा व्यक्तिर्या हृदये परिवर्तमाना कृष्णा च आनतशृङ्गा च उत्थिता च अन्यादृशी वा यथा यथा सैव परिस्फुरति अत्र प्रयोक्तुरन्यस्य च न सा स्फुरन्ती सैवेति नियमेन प्रोक्ता 'प्रकाशते, अपितु तत्प्रमुखीकारदृशा, सा यथेति सापीति सैवेत्यभावरूपा चेति अमुना रूपेण अनियतमेव तत् वस्तु भातं भवति अनियतत्वादेव स्वलक्षणेभ्यो विलक्षणमपि तानि स्वलक्षणानि अभेदेन स्वीकुर्वाणम्। अनियतत्वे युक्त्यन्तरमपि आह **'अतश्च'** इति। यदि नामपदमव्युत्पन्नमिदं तम····वा, तदा एकतममिति वा पाठः। अथ 'एकाच्च प्राचाम्' ( पा० सू० ५।३।९४ ) इति डतम-

जयं, तदा डतरादिपाठादङ्गादेशे एकतमदिति। **'प्रतिपत्ता'** इति प्रयोक्ता प्रतिपत्ता च अत्र विवक्षितः। प्रतीतानुष्ठातृता प्रयोक्तरि, प्रतीतप्रतिपादकता प्रतिपत्तरि, प्रतीता आनेतृता। एतदुक्तं भवति—प्रयोक्त्रा कृष्णच्छायोपक्रमे गवि हृदयस्थे यदा शब्दप्रयोगः कृतः, तदा शुक्लच्छायमपि पुरस्कृत्य प्रतिपत्ता गां प्रतिपत्तुः कपिलवर्णमपि यदि आनयति, तदुभावपि कृतिमानिनौ भवत एव। तत् यदि अनियमो न स्यात्, कथमित्थमुपपद्यते। अनियमाच्च अशेषस्वलक्षणप्रतिपत्तिरयत्नसिद्धा। **'यत्र'** इति रथप्रतिभासे। **'अनन्तरमेव'** इति राजपुरुषादिसम्बन्धन्यायेन। **'संयोगेन'** इति असमवायिकारणतया निर्भासमानेन संयोगाभ्यां संयोगैर्वेत्यर्थः। **'कार्यद्रव्यम्'** इति यस्य न केवलमान्तरमेव एकत्वं द्वितीयमपितु बाह्यम्। एतदेव स्फुटयति **'यस्य'** इति। एतद्वैलक्षण्यं तु रथादौ दर्शयति **'रथादिषु हि'** इति। **'संयोगोऽपि अन्तर्'** इति। एवंहि तत्र प्रतिपत्तिः—अहो सुश्लिष्टमिदं, सुयोजितमिदं सुघटितमिदं चर्मणा सह काष्ठलोहमृदादि—इति, नतु घटे एष प्रतिभासः—कपालानि इमानि योजितानि भान्ति—इति। ननु घटचैत्रादिप्रकाशेऽपि कपालपाण्यादिकमेव प्रतिभाति, तच्च एवं येन दिग्भेदभिन्नवस्तुग्रहणकृत्यं वैतत्यं निर्भासते। अत्र आह **'चैत्र'** इत्यादि। न अस्माभिरवयवप्रकाशोऽपह्नुतः, अपितु एकघननिःसन्धिबन्धोऽवयविप्रकाशो भवन्नेव अवयवप्रकाशाक्षेपेण भवति,—इति ब्रूमः। ननु त एव अवयवा एकार्थक्रियाकरणोपाधिभेदात् रथादिवदेकतया निर्भान्तु, किमन्येन एकेन अवयविना कल्पितेनेत्याशङ्क्य एकप्रतिभासोऽत्र अनपह्नवनीय इति दर्शयति **'यदि च'** इति। **'अत्यन्त'** इति। अनेन दृष्टसजा-

तीयतया तत्रापि ऐक्याभास इति वचनावकाशं व्युदस्यति । **'एकदेशमात्रकम्'** इति दाक्षिणात्यो हि न करभस्य ग्रीवामात्रं स्मरति । **'स'** इति एकदेशः । **'प्रथेत'** इति प्रत्यक्षे । **'प्रत्युत'** इति । वैतत्यावभासो यः परेण अवयवमात्रमत्र प्रकाशं इत्यत्र हेतूकृतः, तेन प्रत्युत अवयविनोऽपि प्रकाश आक्षिप्तः । विततं हि भासमानमेकमवभासते । यत्र तु बहुषु घटेषु वैतत्यप्रतीतिः, तत्र भ्रम एव एकत्वाक्षेपेण यतो विततता भाति । तदयं विरुद्धो हेतुरिति । **'बाह्यवादेऽपि'** इति शुद्धे काणाददर्शने एवं, किं पुनरस्मद्दर्शने इति यावत् । अत्र बाह्यवादशब्दमाकर्ण्य स्वं पक्षमुद्ग्राहयन् पूर्वपक्षित्वेन शङ्क्यते **'अथ'** इत्यादिना **'स्यादिति'** इत्यन्तेन । **'असम्भवम्'** इत्यादिना **'नच परिसमाप्त्यवधिरस्ति'** इति समाधीयते । **'तदाऽपिवा'** इत्येतत् **'अत्यन्तादृष्टपूर्वम्'** इत्यस्य समाधानम् । तावत्परमाणुपुञ्जात्मा करभो हि दाक्षिणात्यस्य विस्मयस्वभावं सुखं, बालकस्य वा त्रासस्वभावं दुःखं जनयेत् । तदर्थक्रियोपाधिबलादेव एकत्वमौपाधिकम् । स्वपक्षमुपसंहरति **'सर्वथा'** इति । ननु निबिडता स्थूलत्वं च यत् भाति, तत् परमाणुषु नास्ति तावत्; तदेतत् कुत्रत्यं भातु । अत्र आह **'अनेकस्य'** इति अङ्गुलिपञ्चकं हि युगपत् गृह्यमाणं एककप्रतिभासविलक्षणस्थूलरूपतया भाति अन्तरालस्य च असत्त्वादेव वा प्रतिभानं नीलरूपमध्ये शुक्लादेरिव सत एववा रसादेरिव अतदिन्द्रियवेद्यत्वात् । तदन्तरालस्य अप्रतिभानादेव इदमेकघनमिति प्रतिभासो

'............दूरादेकघनं वनम् ।'

इतिवत् । अनेकस्य युगपद्ग्रहणे अन्तरालस्य च अग्रहणे एवमेव प्रतिभास उपपद्यते औचित्यात् स्थूलमेकघनमिति, नतु अन्यथा ।

तत: प्रतिभासे सति बाह्यस्य अयं धर्मो भाति, प्रतिभासस्यैव वा साकारसंवेदनवादे ज्ञानाकारलक्षणस्य एष धर्मो, न बाह्यस्य,— इति तथाभासोऽयमवयविप्रकाश इति न युक्तं गदितुम् । एवं प्रत्यक्षं प्रमाणं यत् परेण दर्शितमवयविसिद्धौ

'सर्वाग्रहणमवयव्यसिद्धेः ।' ( न्या० २।१।३४ )

इति सूत्रेण, तत् निराकृतम् । अथ

'धारणाकर्षणोपपत्तेश्च ।' ( न्या० २।१।३५ )

इति यदनुमानमुक्तं, तदपि निराकरोति हेतुमन्यथासिद्धीकुर्वन् **'परमाणुसञ्चय'** इत्यादिना । **'स्वभाववैचित्र्यात्'** इति, घटादीनां ये परमाणवस्तेषां स्वहेतुबलेन तत्सत्तानुरूपानुबन्धितया उत्पादात्, घटादीनां च ये भोक्तारस्तत्कर्माणि तत्र अधिपतिप्रत्ययः । वाशब्दः समुच्चये । एतच्च अवयविवादिनापि संयोगानामसमवायिकारणानां परिरक्षणाय पवनसंयोगादिसंभाव्यमानोदयविभागारम्भककर्मानुत्पादे निदानमवश्योपेतमिति । एवं प्रसाधकं प्रमाणं पराकृत्य बाधकमवयविनि दर्शयति **'एक'** इत्यादि । एष स्वरूपागतो बाधकः । धारणगुणपूर्वप्रक्रमधर्ममुखेन अपि तमाह **'द्व्यणुकादि'** इति । यथैव तन्तुगतानि रूपाणि पटगतं च रूपमिति परेण गृह्यमाणे रूपवत्त्व····
················च स्वकार्यापातमधिकं विदध्युरिति तत्तुलावमानात् पटे अधिकाधिकं तुलाया नमनं भवेदिति । अत्र पूर्वपक्षे प्रतिविधानमुच्यते । तत्र संक्षेपेण तावत् सर्वमेतदयुक्तीकरोति **'स्यात्'** इत्यादिना **'अर्थाः'** इत्यन्तेन । **'एष दोषः'** इति साधकाभावबाधकसद्भावरूपः । अथ एतदेव स्फुटयति **'एवंच'** इति अस्मिन् संक्षेपे स्थिते इत्यर्थः । परेण च परमाणूनां समूह एव इत्थं भाति,—इति यदुक्तं, तत्र समूहप्रतिभासे

प्रसिद्धं यत् विभक्तावभासत्वमन्तरालाग्रहणोत्थापितसंयोगं नाम सहकृतादेव व्यापकत्वादेकरसभेदोद्भिद्यमानं व्यापकं, तत् दर्शयति **'राशि'** इति । तदनुपलब्धिं प्रकृते घटयति **'योऽयं चैत्रावभासः'** इत्यादिना । ननु यदि एक एव, कथं तर्हि उक्तं—एकानेकात्मा अवयवीति । एतदाह **'विभागानवभासात् पुनर्'** इत्यादि । अत्र उत्तरं **'तथापि'** इति । **'तत्'** इति पाण्यादीनां पृथक् योऽनेकत्वावभासः, तं व्यभिचरति यो वैतत्यावभासस्तद्रूपो यतश्चैत्रावभासः; तस्मादेकानेकत्वम् । तत एव उक्तं—वैतत्यमवभासमानं सति एव वास्तवे एकत्वे भाति—विततोऽयमेकः पट इति । विततं वनमित्यादौ तु आधारभूतधरणीगोलकगतादेकत्वादेवमवभासः । एतदेव स्फुटयति **'चैत्रे हि'** इति । **'तस्यैव'** इति अवयविगतस्य । एकावयविव्याप्ततया एव भान्तस्ते अवयवत्वेन भाता भवन्ति, इतरथा तु स्वतन्त्रा एव अयोगोलकनिकरकल्पाः कस्य अवयवतया भासेरन् । एतत् संक्षिपति **'अत एव विभक्त'** इत्यादिना । **'आन्तरम्'** इति नतु बहिः । एवं प्रत्यक्षमेव प्रमाणमवयविसिद्धौ परिशोध्य अनुमाने भरमकृत्वैव स्वरूपगतं बाधकं निरस्यति **'अत एव'** इति । **'तथैव'** इति नहि तत् रक्तं, अरक्तं वा किञ्चित् । चित्रमेव तु तदवयविनो रूपम् । अपरमपि परास्यति **'तुल्य'** इति स्वप्रमायासङ्कल्पगत इव घटपटादिर्व्यणुकादिप्रक्रममनादृत्यैव उत्पद्यते इति वक्ष्यते निरुपादानामिच्छामात्रोपादानां वा भावसृष्टिं निरूपयता । नियतिवशात् तु तथाक्रमावभासेऽपि परमाणुष्वेव गुरुत्वमवयविनिपातकारि भवतु नित्यम्, नतु गुरुत्वमवयविनि उत्पद्यते । यदिवा सदपि गुरुत्वं तथा न उत्पन्नं येन पाताधिक्यं कुर्यात् । विचित्रा हि भावस्वभावाः । घनावस्थास्थं लवणं जल-

संयोगि करोति तुलानतिविशेषणम्, तदेव तु द्रुतं न करोति सदपि रसातिशयोपलम्भात्। मक्षिकासहस्रमलिकुलमपि च क्षौद्र-पूर्णपात्रे न तुलामधिकं नमयतीति । **'अत एव'** इति यतोऽ-वयवानाम्, अतोऽत्र बहुत्वम् । **'उक्तम्'** इति यदुपक्रान्तं **'एकानेकाश्रयाः'** इति, तदिह सूत्रे निर्णीतं प्रागेवेत्यर्थः । **'विवृतम्'** इति वृत्तौ ॥ ५ ॥

क्रियाकारकसम्बन्धेऽपि भेदाभेदौ विमृश्येते सूत्रेण, तत्प्रस-ङ्गेन च दिगादिस्वरूपं

**क्रियाविमर्शविषयः कारकाणां समन्वयः ।**
**अवध्यवधिमद्भावान्वयालम्बा दिगादिधीः ॥ ६ ॥**

अनन्यत्रभावलक्षणा निमित्तता अत्र विषयार्थः । वृत्तिग्रन्थे-ऽपि एवम् । **'कारकम्'** इति द्रव्यं शक्तिश्च । तदियं योज-ना—शक्त्याधाराणां द्रव्याणां यः समन्वयः, स संश्लेषकजतुस्था-नीयक्रियापरामर्शनिमित्तको यथा प्रमाणप्रमेययोः प्रमानिमि-त्तकः; प्रमा च प्रमातृविश्रान्तता,—इति कर्तरि चिद्रूपे यदभेद-गमनं भिन्नानामपि कारकाणां, स एव समन्वयः । एवं काष्ठ-स्थाल्यादीनां पक्तरि वाच्यम्। एवं कारकशक्तीनामपि समन्वयः कर्तृविश्रान्तिपर्यन्त एव क्रियामुखेन तदुल्लासात् क्रियायाश्च कर्तरि विश्रमणात् । एवं क्रियायाः स्वलक्षणापेक्षया आदिकार-कापेक्षया च यो भेदो, यश्च एककर्तृविश्रान्त्या फलैक्येन च अभेदः; स एव समस्तसम्बन्धजीवितभूतः । अस्मादिदं परम-परमिति च या दिक्कालबुद्धिः, सापि अवधिमवधिमन्तं भिन्न-मेव सन्तमन्तरभेदपूर्वकं भेदावमर्शनमध्यमभेदपर्यन्ततया मेल-यन्ती सम्बन्धरूपत्वप्रधानैव । तत्रापिच चेतनस्य या परामर्श-क्रिया, सैव विजृम्भते इति क्रियाशक्तेर्भगवत्या अयं सर्वः

स्फार इति तात्पर्यमिति सूत्रार्थः । ग्रहणसूत्रं

'क्रियासम्बन्ध············ ।' ( २।२।१ )

इत्यादि । तत्र क्रियाया एव तावत् भेदाभेदौ कारकमुखेन उपपादयन् भेदं तावदाह **'कारकाणाम्'** इत्यादिना । तद्रूपोपरागावेशेन च क्रिया भाता,—इति भेदरूपत्वमस्याः । तथा आह कारकवार्तिके

**'भिन्नं पचेः स्वरूपं कारकभेदेन तद्बुद्धेः ।'**

इति क्रियाबुद्धेः । अथ अभेदमपि आह **'पचतीति च'** इति चकारेण भेदेन सह अभेदं समुच्चिनोति । पचति—इति अमुत्र परामर्शे क्रियाबुद्धेरभिन्नविषयता, यत एतद्रूपः पाकस्वातन्त्र्यमयो यः कर्ता, तदेकाविष्टतया सा क्रिया तया बुद्ध्या विषयीक्रियते । तस्य च कर्तुरेकरूपत्वं परमार्थः । एतदुक्तं भवति—काष्ठैः स्थाल्यामोदनं चैत्रः पचतीति वाक्यगम्योऽर्थः, सा तत्त्वतः क्रिया, तत एव आख्यातशब्दो वाक्यमिति उच्यते अत्रभवता । तत्र च काष्ठगतं ज्वलनादि, स्थालीगतं सन्तपनादि, तण्डुलगतं विचटनादि च यत्; तत् पाकरूपमित्येवं भेदेन आमर्शे स्फुरत्यपि चैत्रचेतनस्वातन्त्र्यविश्रान्त्यामभेद एव पर्यवस्यति । एतत्प्रमेयमुपसंहरति **'क्रियामतिरपि'** इति । न केवलं सम्बन्धधीरनेकविषया,—इति अपिः । ननु पूर्वमेव उक्तमेतत्

'सक्रमत्वं च लौकिक्याः क्रियायाः······ ।' ( २।१।२ )

इति । सत्यम्, इदं तु अन्यथा भेदस्य निरूपणम् । तदाह **'न केवलम्'** इति । **'कर्त्रैक्याच्च'** इति न केवलं फलैक्यादिति यावत् । एवं क्रियामेकानेकरूपामुपपाद्य वृत्तिग्रन्थस्य **'मतिः'** इत्यन्तस्य तद्व्याख्यातस्य श्लोकार्धस्य च प्रकृतमर्थं तात्पर्येण व्याचष्टे **'तत्र'** इति वृत्तिग्रन्थे श्लोकार्धे च । कारकताबुद्धिरपि

या, सा भिन्नानामपि कारकद्रव्याणां भवन्ती एकविषया अपि अनेकविषया कारकतायां बुद्धिरित्येतदत्र उक्तम् । क्रियाकारकताभावप्रतिपत्तेः शेषसम्बन्धप्रतिपत्तेश्च एकानेकविषयतायां तुल्यायां वैलक्षण्यमाह **'राज्ञः'** इति प्रतिपत्तुरित्यर्थः । ननु शेषसम्बन्धेऽपि क्रियाकारकपूर्वकत्वमुक्तम्,—इत्याशङ्क्य आह **'अत्रापि वा'** इति नतु तस्य पृथक्परामृश्यतेति भावः । दिग्देशकाला विमृश्यमाना आन्तरमेकत्वमाश्रयन्ते यतः प्राग्व्याख्यातया सम्बन्धप्रतीत्या विषयीक्रियन्ते । ते हि द्वितीयसम्बन्ध्यपेक्षया पूर्वापरत्वेन व्यवतिष्ठन्ते । एतदेव उदाहरणेन दर्शयति **'एषोऽसौ'** इत्यादिना, मध्यमदूरनिकटावमर्शोऽयं क्रमेण । **'कालोऽपि'** इत्यादि कालोदाहरणम् । **'अधुना'** इति पृथक्कालपरामर्शः, अयमिति तु भावगतावस्थानक्रियया एकशीलस्य वर्तमानस्य, स इति अतीतानागतयोः । उभयत्रापिच **'विमृश्यमानः'** इति हेतुशानजन्तं सम्बन्धनीयम् । एवं यतो देशः कालश्च विमृश्यते, ततः सर्वथा एते दिगादयो विमृश्यमानपूर्वापररूपत्वेन व्यवतिष्ठन्ते, ततो बहिर्भिन्नविषया आन्तरमभेदमाश्रयन्ते इति सङ्गतिः । **'अनुक्तमपि'** इति सूत्रे । ननु एवं भेदाभेदमयत्वं सर्वत्र तुल्यमिति साङ्ख्यादीनां को भेदः,—इत्याशङ्कां शमयितुं न एकरसतयैव सर्वत्र आभासानां प्रमातृविश्रमगमनम्, अपितु प्रमातुः स्वातन्त्र्यादनन्तकल्पेन वैचित्र्येण,—इति दर्शयति **'संख्याति'** इति । संख्यायमान एव अर्थः संख्या परस्परव्यवच्छेदने यदा प्रतीयते, नच व्यावृत्तिमात्ररूपतया नीलानीलवत्, अपितु परस्परापेक्षया, नच तयैव केवलया इतरेतरयोगप्रतीतिवत्, अपितु परस्परव्यवच्छेदकत्वेनेति ।

एतदुक्तं भवति—इह भावाभासे यदा आभासान्तरशङ्काशमनं कर्तव्यं भवति, तदा आभासान्तरेण निराक्रियमाणेन अवच्छिद्यमानो भाव एक इति उच्यते । तत एव एकवचनात् शब्दसंस्कारमात्रेण अपि चरितार्थीकर्तुं शक्यादेकशब्देन अभिधाने विशेषः प्रतीयते—एकः शिवः शरणं अस्माकमिति । एवमर्थान्तरावच्छेदेनैव इदमर्थान्तरमिह कार्यं इति द्वित्वसंख्या । तत एव द्वावेव पुरुषाविति प्रयोगः । तत्र हि न अन्यः प्रवेशं लभते इति प्रतिपत्तिः । द्वावपूपौ तु उक्ताविति अन्याप्रवेशः कथञ्चिदपि न तत्परिवर्जनं तेन विना न अन्यस्य तत्क्रियोपयोग इत्येवमाभासान् मेलयति प्रमाता । एवं त्रय इत्यादौ परार्धान्ते परस्परावच्छेदेन तदुपयोगो बहुशाखो मन्तव्यः । तत्र च आश्चर्यानाश्चर्यहर्षविषादाद्यर्थक्रियासहस्रसंभेदः । तत एव सम्यगिति प्राधान्येन चेत् भावस्य आख्यानं, तदवश्यमागच्छति स्वरूपस्य आभासान्तरेण अपेक्ष्यमाणेन अनपेक्ष्यमाणेन वा च्छेदः । तत उच्यते

'न विना संख्यया कश्चित् सत्त्वभूतोऽर्थ उच्यते ।'

इति । तत्र तु प्रातिपदिकार्थस्य संख्याभास उपसर्जनभावं प्रतिपद्यते । विभक्त्यर्थस्य हि स्वभावोऽयं—यत् प्रातिपदिकार्थे गुणीभावः । तत एकादिशब्दैः परस्परावच्छेदाभासः प्राधान्येन अवमृश्यते । तेन च वस्तुरूपमेव सङ्ख्यातद्विभेदात्मकम् । सङ्ख्या तु भेदगणनात्मिकेति उच्यते । **'परिमाणमपि'** इति

'अणु महत् ह्रस्वं दीर्घं च ।'

इति यत् परिमाणं काणादानां प्रसिद्धम्, तत्र ह्रस्वं दीर्घं चेति अदस्तावत्

'आयामस्तु प्रमाणं स्यात्............ ।'

इति प्रमाणलक्षणापन्नम् । प्रमाणं च नाम परिच्छिन्नवस्त्वन्तरा-पेक्षमिति चतुर्विंशत्यङ्गुलतया प्रसिद्धो यो हस्ताभासः, तेन यः समीकरणाभासः, न बहिः संयोगमात्रं; तत् । अत एव आह 'परिमाणमपि अन्तरैक्यभागेव परिमेयस्य वस्त्रस्य अपेक्ष्यमाणेन हस्तेन समन्वयगमनात्' इति दिष्ठ्य(यष्ठ्यु)पादानं ह्रस्वदीर्घविभा-गोत्थापनार्थम् । अणु, महदिति तु यदुच्यते, तत्र अणुत्वं यदि अभागतामात्रम्, तत् गुणकर्मादीनामभागानां स्यात् । अथ द्रव्यस्य अभावत्वमणुत्वम्, तदाकाशस्य अपि स्यात् । तस्मादतिसूक्ष्मतया प्रसिद्धेन सर्षपकवाटपिटिकपेटकेभ्यो लघीयस्तममेव यत् परितः परिच्छेदयोग्यत्वं, तदेव अणुत्वं, अन्यत् महत्त्वमिति । तदेतत्

'................परिमाणं तु सर्वतः ।'

इत्यनेन गृहीतम् । तदाह **'प्रस्थः कुडवः'** इति । परिमेयस्य तिलादेरपेक्ष्यमाणेन काष्ठसमुद्गकप्रायेण सर्वत्र समीकरणाभास-लक्षणं यत् परिमाणं, नतु संयोगमात्रम्; तदपि अन्तरैक्य-भागेवेति । यत्तु उन्मानं नाम ऊर्ध्वमानमिति लक्षितम्, तत् काणादैर्गुरुत्वमेव पतनकर्मकारि उक्तम्; नतु तथा न भवति गुरुत्वमात्रे मानव्यवहाराभावात्, अपितु प्रसिद्धं यत् प्रतिवर्त-कादिगुरुत्वं; तत्समीकरणमेव उन्मानं युक्तमिति वैयाकरणाः । तथाच मानता नाम त्रितये समाना; प्रकृष्टेति, परित इति, ऊर्ध्वतया वा मानोऽत्र मानरूपतयेति विशेषः । एतदेवच युक्त-मित्याह **'माषको रक्तिका'** इति । परिमेयस्य कनकादेरपेक्ष्य-माणेन प्रतिवर्तकेन गुरुत्वसमीकरणाभासलक्षणमिति परिमाण-मन्तरैक्यभागेव व्यवहारे क्रयविक्रयादौ प्रकर्षापकर्षाभ्यामेव परिमाणमुपयुज्यते इति सन्धानेन द्वे द्वे निदर्शने लिखिते । पृथक्त्वमपि भेदग्रहणपूर्वकमन्तःशङ्क्यमानाभेदमध्यं भेदाभास-

रूपम् । तदेव संख्यावच्छिन्नमेकपृथक्त्वादिपरार्धपृथक्त्वान्तम् । संयोगोऽपि अश्लिष्टरूपयोः श्लिष्टताभासः, विभागोऽपि श्लेषाभासपूर्वको नेति य आभासः, यतो विविक्तता भासते; स एव परत्वापरत्वे दिक्कालव्याख्यानेन व्याख्यायते । अन्यदपि यदत्र असंगृहीतमन्यापेक्षं भाति, तत् यथा—इतरेतरयोगो द्वन्द्वपदार्थधर्मः, समुच्चयश्चादिशब्दावशेषश्च; तत् सर्वं सम्बन्धस्य विस्फारमात्रमिति दर्शयति **'धवः'** इत्यादिना । विकल्पविशेषान्वाचयप्रभृति यदपि अत्य···न्त चादिनिपातपदार्थरूपं, यदपि समन्वयरूपमेव केवलं पाशवसृष्टिरूपं; तत् सर्वं साधारणीभावनियमादित्याशयेन काणादैरितरेतरयोगादि पृथक्पदार्थत्वे न गणितम् । सुखादिवदसाधारणतायामपि युक्तमेव गणनमिति तु आचार्यो मन्यते । तत एव धर्मपदार्थवादिभिर्वैयाकरणैश्च एवमादि न न गणितमिति । एतत् दर्शयति **'किमधिकेन'** इत्यादिना । **'अत एव'** इति यतो भिन्नानामपि यदभेदावभासनं, तन्निष्ठा एव व्यवहाराः; ततो हेतोः **'तत्र'** इति काणाददृशि समवाय इष्टः । सहि अयुतसिद्धानां भवंस्तानयुतसिद्धान् पृथग्जतियोग्यताशून्यानेकरूपतया अभेदेन अवभासनशीलान् करोति । ननु समवायलक्षणे सम्बन्धे भवतु अभेदविश्रान्तत्वं, युतसिद्धसम्बन्धे तु संयोगे तत् नास्ति । अत्रापि आह **'दण्डी'** इति । संयोगो हि दण्डपुरुषयोः समवायेन वर्तमानः संयोगेन अभिन्नौ तावाभासयन् पर्यवस्यति । ननु एवं तैः काणादैरेव यदिष्टम्, तदेव युक्तमिति किममुना दर्शनान्तरपक्षपातेन । उच्यते **'तेषां पुनर्'** इति । द्रव्यादयो हि पदार्था यदि भेदेन इष्यन्ते आभासनात्, तदा द्रव्यं द्रव्यत्वाभिसंबन्धादिति समवायस्य ऐक्यात् सर्वपदार्थसङ्करस्तावत् द्रव्येन उपलक्षितः सम-

वायो विशेषक इत्यपि शब्दमात्रम् । तथाहि उपलक्षणमात्रं गृहकाकवत् वा स्यात्, उत्पलनीलवत् वा, स्फटिकरक्ततावत् वा । प्रथमपक्षे न कश्चित् तद्भेदादुपलक्ष्यस्य भेदः । काकचटकश्येनोपलक्षणत्रयेण क्रमात् युगपद्वा उपलक्ष्यमाणं हि गृहं तदेव । द्वितीयपक्षे विशेषणविशेष्यभावोऽपि अदृष्टरूपे धर्मरूपे वा समवायेनैव विवृत्त इति तस्यापि न भेदः । तृतीये दृश्यभागः समवायः सर्वरूपोपरागचित्रीकृतो यत् यदनुगृह्णीयात्, तत् सर्वं सार्वात्म्यशबलतासङ्कीर्णमवभासयेत् समवायेषु भिन्नेषु उपगम्यमानेषु, तत्रापि समवायत्वं सामान्यम्, तत्रापि समवाय इत्याद्यनवस्था । प्रमाणसिद्धभेदांश्च भावानभेदेन समवाय आभासयति चेत्, सततभावितया भासमानमबाधितं मुक्त्वा किमन्यत् प्रमाणमस्ति यतः सिद्धभेदा द्रव्यगुणादयो भवेयुः । अनुमानं तदस्ति,—इति चेत्, तत् तर्हि अबाधितप्रत्यक्षबाधितत्वादननुमानमेव । अथ अभेदेन भासनं भ्रान्तं, तर्हि भ्रमोत्थापकः समवायः । ततश्च नियमेन प्रतीतिवैचित्र्यं कुतः । यच्च उच्यते तादात्म्येन इव भासनं समवायादिति, तत्रापि इवार्थः सादृश्यम्, उत्प्रेक्षा वा । सादृश्यं च कल्पितम्, अकल्पितं वा । कल्पनायां विकल्पमात्रसारत्वम्, उत्प्रेक्षायामयमेव विधिरिति अलं वस्तुचिन्तया । अकल्पितं कस्य केन साधर्म्यं घटत्वघटयोः, घटलौहित्ययोः, घटोत्क्षेपणयोश्च साधर्म्याभावात् । अथ अयमपर्यनुयोज्यः समवाय एवं करोतीति, तर्हि श्रुत्यन्तोपकल्पिता अनिर्वाच्याकारा इयमविद्या समवायवाचोयुक्त्या व्यवहृता भवेत् । अथ समवायस्य एवंविधं स्वातन्त्र्यम्, तर्हि परमेश्वर एव, तच्छक्तिर्वा अनेन नाम्ना अभिहिता,—इति अस्मद्दर्शनमेव शरणीकार्यमिति अलमवान्तरेण

बहुना । तदेतदाह **'भेदाभेदादिविरोधापत्तिदूषणैः'** इति ॥ ६ ॥

इह सत्तासम्बन्धः सत्त्वमिति अव्याप्त्यनवस्थाव्यर्थत्वोपहतम्, अर्थक्रियेति तु व्यधिकरणं, तत्करणत्वं न सदातनम्, ज्ञानजननेन तथात्वं सदातनमित्यपि न युक्तमङ्कुर इव बीजस्य स्वज्ञाने जनितव्याभिमते अन्वयव्यतिरेकग्रहणाभावेन कारणत्वानिश्चयादर्थक्रियाकरणयोग्यत्वं सत्यासत्ययोर्दुरवधारम्, अर्थक्रियान्तरेण च अनवस्था; सर्वस्य च अस्य अप्रकाशे शशशृङ्गसदृशता,—इति प्रकाशमानतैव अनुन्मूल्यमानविमर्शा सत्त्वम् । सा च सम्बन्धादीनामनातङ्कैवेति स्थितेऽपि यदि दुर्ग्रहात् कश्चिदाचक्षीत——लोकस्तावदर्थक्रियामभिलषति, सा किमस्ति सम्बन्धादीनामिति । तस्य हृदयमाश्वासयति सूत्रेण

**एवमेवार्थसिद्धिः स्यान्मातुरर्थक्रियार्थिनः ।**
**भेदाभेदवतार्थेन तेन न भ्रान्तिरीदृशी ॥ ७ ॥**

यदि सत्यं प्रत्येषि, तत् भेदाभेदमयेन सम्बन्धेन विना न काचित् व्यवहारभूमावर्थक्रिया । यत्रापि स न संवेद्यते, तत्रापि अवश्यमन्तःस्फुरन्नेव आस्ते । तथाहि सुखादि अर्थयमान एवमर्थयेत यदि तत् जानीयात् । एवंच जानीयात्, यदि तदेव तत् स्यात् तथापिच अनर्थनीयं भवेत् तस्य निष्पादात् । अत इदमापतितमनतिलङ्घनीयम्—यत् तदतद्रूपयोर्भेदाभेदमयता संबन्धसामान्यादिरूपेति । एतच्च यदि असत्यं, किमिदानीं सत्यमुच्यते । तेन योऽत्र भ्रान्तिव्यवहारं करोति, स एव परं भ्रान्तः । तत् ग्रहणकसूत्रितौ स्थिरत्वोपयोगौ युक्तावेवेति सूत्रार्थः । एनमवतारयति **'प्रतिभासानामेव'** इति प्रकाशमानतैव सत्तेति यावत् । बहिष्करणं बाह्येन्द्रियम् । तदपिचेति एकम-

भिलष्यतां स्मर्यमाणाकारतया आह, अपरं तु यदित्यनेन सङ्गतम् । **'मायीयम्'** इति भेद एव अत्र परमसत्य इति यावत् । **'स वा'** इति । अस्यां व्याख्यायां भावस्य अर्थक्रियां कुर्वत एकानेकरूपतास्वीकरणमितिकर्तव्यता,–इत्येवंभूत उपयोग उक्तः, स्थैर्यं तु संवादः; उत्तरव्याख्याने तु स्थैर्यं बाधकाभावः, उपयोगस्तु संवादः इति भेद इति शिवम् ॥ ७ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचिता-
यामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां क्रियाधि-
कारे भेदाभेदविमर्शो द्वितीयः ॥ २ ॥



# अथ तृतीयो विमर्शः ।

एकमनुत्तररूपात्प्रभृतित्रिकशक्तिपूरितानन्दम् ।
अमृतास्यमस्य जगतः प्रमाणभूतं शिवं वन्दे ॥

क्रियाशक्तिविजृम्भा इयमिति अभिधातुं सम्बन्धोपक्रमं सामान्यादीनां तत्त्वमुपपादितम्, अधुनातु सम्बन्धतत्त्वमेव उपपाद्यते वितत्य । तत्र परमार्थतो द्विविध एव सम्बन्धो ज्ञाप्यज्ञापकभावो यो जडाजडनिष्ठः, कार्यकारणभावश्च यो जडनिष्ठः । तत्र पूर्वो मानमेयात्मको यन्निष्ठितमुक्तं वक्ष्यमाणं च सिद्ध्यति । प्रमाणाधीना हि वस्तुसिद्धयः इति प्रसिद्धमेतत् । अत उक्तवक्ष्यमाणवस्तुसमर्थनोपयोगितया सम्बन्धरूपतया च अवश्यनिर्णेतव्यं मानमेयव्यवहारं निरूपयितुं विमर्शान्तरं सप्तदशभिः सूत्रैः

'इदमेतादृक्…………………… ।'

इत्यादिभिः

'…………ईशादिव्यवहारः प्रवर्त्यते ।'

इत्यन्तैः । श्लोकद्वयेन च अत्र प्रमाणतत्फलस्वरूपं निरूप्यते; ततः प्रमेयतत्त्वनिरूपणाय प्रत्याभासं प्रमाणव्यापारः, नतु नियमेन स्वलक्षणात्मकवस्त्वेकविश्रान्तः,—इत्यमुना तात्पर्येण विमर्शबलादाभासव्यवस्थेति दशकेन; तत्प्रसङ्गतो मिथ्याज्ञानतत्त्वमेकेन; प्रमेयतत्त्वं च प्रकृतमेव ईश्वरवादे घटते इति एकेन; मानमेयफलविभागः सति एव उक्तरूपे प्रमातरि उपपद्यते, तत एव न अस्य प्रमेयत्वं येन भगवत्यपि प्रमाणं उपयुज्येत आञ्जस्येन, व्यवहारमात्रसाधनं तु अत्र प्रमाणमिति त्रयेण,—इति प्रकरणार्थः । प्रतिसूत्रं तु अर्थो निरूप्यते । यदुक्तम्—क्रियादि-

बुद्धयो न भ्रान्ताः—इति, तत् निर्णेतुं प्रमाणतत्फलस्वरूपं प्रसिद्धमेव अनूद्यते श्लोकद्वयेन

इदमेतादृगित्येवं यद्वशाद्व्यवतिष्ठते ।
वस्तु प्रमाणं तत्सोऽपि स्वाभासोऽभिनवोदयः ॥ १ ॥
सोऽन्तस्तथाविमर्शात्मा देशकालाद्यभेदिनि ।
एकाभिधानविषये मितिर्वस्तुन्यबाधिता ॥ २ ॥

वस्तु बाह्यं नीलादिकं, आन्तरं च सुखादि यद्वशात् यस्य सामर्थ्यात् व्यवतिष्ठते विभक्तां नियतां मर्यादां न अतिवर्तते इदमिति स्वरूपेण, एतादृगिति नित्यत्वादिविशेषणभूतधर्मान्तरयोगेन; तत् प्रमाणमिति तावत् प्रसिद्धं लोके । तच्च किं स्यादिति विवेचको यावत् विमृशति, तावदिदमापतति—इह वस्तु स्ववशादेव न व्यवतिष्ठते, तदाहि मम नीलं प्रकाशते चैत्रस्य वेति न स्यात्; तदिदमन्यवशेन व्यवतिष्ठते । अन्यश्च यदि जडः, तदिदमन्धेन अन्धस्य मार्गदर्शनम्, तस्मादन्योऽसौ संविद्रूपः । सोऽपि निर्विशेषो नीलपीतादि कथङ्कारं विभागेन अवस्थापयेत्, तदसौ नीलोपहितो नीलोन्मुखो नीलप्रकाश इति स आभासो नीलस्य व्यवस्थापकः । नीलप्रकाशस्वभावताया हि न अपरा व्यवस्थापकता काचित् । नीलस्य च अव्यतिरिक्तस्य चेत् प्रकाशस्तथा भवेत्, स तर्हि पीतादेरपि न किं भवेत् संवित्तत्त्वतादात्म्याविशेषात् सर्वस्य । ततो व्यतिरिक्तस्य नीलस्य स आभासः प्रकाशः । इत्थंच अस्य व्यतिरिक्तता यदि महाप्रकाशादव्यतिरेके पारमार्थिके स्थितेऽपि व्यतिरेक आभासते । ततश्च इदं जालम्—शून्याद्युपाधिसङ्कोच एव यः प्रकाशस्य, अयमेव एकयैव सृष्टिशक्त्या प्रमातृप्रमाणप्रमेयोल्लासः । यथोक्तं सिद्धपादैः

'उद्रेत्येकः समालोकः प्रमाणार्थप्रमातृजः ।'

इति । तेन देहाद्युपाधिसङ्कोचवतोऽनन्तकालान्तर्मुखसंवेदनलक्षणात् मायाप्रमातुर्व्यतिरिक्तीकृत इव स आभासो बाह्यप्रमेयोन्मुखो यावत् वर्तते, तावत् प्रमेयगतदेशकालोपरक्ततया क्षणे क्षणे अन्यान्यरूपतया नवनवोदयः संस्तस्मिन्नेव स्वशब्दवाच्ये एकस्मिन्नेव अनन्तकालव्यापिनि मायाप्रमातरि सम्बन्धित्वेन निर्भासमानो मम नीलाद्यवभासो यस्यैव पीताद्यवभास इत्यादिना रूपेण यः, स एव प्रमाणमिति यतः स आभासः प्रमानिष्पत्तौ सव्यापारः । का खलु प्रमा,—इति चेत्, आह स एव बोधात्मा आभासो मितिः प्रमाणस्य फलमिति सम्बन्धः । नच पर्यायता, यतो बाह्योन्मुखत्वेन प्रकाशरूपतया तत् प्रमाणम्, अन्तर्मुखात्मना विमर्शरूपेण केवलं विषयोपरागसङ्कुचितेन शब्दनात्मना फलम् । एकनिष्ठे हि शूरत्वविजयित्वे विवेकिना हेतुफले इति निरूप्येते, तथा नीलप्रकाशतद्विमर्शरूपे । तत एव उक्तं

'तद्वशात् तद्व्यवस्थानात्.................।' (प्र०वा० ३।३०८)

इति । व्यापारात्मकमेव हि करणस्य प्रथमसाध्यत्वात् फलम् । व्यापारश्च व्याप्रियमाणात् कर्तुर्व्यापार्यमाणात् वा करणादनन्यात्मक एव युक्त इति मुख्यत्वेन प्रमाणफलयोरभेद एव न्याय्यः, फलफलेन तु प्रयोजनापरपर्यायेण प्रवृत्तिप्राप्त्यादिना व्यतिरिक्तेन भूयतां नाम । अतो विमर्श एव फलम् । तद्बलेन बोधः प्रमाणम् । विमर्शश्च शब्दं देशकालविशेषाभासानालिङ्गितसामान्यरूपाभासविश्रान्तं जीवितत्वेन अपेक्षते । 'अयम्' इत्यपि हि यत् वर्तमानं पुरश्च, तावन्मात्रमाह । किं बहुना, चैत्रोऽयमिह अधुना तिष्ठति,—इत्यपि यावत् शब्दगोचरः, तावदेषैव सरणिः । प्रोक्तृगतप्रत्यक्षात्मकवस्तुस्वालक्षण्यबलात् तु विशेषनिष्ठता,—इति आभासमात्रे प्रमाणस्य व्यापारः । स्वालक्षण्या-

भासेऽपि मिश्रणाभासस्वभावे शुद्धे एव प्रमाणं व्याप्रियते । तत् तु विमिश्रणाभागिषु अनन्तरेषु गृहीतग्राहित्वादप्रमाणम् । ततः प्रमाणविषयताभाजः पृथगेव आभासवर्गस्य वस्तुत्वम् । सच विमर्शो द्विचन्द्रबोधादुत्पन्नोऽपि उन्मूलनमन्ते सहिष्णुः पूर्वमपि उन्मूलित एव । अन्तर्मुखेन हि वपुषा स एव असौ, न अन्यः । स्वसंविदेवच अत्र साक्षिणी तदैव इदं न रजतमितिप्रतीतेः । द्विचन्द्रमपि परस्य विस्मयाय दर्शयन् परोपहासावज्ञाकृपादिपात्रीक्रियमाण एव द्विचन्द्रविमर्शे प्राच्यं तदैव वर्तमानतत्प्रकाशबलोपनतमपि एवमुन्मूलितमेव अभिमन्यते इति । तत उक्तं **'सोऽन्तः'** इति । एवं सूत्रार्थमवतारयति **'इदानीम्'** इत्यादिना । **'अत एव'** इति यत एवमुक्तमादिसिद्धसूत्रे इति व्यवहितमुपजीवनीयम्, तर्हि आदौ मा भूत्(?) तन्निर्देशः, एतत्स्थाने तु किमर्थः । आह **'आनुषङ्गिक'** इति क्रियाशक्तिविस्फारणप्रसङ्गात्मकादनुषङ्गादागता एकप्रमातृतत्त्वविश्रान्तिलक्षणानुषङ्गप्रयोजनकाश्च ये जात्यादयः, तेषां व्यवस्थापने 'आदिसिद्ध' इति 'येन अनवस्थादि न आपतति' इति 'व्यवह्रियते' इति 'न प्रमेयवत्' इत्यन्ते पृथग्भूतस्तत एव धर्मतया असौ युक्त इत्यर्थः । ननु नित्यत्वादि वस्तुनो विशेषणं सर्वप्रत्यक्षेण गृह्यते, कामं कतिपयं गृह्यतां, तत् कथमुक्तं **'विशेषणं च'** इति । अत्र आह **'नित्यतादि'** इति । ननु विशेषणव्यतिरिक्तं किमन्यत् स्वरूपमित्याशङ्क्य आह **'वस्तुमात्रेण'** इति । संसर्गैकान्तवादिनापि हि धर्माधाररूपं स्वरूपमभ्युपेतमेव यदेकनिष्ठतया तद्धर्मसहस्र—सामानाधिकरण्यप्रतिपत्तिः—अयं घटो रक्तो रौक्मो महान् हृद्य इति । ननु अविसंवादित्वं प्रमाणस्य यत् लक्षणं, किमिह त्यक्तमेव तत्, न त्यक्तं लौकिकत्वादिति दर्शयति **'वस्तु'** इति । **'वस्तु**

**व्यवतिष्ठते'** इति हि अनेन तदेव उक्तम् । **'प्रमात्रधीनम्'** इति प्रमात्रधीनतां तस्य प्रकटीकर्तुं वृत्तौ णिच्प्रयोग इति यावत् । प्रमात्रधीनतां स्फुटयति **'विमर्शोदये हि'** इति विमृश्यते इति णिजर्थो दर्शितः, व्यवतिष्ठते इति णिजर्थोऽपि प्रकृत्यर्थ एव प्रधानमिति सौत्रमपि व्यवस्थानमनुसृतम् । **'अस्यैव'** इति प्रमेयतां मायाशक्त्या नीतस्येत्यर्थः । **'व्याकुलीकरणात्'** इति बहिर्मुखत्वादरणेन अन्तर्मुखताया अवभाताया अपि अनुपलक्षणात् । **'अत्र च'** इति सम्बन्धित्वेन सिद्धात्तुद्गच्छन्नेव हि अवभासः स्वप्रकाशतया इत्थं प्रकाशते । ननु बाधितमेतत् स्वसंवेदनमिति किं न संभाव्यते । नैवमित्याह **'द्विचन्द्रादि'** इति । भ्रान्तबोधेऽपि स्वसंवेदनमभ्रान्तं सर्वत्रेति घटयति । **'अत्र हि'** इति । **'बाह्यं प्रति'** इति चक्षुरालोकबोधैः संभूय जनितेऽपि बोधे बोधरूपता बोधादेव, इन्द्रियात्तु विषयाकारतेति; ततो यथा कुम्भकारबुद्धिप्रभवो दोषः कुम्भस्य सन्निवेशं परं दूषयेत्, न मृदंशमपि; तथा चक्षुरुपरञ्जकविषयांशमेव, न बोधांशं भ्रान्तीकुर्यात् । चाक्षुषं बाह्यं प्रति भ्रान्तं स्वसंवेदनं तु सर्वदैव अभ्रान्तमिति वाक्यसम्बन्धः । मध्यग्रन्थस्तु बाह्यं प्रति भ्रान्ततासमर्थनाय । यतश्चक्षुर्विकृतं, ततो बाह्यं प्रति भ्रान्तमिति कुतः । विषयाकारता हि अर्थात्, न इन्द्रियात् । आह **'नच'** इति । प्रमा हि विषयोपरागयोगिनी तथा भवति । विषयश्च इन्द्रियेण सन्निकृष्टो वा इन्द्रियवृत्तिनिपतितो वा तथा कुर्यादिति इन्द्रियविकारे सत्येव न ऐन्द्रियिको विभ्रमः । ननु गच्छतो मरुदर्शनादौ न इन्द्रियविकारः, अथच इष्यते अस्य विभ्रमस्य ऐन्द्रियिकत्वम् । क एवमाह—न इन्द्रियविकारोऽत्रेति दर्शयति **'तावन्मात्र'** इति इन्द्रियविकार एव केवलोऽक्षविभ्रमस्य हेतुः ।

अविकृते हि इन्द्रिये भवन् कथमैन्द्रियिको विभ्रमः स्यात्। तदेव घटयति **'नौयानादिभिः'** इति । आशुभ्रमणनौयान-वातप्रकोपादिभिरिन्द्रियमेव भ्रमरूपारूढमशक्तं च संपाद्यते,—इति चक्षुष एव तत्र विकारः । ननु स्वसंवेदनं न बौद्धवदिह स्वतन्त्रम्, अपितु महाबोधपर्यन्तपशुप्रमातृलग्नम् । ततश्च बोध-मात्रता स्वसंवेदनेन सिद्ध्येत्, न द्विचन्द्रबोधता दृष्टे; नापि प्रकृते नीलमाभाति इत्येवंरूपता,—इति । एतत् परिहरति **'अव्य-भिचरित'** इत्यादि अभिन्नोऽत्यन्तं पृथक्ताभूमिमप्राप्तोऽपितु सादाशिवपदमध्यासीनो यः आभासविशेषो द्विचन्द्रनीलादिस्त-द्विषयो यस्तथाभावः संवेदनरूपताप्रकाशत्वं, तदव्यभिचरितम-भ्रान्तमनपायि च यस्य, तत् तथा । एतदुक्तं भवति—भिन्नाभि-मतं यत् नीलद्विचन्द्रादि, तदवश्यमभिशङ्कनीयम् । यत्तु बोधे दर्पण इव निर्भासते, तत् बोधसिद्ध्यैव सिद्धमिति द्विचन्द्र-नीलाद्याभासरूपे अत्र स्वसंवेदनमभ्रान्तमेव । **'द्विचन्द्रप्रति-भास इव'** इति दृष्टान्तं निरूप्य दृष्टान्तान्तरं समुच्चयेन आह **'यथाच'** इति यथा साधारण्येन नीलाभासविकल्पकाले स्वसं-वेदनादेव प्रतिपद्यते; यथा मम एवमाभासते इत्यपि यत् प्रकृतं, तत् स्वसंवेदनादेव प्रतिपद्यते इति योजना । अत्रच अर्थे स्वसं-वेदनं यत् प्रमाणमुक्तम्, तत् साकारबोधवादिना अपि अवश्या-भ्युपगन्तव्यमिति दर्शयति **'अत एव'** इति । यथा स्वसंवेदनं मुक्त्वा बोधस्य आकारभूताः इति, बोधस्य सम्बन्धिनः इति, बोधस्य नियमेन कर्मताव्यवस्थया विषय इति च यदुच्यते, तत् स्वसंवेदनादेव सिद्ध्यति, न अन्यतः प्रमाणात् । तथापि सम्बन्धित्वेन सिद्ध एवेति यदुक्तम्, तत्सिद्ध्या प्रकृतमपि प्रमेया-न्तरं सिद्ध्यति,—इति अधिकरणसिद्धान्ततामपि अनेनैव ग्रन्थेन

दर्शयति। '**अत एव**' इति बोधसम्बन्धित्वेन सिद्धत्वात् बोधमात्रपरमार्थत्वं नीलादीनामिति यत् प्रकृतं प्रमेयं, तदपि सिद्धमेव भवति संबन्धस्य अभेदविश्रमप्राणत्वेन तादात्म्यपर्यवसानात् । एवमिति हि यत् नीलात्मकं रूपं, तदवभासते इति सामानाधिकरण्येन अवभासब्रुडितम् । स च अवभासो बोधस्य सम्बन्धी सन् बोधतादात्म्यापन्नः । तत् किमन्यदवशिष्यते यत् बोधातिरिक्तं नीलस्य स्वरूपं स्यादिति । ननु एवं स्वसंवेदनसिद्धो नीलाभासविकल्पो बाह्ये नीले कस्मात् न प्रमाणमित्यत आह '**यतश्च**' इति । चः शङ्कां द्योतयति । आन्तरे विकल्पे नीलं मम अवभासते इत्येतावन्मात्रमस्ति, नतु बहिर्मुखाकारत्वे । बोधावभास एव एतत् नीलमित्येवंरूपः इह तु अस्ति । यत एवं मम आभाति, तत एतत् नीलमिति । ततश्च बहिष्करणप्रत्यक्षेण प्रमितं गृहीतमेतदिति नीलादि बाह्यमुच्यते, नतु विकल्पस्वसंवेदनप्रमितं तत् बाह्यमुच्यते । एवं स्वाभासमन्यथा व्याख्याय '**अभिनवोदयः**' इत्यस्मिन् व्यावर्त्यमपश्यतो मोहमपहर्तुमाह '**स च**' इति पुनःपुनरिति कालभेदेन सर्वदैव अभिनवत्वादनवोदयो न कश्चिदाभासः, किन्तु वेद्योपरागादन्यत्वानन्यत्वे तत्र, वेद्यस्य अपि ते प्रत्यवमर्शबलादिति तात्पर्यम् । '**वास्तवाभेद**' इति '**अवभास एव स्थितः**' इति वृत्तिपदैराभासव्यतिरिक्तं न अन्यत् स्थितं रूढं सत्यं किमपि अस्ति,—इतिवदद्भिरभेद उक्त इति यावत् । एवं प्रमाणसूत्रे वृत्तिं व्याख्याय फलसूत्रे व्याचष्टे '**स एवच**' इति । '**अत्र**' इति वृत्तिवाक्ये । '**अत्रापि**' इति न केवलं पूर्वमिति अर्थसिद्धम् । बौद्धदृशि दर्शनाध्यवसाययोः कालभेदात् कथमैक्यमिति न प्रमाणफलयोरभेदः, तद्दृष्टाविव त्वद्दर्शनेऽपि कथमसावित्या-

शङ्कते **'चक्षुरादि'** इत्यादिना **'यद्यपि'** इत्यन्तेन । **'तथापि'** इत्यादिना अत्र उत्तरमाह । बौद्धदृष्ट्या अपि 'विकल्पा हि प्रत्यक्षायन्ते' इति दर्शनाध्यवसाययोरेकत्वव्यवहारः । एवं परदृष्ट्याशयेन उपपाद्य स्थितदर्शनाशयेन उपपादयति **'अथवा'** इति अत्रैव एकघने प्रकाशविमर्शात्मनि रूपे । उक्तं हि

'साक्षात्कारक्षणे...................... ।' ( १।५।१९ )

इति । तदेव घटयति **'एकैवहि'** इति । एकस्यां प्रतीतौ चिन्मात्ररूपतया तावता परमार्थप्रमातृरूपा वेद्यच्छायोपरक्ता संविद्रूपा च ईश्वरता प्रमाणात्मिका । **'वक्ष्यते'** इति आगमाधिकारे । ननु शिवता प्रमातृदशा; ईश्वरता तु प्रमाणदशा, फलदशा तु का । आह **'तदेवच'** । इति **'अयम्'** इति स्वसंवेद्यः । सव्यापारविमर्शं व्यापारसंपत्त्या प्रमातृताया उल्लासो विद्यातत्त्वात्मा विमर्शो भावस्वरूपमात्रे विशेषणे वा द्वये वा यः, तदेव प्रमाणस्य फलं; संसारभूमौ तु सर्वमेतत् मायास्पृष्टत्वात् मलिनमिति आशयशेषः । ननु **'वस्तुनो विशेषणैः'** इति उपक्रान्ता वृत्तिः, तत एवं वृत्त्यन्तरेण भवितव्यम् **'इदमिति'** **'नित्यमिति वा'**, तत् पुनर्निर्देशे क आशयः । अयमित्याह **'आभास एव'** इति । **'स एवच आभासः'** इति हि वृत्तिग्रन्थे य आभासः प्रमाणत्वेन उक्तः, तमेव अतिनिकटमपेक्ष्य निर्देशः प्रकृतं प्रमाणप्रमेययोरभेदं तात्त्विकमाचष्टे इत्यर्थः । ननु एवं प्रतीतिः प्रमातृप्रमाणमयी,—इति कथम् । पूर्वं प्रमाता, ततोऽपि तद्व्यापार्यमाणं करणं, तद्विषयश्च प्रमेयमिति हि युक्तम् । नैवमित्याह **'सति'** इति । ननु एवं चेत्, कथमयं लोकव्यवहारः—पूर्वं प्रमातेत्यादि । उच्यते **'अन्यदा तु'** इति । यत् व्याख्यातमस्माभिः—मायास्पृष्टमेतत् सर्वमिति,

तदेव भङ्क्त्वा निरूपयन्नेवम् '**एकाभिधान**' इत्यादिवृत्तिं व्याचष्टे '**सांव्यवहारिकस्य च**' इति। संभूय संवृत्य संकोचेन च व्यवहारः, तत आगतस्तत्प्रयोजनस्तत्रभवश्च यः प्रमाता; तस्य। '**प्राक्**' इति

'तद्तत्प्रतिभाभाजा·············।' (१।६।३)

इति प्रकरणे। अभिलापेन साधारणो य एव अभिलापविषयः, स एव अर्थो यस्य तद्भावस्तत्ता; तया। अभिलापसाधारणश्च अभिलापेन सह तस्य यः प्रथते, सोऽभिलापसंवलित इति यावत्। यद्यपि अभिलापसाधारणार्थत्वमेकसामान्यविषयतायां हेतुः, तथापि पूर्वप्रतिपादनमात्रतात्पर्येण समुच्चित्य अनयोरभिधानं तत् यथा शब्दस्य कृतकत्वमनित्यत्वं च उक्तमिति। इयता विमर्शविशेषमनुसरति अवश्यं य एकैकः शब्दस्तद्वाच्य इति या वृत्तिः, सा व्याख्याता। '**अत एव**' इति यत एकसामान्ये प्रमातृव्यापारः। एकैकमेवच सामान्यं वस्तु प्रमात्रध्यवसायादर्थक्रियायोगाच्च,—इत्याह '**भिन्नाभिन्नसन्धान**' इति कश्चित् प्रमाणविषयः। '**वस्तु**' इति प्रधानं द्रव्यम्। '**भवति**' इति विधेयं वस्तु अपेक्ष्य स्थित्या निर्देशः, एवमुत्तरत्र विशेषणमपेक्ष्य। तदेव कुतोऽस्य विशेष्यत्वम्। उच्यते '**तदन्तर्**' इति। तद्विचित्रीकरणव्यापृतैरेव तैः पृथुबुध्नोदराकारसाध्यैर्वा अर्थक्रिया निर्वाह्यते। यद्यपि च तेषां निजनिजा नाना अस्ति सा, न च न अर्थ्यते भिन्नाभिसन्धानादेव; तथापि चित्रपटेन आतानवितानात्मना यैव आवरणरूपा कर्तव्या, तस्यामेव शोभाभिमानादि अनुप्रविशत् चित्रताधायकम्। नहि रहसि कान्तसमेता रमणी चित्रपटं परिधत्ते शोभामाधातुम्, नरपतिरास्थानमण्डपे वा रचयति शिरसि मणिनिचितमपि कनककलशमित्याशयेन

आह **'प्रायेण'** इति । **'अत एव'** इति पृथगनर्थ्यमानत्वेन । **'अत्र'** इति तु विशेष्यप्रधानभूतद्रव्यवाची । यथा पूर्वमुक्तं

'किञ्चित् वस्तु भवति ।'

इति

'आत्मा वस्तु स्वभावश्च शरीरम् ।'

इति च । **'अग्रे'** इति

'तथैव सद्घटद्रव्य.................... ।' (२।३।५)

इत्यत्र । **'विकल्पस्यैव'** इति, अनेन विमर्शभेदानुसारित्वमेव द्रढयति । **'कदाचित्'** इति सन्निहितानामपि मध्ये एकैव अर्थ्यते, तावता तु न तावतीनामसन्निधानमिति भावः । **'सर्वथा'** इति एकस्मिन् सामान्ये तत्समूहे वा भवतु विमर्शः, इदं तु अहेयं मायापदे इति व्यवहारपदेन आह । **'अत एव'** इति यतोऽर्थक्रियाप्रापकत्वमस्य, ततः । ननु अर्थक्रियाप्रापकत्वं च अस्तु बाध्यत्वं च, को विरोध इत्याशङ्क्य विरोधं दर्शयति **'अर्थक्रिया'** इति । अर्थक्रियाकारि बाह्यं साधारणमेतत् न भवति,—इति बाधस्य रूपम् । एतद्विपरीतं च प्रमाणप्रतिलब्धस्य अर्थक्रियाक्षमवस्तुप्रापणस्य,—इति युक्तो विरोधः । ननु अर्थक्रियाक्षमरूपस्य बाधकं किं करोति । उच्यते ऐन्द्रियिकमानसविभ्रमभेदेन उदाहरणद्वयमुक्तम् । **'नो रुणद्धि'** इति झगित्येववा उत्पन्नमपिवा आन्तरोन्मूलनेन । एवकारार्थं स्वयमेव स्फुटीकरोति अनुवृत्तिभङ्गकरणेन हि उन्मूलनं प्रायशो विमर्शस्य, बाधकेन तु उत्पत्तिविरोध एवेति स्पष्टयितुं **'ननु'** इत्यादिना। **'अत एव'** इति यत् सम्पन्नं प्रतिभासनं, तत् किं बाधकशतैरपि शापशतैरपिवा न सम्पन्नं भवति,—इति यतः, ततो हेतोरबाधितत्वमिति प्रमाणतायाम्, बाधनीयत्वमिति अप्रमाणतायाम्।

अनेन विरोधो बाधप्रमाणत्वयोर्निर्वाहितः। मायापदे च अवश्य-मेतदुपयुज्यते इति दर्शयति **'प्रमाणं हि'** इति ज्ञानमेव प्रमाणम्। **'उपयुज्यते'** इति प्रमाणतया उपयुज्यते। **'एवमर्थम्'** इति अन्वयद्वारेण प्रयोजनं दर्शितं **'तन्निश्चायितः'** इति व्यति-रेकोपक्रमेण। तेन विसंवादभीरुभिः प्रमाणमर्थ्यते इति संवा-दकमेव प्रमाणमिति। ननु किं संवादनेन, प्रवर्तकतामात्रेणैव तथा अस्तु। न,—इत्याह **'प्रवृत्तिः'** इति अपिशब्दाद-ज्ञस्य अपि विपरीतवेदिनोऽपि अर्थितातारतम्यात्। मत्तोऽपिहि प्रवर्तते सविषेऽपिच अन्ने ज्ञाते मूढः, अन्यथा दृष्टप्रत्यवायेऽपि परस्वहरणादौ कथं प्रवर्तेत अनर्थनिश्चयवानपि। एवमियता मायापदे बाह्यदर्शने इव प्रामाण्यं यदुपपादितं, तत् विज्ञानवादी विघटयति सिद्धान्तिमते मध्य एव अनुप्रविश्य **'एवं तर्हि'** इत्यादिना **'प्रतिपत्तव्यम्'** इत्यन्तेन त्वया कुतः प्रकारादेत-दङ्गीकर्तव्यमित्यर्थः; सिद्धान्ती वा पूर्वापरविरोधमाशङ्कमानं परिहर्तुं स्वदर्शनमेव विमृशति अनेन ग्रन्थेन, शिष्यो वा विमर्श-यति एवंब्रुवाणः। **'निश्चीयेत'** इति अर्थक्रियासमर्थतया अपि भास्वरतैव निश्चीयते इति संभाव्येतेत्यर्थः। **'नियतिशक्तेः'** इति पञ्चमी, तया हेतुभूतया अर्थक्रियासमर्थ इति पूर्वेण सम्बन्धः। उक्तं हि चिन्मयत्वसूत्रे

'अर्थक्रियापि बाह्यत्वे सा भिन्नाभासभेदतः।' (१।८।६)

इति, वक्ष्यते च

'अर्थक्रियापि सहजा नार्थानाम्······।' (२।३।१२)

इति। **'भवति'** इति यत् संभाव्यते। **'तथाच'** इति एवं सतीत्यर्थः। केशादेर्दर्शनमात्रात् विशेषो न अवधार्यः, अय-मित्यादिरित्यन्तश्च विशेषस्य आकारः काममियत्यपि यदुक्तं, तदपि

विघटयति '**अर्थक्रियाज्ञानावसरेऽपि**' इति । '**एतदव-भासे**' इति केशार्थक्रियावभासे यो लोकाकर्षणादिः कान्तायाः । कूटकार्षापणादपिहि मूल्यप्राप्तिर्भवति । '**विधिवशतोऽनर्थका-रिणोऽपि**' इति अर्थक्रियाकारित्वेन यो न अभिमतः, तस्य अपि । '**ततोऽपि**' इति सुखाद्यर्थक्रियातोऽपि न अर्थक्रियासमर्थोऽव-धार्यते अयमेव तथा, अयं तु न तथेति । नच युक्तं वक्तुं—प्रमा-तृव्यवसितार्थक्रियाकारित्वेन सत्यत्वमिति प्रमात्रभिमतत्वस्य बहुधाविघटनदर्शनात् । स एवहि रूपकविशेषः कदाचित् तृण-शतं प्रापयेत्, कदाचित् तृणपञ्चाशतमिति भूयाननियमः । अत एव तदर्थक्रियाकारित्वं यथानियतं, तथा तत्कारणजन्यत्व-मपि । तथाहि अरणिलोहयन्त्रगल्वर्केन्धनपाषाणप्रभवेषु वह्निषु कतमं वह्निमाचक्षीमहि । अतस्तज्जन्यत्वं भावाभासस्य स्वभाव इति अयुक्तम् । नहि यावान् व्यावृत्तिवर्ग एकदा भावाभासस्य दृष्टः, तादृशेन तेन सदा भवितव्यं तद्देशत्वतत्कालत्वाद्याभासा-नामपि अन्यतानुवृत्तेरयुक्ताया अपि प्रसङ्गात् । अथ यावता व्यावृत्तिवर्गेण सामान्यसमूहेन वा तत् भावशरीरमवश्यं व्या-प्यते, तावत् तस्य वपुः । तत्रापि न इयत्तां विद्मः । प्रतीतिप-र्यालोचनया च भावस्य आभासमानरूपतात्यागेन रूपान्तरमुप-पद्यते इति । तदसत्याभिमतेऽपि केशे केशतया प्रतिभासमाने कथं न सत्यतेति । एवमर्थक्रियासमर्थरूपावधारणस्य अशक्य-त्वमुपपाद्य व्यर्थत्वमुपपादयति '**उत्तरकालम्**' इति । अनि-श्चितप्रामाण्यादेवहि प्रवृत्तेः पश्चाल्लब्धायामपि अर्थक्रियायां प्रमाणं परीक्षणमिति न तत्र प्रामाण्यनिश्चये सा उपयोगिनीति

'प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् ।'

इति वात्स्यायनीयमपि अयुक्तमेव । एवं प्रत्यक्षमुपप्लुतीकृत्य अनु-

मानमपि तथा करोति '**तत्**' इति । प्रत्यक्षस्य प्रामाण्यमनिश्चितं चेत्, तर्हि पक्षधर्मत्वसपक्षसद्भावविपक्षव्यावृत्तिप्रायं स्वरूपं प्रत्यक्षेणैव मूले निश्चेतव्यं यस्य लिङ्गस्य, तदपि न सिद्धम-प्रमाणगृहीततत्त्वस्य अलिङ्गत्वादिति '**लिङ्गतोऽर्थदृक्**' इति यदनुमानं, तदपि न किञ्चिदिति न प्रमाणव्यवस्था काचित् । प्रामाण्यावधारणस्य अशक्यतामुपगम्य यत् निष्फलत्वमुक्तम्, तत् तावत् परिहरति अशक्यता हि पूर्वपक्षवादिनैव अभ्युपगमं दर्श-यता शिथिलीकृतेत्याशयेन । '**इह**' इत्यादिना विभागव्युत्पत्तये प्रामाण्यमवधारणीयम् । सा च यत्नहातव्ये यत्नोपादातव्ये च अवश्यमुपयुज्यते । तदाह '**कदाचित्**' इति । '**विनापि**' इति ग्रामात् स्ववेश्म प्रत्यागच्छन् न दग्धं, न लुठितं, न ततो धन-सुतदाराः केनचित् नीताः इति कथं निश्चिनुयात् । '**तथाच**' इति तेन प्रकारेण योऽभ्यासस्ततो हेतोरित्यर्थः । युक्तं च एत-दित्याह '**तथाहि**' इति '**सन्निवेशान्तरे तु**' इति दूरदेश-विगुणेन्द्रियास्पष्टालोकादौ सति । '**अर्थाः**' इति अर्थविषयज्ञा-नस्वरूपमेवं भवति,—इति संबन्धः । '**तेन हि**' इति संवादेन । तत्स्वरूपं दर्शयति '**यत्तत्**' इति लोकप्रसिद्धमेव, नतु अपूर्वं स्वपरिभाषितं किञ्चित् प्रमात्रैव क्रियते इति । प्रमातुः स्वातन्त्र्यं यदुक्तम्, तत् दर्शयति '**अव्यभिचार्यर्थान्तर**' इत्यादिना । '**व्यवतिष्ठते**' इति परोक्षेऽर्थे ज्ञानमिति सिद्धान्तः । एतदुक्तं भवति——प्रत्यक्षमर्थसामर्थ्यात्, अनुमानमर्थान्तरसामर्थ्यात्, आगमः प्रमातृसामर्थ्यात् तथा विततावितप्रमात्रन्तरसाम-र्थ्यादिति विशेषः । '**तिरश्चामपि**' इति । ते हि दण्डमुद्यतं दृष्ट्वा प्रहारमनुमिमते, उपदेशं गृह्णन्ति, स्वजातिप्रसिद्धिं च आद्रियन्ते । असकृत्परिशीलितेऽपि अवधानरक्षणा भवति उपदेशो

इति दृष्टान्तेन घटयति **'असकृत्'** इत्यादिना । **'तदर्जनोपाय उपदिश्यते'** इति संबन्धः । परस्य लोकायतस्य सम्बन्धिनं श्लोकोक्तमाक्षेपमाशङ्क्य ननु प्रामाण्यविषयोऽनवधानजनितो मोहः किमिति यत्ननिवर्तनीयः । आह **'अदृष्टे च'** इति । दृष्टेऽपि तावत् प्रामाणिको जनः प्रवृत्तो विफलतया विडम्बनात्त्रस्यति, अदृष्टे पुनर्महान् प्रत्यवायो दुःखवेदनीयनरकात्मा, अनन्तं च क्रमतारतम्येन स्वर्गापवर्गलक्षणमानन्दरूपमवश्यं हानोपादानविषयः प्रेक्षावताम् । **'अनर्थ'** इति दृष्टविषय इति मन्तव्यम् । तथाहि राजिलसर्पं मालात्वेन निश्चित्य उपाददानो मरणे नरकपातानुबन्धिना प्रयुज्यते इति प्रत्यक्षं विवेक्तव्यम् । अनुमानं च तत्र अनुसरणीयम्—एवंविधे महति कान्तारे कुतश्चित्रकुसुमोम्भितस्रक्सम्भवः इति । एवमियता प्रत्यक्षानुमानयोर्दृष्टविषयतया सातिशयान्वेषणीयं सत्यादौ चित्रादौ दृष्टविषयतायामागममपि अनुग्रहीतुमस्ति सामर्थ्यमिति दर्शयता परस्परानुग्रहतन्त्रत्वं प्रमाणानामुक्तम् । तथाहि प्रत्यक्षदृष्टमपि अर्थक्रियासु शिष्टैर्योज्यमानामागमलक्षणां प्रसिद्धिमपेक्षते एव—इयं सा गौर्यस्याः क्षीरं पथ्यं पवित्रं च, इयं सा गर्दभी यस्याः पयोऽग्निसादनमपवित्रं चेति । तत एव प्रमाणसमूहादेव प्रवृत्तिरिति वक्ष्यते

'सा तु देशादिका................... ।' (२।३।९)

इति । स च एकान्तमुखस्वतन्त्रपरामर्शसंयोजितवियोजिताभासस्वसंवेदनरूपपरमेश्वरस्वातन्त्र्यवाद एव युज्यते,—इत्येतदपि अग्रे भविष्यति । इह आस्तां तावत् । **'ततश्च'** इति यदवश्यानुसरणीयमुक्तम् । इदं च अस्माभिरादिवाक्य एव व्याख्यातम्; विवृतिकृत्तु पूर्वमाख्यातमधुना संक्षेपतो व्याख्यातुं पठति

**'प्रसिद्ध'** इति । प्रतीतेर्निरूढिर्दृढता । शब्दनरूपत्वं विमर्शनं यदान्तरं चित्स्वभावस्य अन्तरङ्गं रूपं प्रत्यक्षादेरपि जीवितकल्पं, तेन यत् विमृष्टं, तत् तथैव भवति,—इति न अत्र विवादो यथा गरुड एव अहं क्रीडामि पन्नगैर्विषममृतीकरोमीति । तथाच आहुः

'आत्मानं यादृशं योऽत्र भावयेत्तादृशो ह्यसौ ।'

इति,

'आत्मानं यादृशं वेद देवा एनं तथा विदुः ।'

इति च । ततः स एव विमर्श आगम इति उच्यते मुख्यतया, तदुपयोगितया तु उपचारेण तज्जनकोऽपि शब्दराशिः । परोक्षे च अर्थे तस्य प्रामाण्यम् । प्रत्यक्षप्रमिते हि तत्फलमकिञ्चित्कर-मिति धूम इव अग्नेरित्यादिकं केवलमप्रमाणम् । एतत् हि प्रमाणमध्ये निषेध्यत्वेन वा उपयोगान्तरेण वा देशकालभेद-सृष्ट्यन्तरादिनिरूपणेन वा प्रमाणतां भजतां नाम अञ्जनादि इव प्रत्यक्षताम् । **'यत्र यदा'** इति व्याचष्टे **'यथा यस्य अर्थस्य'** इति । अनेन च एतत् परिहृतम्—यदाहुरेके वक्तव्यं कोऽसाविति वृद्धाम्भिरिति, तथा कस्य क आगमः इति परस्पर-विरुद्धोपदेशिनो हि आगमाः, नच य एकस्य आगमः, सोऽन्यस्य अनागमः इति युक्तं प्रमाणस्य अपक्षपातित्वादिति । तथाहि अपक्षपातित्वं कीदृक् प्रमाणस्य । किंनु खलु भोः प्रत्यक्षानुमाने चैत्रीये मैत्रस्य नीलवह्न्यादिकमवभासयतो येन अपक्षपातिनी स्याताम् । चैत्रं प्रति वा यः सिद्धादेशः प्राप्तः—ते निधिलाभो भविता—इति, स किं मैत्रस्य आगमः । अथ तथाजातीये प्रत्य-क्षानुमाने मैत्रस्य अपि कदाचित् भवत इति अपक्षपातिता, सा तर्हि आगमस्य अपि अविशिष्टा । अवश्यं हि सौगतचार्वाकादेरपि

क्वचन प्रत्ययितपुरुषवचसि प्रतीतिनिरूढिर्भवेदेव । तथाहि दृढ-विमर्शरूपं शब्दनमागमः आ समन्तादर्थं गमयतीति तत्र यथैव अप्रमाणभूतद्विचन्द्रसंवेदन उपयोगमुपगच्छदालोकेन्द्रियादिकम-प्रमाणम्, नच इयता सम्यक् प्रत्यक्षस्य पक्षपातिता प्रसज्यते काचित्; तथा ज्योतिष्टोमादिवाक्ये शूद्रादीनामनधिकारिणाम-दृढविमर्शरूप आगमाभासे उपयोगं व्रजन्नप्रमाणभूतोऽपि श्रद्धा-द्रवति द्विजे दृढविमर्शात्मकसम्यगागमरूपशब्दनोपयोगे प्रामा-ण्यमासादयन् न पक्षपातादिवाच्यतार्हः । सर्व एवहि आगमो नियताधिकारिदेशकालदशासहकारिप्रभृतीनामृश्य विधिनिषेधा-दिविमर्शमयः । ततश्च कश्चित् पुरुषः कंचिदेव देवसिद्धाद्यन्य-तमकरणीयोचितविमर्शं स्वात्मसंयोजनेन विमृशन् भगवता सृष्टः, अन्यस्तु अन्यं विमर्शमिति 'रिक्तस्य जन्तोः' इति असदेतत् । दृढनिरूढिरेवच तत्तदधिकारिलक्षणं मुख्यमिति दर्शितं श्रुत्यैव 'यश्चैनमेवं वेद ।' इति 'विद्वान् यजेत ।' इति । तदर्थमेवच उक्तं 'श्रद्धामयोऽयं पुरुषः ।' इत्यादि । एतच्च अग्रे स्फुटीभवि-ष्यतीति । **'युक्तिमान्'** इत्यादि व्याचष्टे **'तस्याश्च'** इति प्रतीतिनिरूढेः । **'न्यायः'** इति अनुमानम् । ईश्वरसद्भावे हि सन्निवेशकार्यादिलिङ्गजमनुमानमस्त्येव, तत्त्वभुवनादीनां तु इय-त्तायां नास्ति अनुमानमिति आगम एव तत्र शरणम्; एवं शास्त्रनिबद्धायामुभयं व्याख्याय लोकपरम्पराप्रतिष्ठितायां व्याचष्टे **'लोकेऽपि'** इति । **'कश्मीरेषु'** इति मध्यपूर्वकालदेशादौ हि धीवरा एव गृहकरणीयं भूयसा विदधते; शास्त्राश्रितायां शास्त्रेण गृहीतव्याप्तिका युक्तिरनुमितिः, तया अनुगमः संवादो मुख्य-मिति तेनैव वस्तुनो निश्चये कृते युक्तेर्गृहीतग्राहित्वम् । ननु विपर्ययो न कस्मादित्याशङ्क्य आह **'यतः'** इति । प्रत्यक्षेण

हि तावदिन्द्रियजेन स्वसंवेदनेन योगाभ्यासजेन च नीलसुख-ब्रह्मलोकादिरर्थः साक्षादेव अवभासते । तत्र संशयाभावात् युज्यते इति न युज्यते वक्तुम् । यत्र हि परोक्षत्वं तत एवच संशयास्पदत्वम्, तत्र यो निश्चयो विषयभावोऽर्थस्य; स युज्यते इति व्यपदिश्यते । तत्र हि अद्रौ दृष्टे परेण किमत्र अग्निर्नवा,—इति पृष्टे अग्निरस्ति अत्रेति प्रत्युक्ते कथमिति पुनः पृष्टे धूमादिति उक्ते प्रथम आह युज्यते इति हेतुर्न उपपाद्य इति यावत् । तथाच तत्रभवानाह

'प्रसिद्धन्यायकरणो युजिर्भाष्ये उदाहृतः ।'

इति । अतो युज्यते यया सामग्र्या अर्थः, सा युक्तिरनुमानमेव उच्यते । यत्तु कैश्चित्

'बुद्धिः पश्यति या भावान्············ ।'

इति 'युक्तिर्युक्तिरेव' इति 'अमन्दत्वं प्रज्ञायाः' इति 'अनुमानपरिकर' इति युक्तिस्वरूपमुक्तम्, तदग्रे परीक्षिष्यते योगिनिर्माणतासूत्रे प्रतिबन्धचिन्तायाम् । ननु युक्तिरनुमानं यदि, तथापि कथमियममुख्या । आह **'तच्च'** इति अनुमानम् । **'कार्यादि'** इति कार्यस्वभावद्वयरूपं कार्यं, कारणं संयोगि समवायि विरोधि चेति लैङ्गिकमिति वा पञ्चकरूपम् । इदमस्य कार्यम्, अस्य स्वभावः; अस्य कारणं अस्य संयोगि अस्य समवायि अस्य विरोधि नियमेन,—इत्येवंभूतो यः कार्यादिभावः, स दुर्लक्षः सन्नपि अवधारयितुमशक्यो यस्य, तथाभूतं लिङ्गम् । ततश्च **'सुविवेचितम्'** इत्यादि यदुक्तम्, तदशक्यानुष्ठानमेव शेषशिरोरत्नधारणसंपाद्यव्याधिविध्वंसवत् । एवं सदपि नियतविषयं कार्यादित्वमनवधारणीयमुक्त्वा तदपि न सदिति दर्शयति **'योगि'** इति । योगिनिर्मितं वा इदं स्यात्, इतरत्

वा लौकिकमित्यपि न अवधारयितुं शक्यम् । **'प्राक्'** इति

'अर्थक्रियापि बाह्यत्वे सा भिन्ना••• ।' (१।८।६)

इत्यत्र । ननु धूमस्य पाण्डुरत्वोद्गच्छत्त्वादिवदग्निजत्वमपि रूपम्, तदनग्निजो धूम एव न भवति; यदि स्यात्, इहापि अनग्निजत्वमेव अस्य आपतेदिति अग्नेर्न स्यादसावित्याशङ्क्य आह **'कार्यकारणभावश्च'** इति **'अस्वाभाविक'** इति । यदिहि कश्चिदग्निर्नाम भवेत् धूमो वा, तदा तयोर्यो नियमः पौर्वापर्यलक्षणः; स स्वभावो भवेत् यावता तावेव न कौचित् संविद्विजृम्भां मुक्त्वा । संविदेवहि तथा प्रथते स्वप्नसङ्कल्पयोगिनिर्माणादाविव । केवलं संविद्विजृम्भावशादेव यत्र नियतिशक्त्या आनन्तर्यनियमोऽवभास्यते, तत्र जाग्रद्व्यवहारः कारणतानिश्चयश्च । तत्र कुतोऽयं निश्चयः—अग्न्यनन्तरेणैव धूमेन भवितव्यं तात्कालिकस्य दर्शनस्य सर्वत्र अव्यापारात् भूयोदर्शनेऽपि अनाश्वासात् । भूयोदर्शने च सामग्रीमध्ये स्वात्मसन्निधानस्य प्रवेशितत्वात् मयि एतावद्देशविशेषांशमात्रमनधितिष्ठति अद्रष्टरि न भवति धूम इत्यपि स्यात्, परदर्शनोपजीवनेन तथानिश्चये आगमोऽङ्गीकृतो भवेत् । ननु एवं धूमस्य किं रूपम् । आह **'एकप्रत्यवमर्श'** इति । धूमस्य हि धूमाभासतैव प्रत्यवमर्शदार्ढ्यमापन्ना रूपम्, न अग्न्यनन्तरता, नापि कण्ठाक्षिविकारपूर्वता । एवंहि सति वह्नेरपि किं रूपं, यदि इन्धनाद्यनन्तरता, धूमादिपूर्वभाविता चेति; अनेन क्रमेण अनवस्था अन्योन्याश्रयत्वं च । एवं कण्ठाक्षिविकारेऽपि धूमापेक्षया अन्योन्याश्रयत्वं, स्वकार्यापेक्षया च अविश्रान्तिरिति न कदाचित् धूमो दृष्टो भवेत् । ततश्च सर्वोऽन्धो बधिरश्च भवेत् भावतत्त्वादर्शनात् । नच यावत्यो व्यावृत्तय एकदा दृष्टाः, तावत्यः सर्वदा भवितुमर्हन्ति देशका-

लान्तरायोगप्रसङ्गादेकस्वलक्षणावशेषतापत्तेः । कतिपयव्यावृत्तियोजनं च परिभाषितं भावस्य रूपं स्यात्, कतिपयत्वे च अवधिर्द्दश्यः, परामर्श एव अवधिनियमहेतुरिति चेत्, तदिदमस्मदुक्तमेव आपतति धूमप्रत्यवमर्शनीयो धूम इति, नतु एतत्कार्यमेतत् कारणमिति । एतद्देश एतत्काल एतद्दृश्य इति हि यथा न भावांशप्रविष्टमेतदाभासान्तरत्वात्, तथा कार्यकारणभावोऽपि; केवलं नित्यताभासभेदव्यामिश्रणया स्वलक्षणोत्थापनं क्रियतां नाम, नतु तदकारणत्वे तदकार्यत्वे वा धूमाभासो न धूमाभासः । अत्र उदाहरणमाह **'यथा'** इति । लोकस्य हि प्रतिपत्तिः—अहो मणिमन्त्रादेः प्रभावो यदग्निरपि अयमविकलो न दहतीति । एवं यथा कार्ये न नियमो भावस्य, तथा कारणेऽपि,—इति दर्शयति **'शालूकं च'** इति उत्पलकन्दम् । शालूकपरामर्शानिवृत्तेश्च तज्जातीयमेव तत् । तत् कथमिति । कारणभेदात् कार्यभेद इतिनये बीजात् यत् कन्दं कन्दाच्च यत् कन्दं कदलीजन्म व्यवधिना उद्भिन्नमेव कन्दद्वयमिति, तत्कन्दद्वयोद्भवे कदल्यावपि भिद्येयाताम्, तद्भेदाच्च कदलीफलादीनामपि भेदः स्यात् । ततश्च यदुच्यते—अनन्तरं कारणं कार्यमनुमापयति तत्तुल्यरूपाणां तुल्यं यथा प्रबद्धयोः कदल्योः कन्दोद्भवः; यत्र तु साक्षात् हेतुभेदः, तत्र रूपभेदोऽपि यथा तयोरेव बीजकन्दोद्भवयोः—इति, तत् विघटितं स्यादाद्येन हेतुभेदेन सर्वत्रैव कार्ये साक्षाद्धेतुभेदस्य समानत्वात् । यथाच मरुदेशनिवासी गोमयमेव वह्नेः कारणत्वेन नियमयन् मूर्खः, तद्वत् धूमस्यापि अग्निं सोऽपि हि कल्पयेत्; यदि अगोमयोऽग्निः स्यात्, अयमपि स्यात्; नच अस्ति, तस्मादन्योऽपि अग्निर्गोमय एव भवति । अथ इन्धनमात्रमेव तेन कारणतया कल्प्यम्, धूमस्य

अपि अनन्तरं किञ्चित् वस्तुमात्रमिति को विशेषः । ननु तयोरपि कदल्योरस्तु भेदः । एतदपि अनुवदति दूषणाय **'तदस्तु'** इति । अस्मदापादितमङ्गीकृत्य अपि न फलसिद्धिरिति दर्शयति **'तथापि'** इति । **'असौ'** इति भेदः । तथाहि किमिदं रागादुदिताया वक्तुकामताया वचनम्, उत करुणात इति यथा सन्नपि कारणभेदात् कार्यभेदो दुर्ज्ञानः, तथा सर्वत्रेति सुविवेचितत्वोपायाभावादशक्यानुष्ठानोपदेशोऽयं यत्

'भवद्भिरेव शक्येत ज्ञातुं सोऽतिशयो यदि ।'

इति । किंच सामग्री सर्वत्र कारणम्, तस्यां च सहकारिवर्गोऽपि विचित्रो भवन् कार्यभेदं यदि विधत्ते, तत् फूत्कारात् पवनजवात् निघर्षाच्च उत्पद्यमाना अन्य एव ते वह्नयः इति किंकार्यस्य इदानीं धूमतेति न विद्मः । तस्मात् दुर्लभमनुमानमिति । धीवरस्पर्शो हि पापस्पर्शत्वात् पापाधायीति कारणात् कार्यानुमानमेतत् योग्यतानुमानं वा । तत्र च प्रतिबन्धकसम्भवात् नियतिविजृम्भादेर्न भवेदपि पातकहेतुतेति तत्र अनुमानमनादृत्य स्पर्शपरिहारे अङ्गतामागम एव आगच्छति स्वच्छप्रसिद्धिरूपः । तदाह **'तत्'** इति । **'प्रसंख्यानवतामेव'** इति सावधानानां विवेकिनां विडम्बनभीरूणां च । आगमो हि नाम अयं शब्दनसंक्रान्तिशरीरः । यथाह भगवाननन्तः

'परत्र स्वबोधसंक्रान्तये शब्देन उपदिश्यते ।'

इति । तत्र स्वबोधः प्रत्यक्षेण स्वसंवेदनात्मना, शब्दश्च श्रोत्रेन्द्रियाध्यक्षेण प्रमेय इति प्रत्यक्षस्य चेत् प्रामाण्यं प्रति दौर्बल्यं स्यात्, तदा आगमस्य अपि तदापतेदित्याशङ्कां शमयति **'प्रत्यक्षं च'** इति । एतत् सविशेषणं कर्तृ, सामान्यं तु अवस्थाप्यमानं कर्म । अत्र उदाहृणं **'यथा'** इति । **'प्रत्यक्षादेव'** इति प्रत्यक्षेण हि गृहाभासः प्राप्तिप्रेप्साविषयत्वेन निश्चित एव । ननु एवंनि-

अये कथं तद्विरुद्धः संशय इति कथमवादि **'संशयादपि'** इति । अत्र आह **'केवलम्'** इति आभासान्तरेऽप्रमाणाभिमते स संशय इति यावत् । **'गुड'** इति, नहि मधुरमात्रे कठिनमात्रे रक्तमात्रे वा गुडव्यवहारो मधुनि लोष्टे लाक्षायां च तद्भावादिति मिलिते एव रूपाद्याभासवर्गे तद्व्यवहारः । **'तत एव'** इति प्रत्यक्षात् । **'नास्ति'** इति अबाधितविमर्शेनहि प्रतिभासेन तदवस्थापितं साक्षात्, तत् कथमन्यथा भवेत् । ननु एवं रजतं स्यात् वा, न वेति, रजतमेव इदमिति, नतु रजतमिदमिति कथं सकृदेव रजततत्त्वग्राहिणा प्रत्यक्षेण अवधारिते रजते संशयनिश्चयविपर्ययविभागः; निश्चयरूपतयैव हि एकरसतया युक्तं भवितुम् । सत्यमेवं, रजताभासांशे संशयविपर्ययौ तु देशकालाभासान्तरमिश्रणपुरःसरो योऽर्थक्रियाभासस्तन्महिम्ना भवत इति त्रैधं न अनुपपन्नम् । तदाह **'सर्वत्र च'** इति । **'पूर्ववत्'** इति । यथा पूर्वमुक्तं

'सुखादिषु च सौख्यादिहेतुष्वपिच········ ।' (१।८।३)

इत्यत्र प्रकरणे ग्राह्यत्वबाह्यत्वाद्याभासान्तरसंभेदादिचिन्तनम्, तथा अत्रापि अनुसरणीयम् । यद्वा पूर्वमत्रैव विवृतिग्रन्थे यदुक्तमनन्तरमेव **'केवलं देशकालभेदापेक्षया'** इति, तदतिदिश्यते **'पूर्ववत्'** इति । ननु **'सामान्यमात्रे तावत् विमर्शोदयः'** इति उक्तम्, तत् किमनेन **'देशादिविशिष्टं पुनः स्वलक्षणम्'** इत्यादिना । आह **'निश्चिते च'** इति । यद्यपि प्रत्यक्षेण एकसामान्यविषय एव प्रामाण्यमासादितम्, तथापि मिश्रणाभासांशे प्रामाण्यमखण्डितमेवेति सामान्यं सर्वदेशकालगतं सिद्ध्यति, स्वलक्षणं तु असर्वदेशकालमिति विभागोऽयं सिद्धेः कृतः सर्वदेशकालगामित्वेऽपि । **'तथैव'** इति देशादि-

विशिष्टम् । '**पुनर्**' इति वाक्यद्वयेन । '**विषय**' इति '**सामान्यादौ**' इति च वैयधिकरण्येन । '**अनेकसामान्यमेलनेन**' इति '**तत एव सिध्यति**' इत्यन्तं यदुक्तम्, तदेव व्यवहारे स्वभावहेतुसमर्थनाय हेतुत्वेन उपजीवति '**अत एव**' इति । '**अत्र**' इति शिंशिपात्वे । '**तस्य**' इति वृक्षत्वस्य । '**सच**' इति यदेतत् नियतिमहिम्ना त्रैकाल्येऽपि शिंशिपात्वमन्तर्भावितवृक्षत्वम, एषोऽसौ तन्मात्रानुसम्बन्धः शिंशिपात्वमात्रसमाकृष्यत्वम् । यदाह

'तन्मात्रभावान्वयिनिःस्वभावो हेतुरात्मनि ।'

इति । '**स्यात्**' इति ननु संभाव्यमेतत् भिन्नत्वादनयोराभासयोः । ननु वृक्षत्वं समुज्झ्य भवन्ती शिंशिपा निःस्वभावा कथं भवेत् । अत्र आह '**अग्रे**' इति योगिनिर्माणतासूत्रे । '**तथा**' इति प्रत्यक्षागमवदिति यावत् । लोकसंव्यवहारे तु का पीडा (?) न्यायेन उपयुज्यते । तत एव परमेश्वरागमप्रसिद्धिमूलत्वेन देशदशापुरुषविशेषान्तरेऽपि या प्रसिद्धिरबाधिता नियतिस्वरूपानुवर्तिनी, तन्मूलानामेव अनुमानानां करणकर्त्रनुमानानामिव निर्विवादं प्रामाण्यम्; नतु स्वयंकल्पनोत्थापितानां सद्वितीयान्यतरत्वादीनाम् । आ जन्मनोऽनन्तपूर्वजन्मकोटिसहस्रावधेर्वा यत् व्यवहारपरिशीलनं, तद्बलेन वा; परकीयपरिपक्वप्रतिभोपजीवनेन अर्थक्रियालाभेन वा प्रतिभापरिपाके जाते प्रमाणस्य सार्वत्रिकवस्तुतथात्वनिश्चये व्यापारोऽखण्डितः । तदाह '**अभ्यासात्**' इति । '**अत एव**' इति । यतोऽभ्यासादेवं भवति, ततो यदुक्तं—पश्चात्संवादेन किं कृत्यमिति, तत् निरस्तं भवति अभ्यासांशे तस्य उपयोगादिति तात्पर्यम् । '**तदा**' इति साक्षात्कारसमये । एतस्मात् वस्तुसिद्धिर्जाता, स साक्षात्कारः स्वसमये

प्रमाणमिति यो निश्चयः,स तदा तद्वस्तुसिद्धिनिश्चयः । **'अन्यथा'** इति अनभ्यासेन अर्थक्रियारूपनिश्चयाभावे । तथाहि तदा संवादान्तरमपेक्षन्ते । **'संवादोऽपिच'** इति तस्य अर्थक्रियादेः । कार्यसहचारिप्रभृतेर्या प्राप्तिः, स संवादः इति सम्बन्धः । एतत् सर्वं बाह्यार्थसिद्धिसंमतमपि तद्दर्शने न कथञ्चिदुपपद्यते अभ्यासादेः संस्कारसारत्वात् तस्य च प्रमात्रेकतायामुपपत्तेरिति हि दर्शितं

'दृक्स्वाभासैव··············· ।' (१।३।२)

इत्याद्युद्देशेषु । तदस्मद्दर्शने तु उपपन्नमित्याशयेन पुनरिह वितत्य दर्शितं मन्तव्यम्, नियतिशक्तिस्तु महाभाससारतया तत्र प्रवेशनीयेति अधिकमियत् । **'तथाच'** इति यदेतदुक्तं प्रमेयं, तेन हेतुप्रकारेणेत्यर्थः । **'तावत्'** इति संव्यवहारे दृष्टविषय इति मन्यते । **'क इव'** इति एकप्रमातृरूपसङ्कुचितप्रकाशावेशिनीलाद्यवभासविमर्शनरूपात् प्रत्यक्षात् समस्ताविगीतविमर्शनरूपपरिच्छेदशून्यासङ्कुचितप्रकाशविश्रान्तभावतत्त्वावभासविमर्शनस्वभाव आगमो बलवानिति यावत् । एनमागममविगीतप्रसिद्धिलक्षणं विभजति **'तथाहि'** इति । वेदशैववैष्णवादीनां हि योऽर्थो विमृश्यमानः परस्परानुष्ठानेन प्रसिद्धः; सोऽनेनैव उक्तः, अनेनैव उत्पादितः, अमुष्मात् कालादारभ्यैव प्रवृत्त इति न अवच्छेदभागीति अनवच्छिन्नप्रकाशधर्मो विमर्शात्मा परमेश्वर एवेति अनादित्वमेव तत्र । कठादिभिर्भार्गवमतङ्गादिभिर्नारदप्रभृतिभिश्च प्रसिद्धानुष्ठानमनादि एव निबध्यते यतः शब्दनं समासव्यासोपकल्पितवाक्ययोजनाभिः । नच अस्या यत्नसाध्यं पारमेश्वरीत्वमिति दर्शयति **'सर्वैव** इति । **'उपपादितम्'** इति

'तत्र ज्ञानं स्वतः सिद्धम्··············· ।' (१।१।५)

इत्यादौ । '**उपपादयिष्यते**' इति

'इत्थं तथा घटपटाद्याभास.................. ।' (२।४।२१)

इत्यादिस्थानेषु । यदि सर्वा मानसी वाङ्मयी वा प्रवृत्तिः पारमेश्वरी, तर्हि मनोराज्यादावपि सा प्रवृत्तिः कथं विसंवादिनी । आह '**तस्यास्तु**' इति । बाह्यार्थपर्यन्तीभावेन सता असता च उपलक्षितो योऽस्याः प्रवृत्तेराद्याया ऐश्वर्याः सम्बन्धिनि पाशववाङ्मनसव्यापारे रूपवैलक्षण्यभेदः प्रातिस्विको विशेषः संभवन्नपि दुर्लक्ष इति प्रवृत्तिरुपपन्ना लोकस्य, प्रवृत्तौ च विसंवादोऽपि उपपन्नः पाशववाङ्मनसव्यापारभावापत्तौ, तत्र च बाह्यार्थपर्यन्तीभावाभावाभ्यां रूपवैलक्षण्ये तस्य दुर्लक्षत्वम्, ततश्च प्रवृत्तावपि विसंवादे '**परमेश्वरेच्छया**' इति हेतुत्वेन योज्यम् । '**निरुध्यमानापि**' इति निरोद्धुमिष्टा अपीत्यर्थः । '**निश्चलैव**' इति निरोधेच्छया चाल्यमाना अपि अविचला । '**प्रतिभासंज्ञा**' इति प्रतिभानलक्षणा इयं शब्दभावनाख्य आगम एवेति यावत् । '**भावितम्**' इति ।

'अत्थिविसंणत्थिविसंणत्थितिहु अणेस अले ।'

इत्याद्युपदेशविशेषैः शब्दनरूपैरोतप्रोतीकृतं व्याप्तमन्तःकरणं सङ्कल्पाभिमाननिश्चयवृत्तित्रयमयं यस्य, मन्त्रा अपिहि शुद्धसंविद्रूपपरमेश्वरसम्बन्धिपुराणतमसिद्धैकरूपविशिष्टविमर्शस्वभावा यस्यैव प्रमातुर्विमर्शमात्मना अभिव्याप्नुवन्ति; तस्यैव तथारूपतां बलादेव उल्लासयन्तस्तथाविधविशिष्टफलदाः । तत एव उक्तं

'सहाराधकचित्तेन...................।' (स्प०का० २७)

इति । ननु पशुप्रमातुर्योऽभिमानात्मा शब्दनविशेषः, सा कथं पारमेश्वरी वागित्याशङ्क्य परमेश्वररूपता सर्वत्रैव अनिरुद्धा, केवलं तदिच्छयैव तस्याः क्वापि अंशे विचित्रे प्रोन्मज्जननिमज्जने भवत

इति दर्शयति **'संसारिणो हि'** इति । **'तदानीम्'** इति परमेश्वरतापरिहारकाले लोष्टादिवदस्वातन्त्र्यात् । **'प्रमातृता'** इति प्राणादेः प्रमातृता कथ्यते व्यवह्रियते परम्, न तात्त्विकीति यावत् । पारमैश्वर्यस्य अशेषप्रकाशविमर्शमयस्य योगस्ततः । एतदुक्तं भवति—यथैव विश्वप्रकाशात्मा परमेश्वरः, तथा विश्वविमर्शात्मा । तत्र बाह्यत्वग्राह्यत्वार्थक्रियातत्सहकारिवर्गस्य यथा प्रकाशः, तथैव विमर्शः । तत ईश्वरेच्छयैव यो यत्र विमर्शांशे एकीकृतः समुज्झितुमिच्छुरपि न उज्झितुं शक्नोति, तत एव

'रुद्रांशो रुद्रभक्तस्तु·····················।'

इत्यादिना भावांशकप्राधान्यमागमेषु उपदर्शितम् । **'सा'** इति प्रतीतिस्तादृशी सार्वज्ञ्यं प्रत्येतव्ये वस्तुनि तथाभावनिश्चायकतेति यावत् । ननु ईश्वरेच्छयैव यत् यस्य निरूढं शब्दनं, स एव तस्य आगम इति क इदानीं प्रामाणिकानां प्रोत्कर्षः । आः के वराकाः प्रामाणिकाः । ईश्वर एवहि तथा भाति विमृशति विमर्शयति च । ननु एवं तूष्णीमवस्थीयताम्, किं शास्त्रप्रणयनोपदेशश्रवणानुष्ठानैः । सत्यमवस्थीयते यदि स तथा अवतिष्ठासीत परमेश्वरः । तत् सुधाकन्दरोद्वहनमपि ईश्वरेच्छैव । तथाच शिवदृष्टिः

'स एव शास्त्रकर्तृत्वे·······························।' (३।७५)

इत्यादि

'·······························यावत्तदनुष्ठानतत्परः ।'

इत्यपि । इयता मानसीं वृत्तिं विचार्य वाङ्मयीं विचारयति **'वागपि'** इति । **'तथाच'** इति यतः प्ररूढा सती प्रमाणम्, ततः परयूथ्येषु प्ररोहाभावलक्षणेन बाधनेन अविमर्शीकृता नैव प्रमाणम् । ननु निरूढत्वात् न प्रमाणम्, अपितु प्रमाणोपपन्न-

त्वात् । नैवमित्याह **'युक्त्यंशस्तु'** इति । न तावत् सर्वत्र न्यायो निर्वहति; यत्रापि निर्वहति, तत्रापि पूर्वोक्तदृष्ट्या कार्यादिरूपस्य दुर्ज्ञानत्वात् दुर्बलः; स्वगृहे बलवानपि वाद्यन्तरोत्थापितन्यायान्तरदृशि दुर्बलतरीभवति । तथापिच अद्यापि यावदासंसारं प्रवहतां तर्कषट्कतद्भेदसहस्रोत्थाप्यमानानां न्यायानां न पर्यवसानं किञ्चिदपि लभ्यते । यदाह

'यत्नेनानुमितोऽप्यर्थः·························।'(वा०प०१।३४)
इति

'सर्वः फलोचितानर्थानागमात् प्रतिपद्यते ।
विपरीतं च सर्वत्र शक्यते वक्तुमागमे ।' (वा०प०१।१४२)

इति च । **'परकीय'** इति क्रमयौगपद्ये क्रमकार्यकारित्वस्य व्यापके इति यदुच्यते, तत् किं वस्तु अपेक्ष्य; अथ संभाव्य, न तावत् विरुद्धे द्वे एकस्य व्यापके वस्तुनो भवितुमर्हतः, अन्यतरस्य अपि एवं कथं व्यापकत्वम् , क्रमश्च न असकृत् वा करणं, तच्च असंभाव्येव वस्तुत इति तदपेक्षया द्वितीयोऽपि राशिर्न कश्चिदिति तदतद्रूपपरिच्छेदव्यवच्छेदाभ्यां तृतीयराश्यभावनिश्चयो नास्ति,—इति गत्यन्तरक्षयोऽपि न कश्चित् । संभावना तु विकल्पमात्रं, न तया समुत्थापितो व्याप्यव्यापकभावो वस्तु आविशति,—इति क्षणिकोऽपि न तावत् क्रमेण करोति अननुवृत्तिधर्मकत्वात्, न अक्रमेण एकेन वपुषा कार्यकरणे तद्भेदायोगात्, अनेकेन अपि करणे यौगपद्यायोगात्, सहकारिसंपातात् तथा करणे तस्यैव व्यापकत्वं स्यात् न क्रमाक्रमयोरित्यादिको नैय्यायिकोक्तो दुर्बलीभवति न्यायः । एषा पिशाचोक्तिः, अन्योक्ता शक्यपरिहारेति सर्वथा तर्कोऽप्रतिष्ठ एव । तथैवहि परमेश्वरेण स सृष्टः । तत एव इह शक्तिसंवर्धनक्रमेण अन्तःसङ्कुचितविमर्श-

शक्तिसमाकर्षणेन तथैव भोगापवर्गोपयोगिना उपयुज्यमानः परमेश्वरेण सृष्टस्तर्कसंसारः काव्यसंसारवदपर एव । विचित्रा हि अमी संसाराः । अप्रतिष्ठितत्वेऽपितु तर्कस्य न अस्मद्दर्शनस्य खण्डना काचित् । आभासमानवस्तुवादे हि परमेश्वरेच्छया अयमाभासनियमः । सा च वैचित्र्येण आभासानुत्थापयन्ती तत्संयोजनवियोजनवैचित्र्येण च प्रमातॄन् विचित्रीकुर्वाणा अपर्यनुयोज्या,—इत्येतावदेव न्यायमवतिष्ठते । तदयमलब्धगाध एव तर्कः शोभते । अत्र तु स्वबुद्धिगर्वेण प्रतिष्ठां पश्यन् स्वगृहप्राङ्गणमध्यकल्पितनिःशेषभूगोलकमध्यध्रुवकस्थानवत् मूढो वा डिम्बविडम्बको वेति आस्ताम् । सर्वथा अनुमाने न आश्वसितव्यम्, अपितु आगम एव । स च यो यस्य हृदये निरूढिमुपगतः, स एव । ननु एवं यस्य न किञ्चित् निरूढं, तस्य किम् । ननु एवं यस्य चक्षुषी न स्तः, तस्य किम् । तत्कर्तव्यहानोपादानविरह इति चेत्, इहापि आगमविशेषसंपाद्यभोगापवर्गोपादाननरकपातादिपरिहारविरह एवेति । यदाह मीमांसकाग्रणीर्भट्टनायकः

> 'महान्ति पातकान्याहुर्यदाज्ञावशतः सुराः ।
> पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते ॥'

इति । अत्र त्रिधा विध्यनुवादयोगो व्याख्यातव्य इति । निरूढतया आगमो मानम् । तदाह **'प्रसिद्धं तु'** इति 'यत् यदा यथा यत्र' इत्यनेन क्रमेण सर्वागमानां प्रामाण्यम् । म्लेच्छाद्यागमो हि तावति प्रमाणं भवन्नपि अनार्यसंपर्कसंभाव्यमानम्लानिरागमाभासः । तथा श्रुत्युक्तेषु एव

> 'महाजं वा महोक्षं वा........................।'

इत्यादिकर्तव्येषु मध्यात् तदिच्छावशात् महोक्षप्रोक्षणेऽत्यन्त-

विरुद्धेऽपि चिरजीविनामृषिप्रायाणामेवं बुद्धिर्जायते अद्य एतत् युक्तमिति अद्य न विधीयते, नतु पूर्वमयुक्तकारिणो वयमिति। यत्र तु अन्यागमसंवलनया प्रमातुः पूर्वमेव अहमयुक्तकारी अभवमिति प्रत्ययो जायते, तत्र न आगमत्वमेव। तत्रापि भगवन्नियत्या पारमेश्वरागमे एवंविधबुद्ध्युत्पादे विलयव्यवहारोऽनन्तप्रत्यवायफलः, अन्यत्रतु तथात्वोदये पारमेश्वरागमसमाश्वासेऽनुग्रहव्यवहारोऽऽनन्ताभ्युदयलाभात्। तत्रापिच तदागमत्यागप्रत्यवायपरिहारो लिङ्गोद्धारादिदीक्षया परमेश्वरेणैव निरूपितः, नतु शैवागमाद्यसमाश्वस्तवैष्णवादौ तथा दर्शितमिति वस्तुतत्त्वानुसारिण आगमाः। पुरुषप्रज्ञास्तु स्वोत्थापितपक्षपातयुक्ताः स्वबलेन उत्कर्षापकर्षावुत्थापयन्त्यः संभाव्यमानबाधाः,—इति अलमतिजल्पितेन। ननु एवं यदि अनियतकर्तृकैव वाक् पारमेश्वरी, तर्हि सिद्धान्तश्रुत्यादेः प्रामाण्यं स्यात्

'अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात्।
नादरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम्॥'

इति

'अमूर्ताद्गगनाद्यद्वन्निर्घातो जायते महान्।
शान्तात्संविन्मयात् तद्वच्छब्दाख्यं शास्त्रम्····॥'

इत्यनेन क्रमेण अनादित्वात् परमेश्वरे प्रकाशविमर्शस्वभावे कालानुल्लासात्, बुद्धादिप्रणीतत्वात्तु न बौद्धागमादीनां भवेत्। अत्र समाधिः 'बौद्ध' इति। नहि बुद्धो नाम नियतः कश्चित्, अपितु भावनाबलप्रतिलब्धक्षणिकादिदृढविमर्शः। तस्य क्षणिकादिभावनोपदेशी गुरुः पूर्वबुद्धः, तस्यापि अन्यः,—इति क्रमेण अनियतवक्तृकत्वात् पारमेश्वरविमर्शमयतैव वस्तुतः। एवं चतुर्विंशतितत्त्वभावनाभावितः कपिलो मन्तव्यः। अत एव सर्वा-

गमा अनादय एव । तथाच पारमेश्वरेषु अपि शास्त्रेषु तद्वृत्तान्ताः श्रूयन्त एव

'बुद्धितत्त्वे स्थिता बौद्धा अव्यक्ते पाञ्चरात्रिकाः ।

इति

'यत्किञ्चिद्वाङ्मयं लोके बौद्धमार्हतवैदिकम् ।
वैमलं पाञ्चरात्रं च लाकुलं सांख्यमेव च ॥
तद्ग्राह्येन्न सन्देह..............................।'

इति

'इत्येवंवादिनां तेषां वादिनां तु शतत्रयम् ।
त्रिषष्ट्यभ्यधिकं च...................।' (स्व० १०।६८०)

इति

'एतत्पुरुषविज्ञानं कपिलाय महात्मने ।
मया प्रोक्तम्.......................॥'

इत्यादि च । तेन कण्ठोक्तिवत् सुगतोक्तिस्तत्र, नतु तत्कृतं प्रामाण्यम् । तत्कृतत्वमेवहि प्रसिद्धिमन्तरेण किंप्रमाणकमिति प्रसिद्धिरेव एका प्रमाणम् । परमेश्वरेच्छावशाच्च सुगतकपिलादयोऽपि तत्प्रसिद्ध्यनुप्रविष्टाः कृता अनुग्राह्यास्तानेव अन्यांश्च अनुग्रहीतुम् । **'लोकप्रसिद्धिः'** इति यो यत्र व्यवहारे व्यवहर्ता, स तत्र लोकः । **'देशे'** इति तत्तद्व्यवहारस्थाने । एतत् संवादयति **'कामम्'** इति । केनचिदागमनिश्चयेन यद्यपि निर्मितमन्यलोकाचारेण च विरुद्धं तथाविधमपि चरणं चेष्टितं यत्; तदपि प्रतिपद्यन्ते कामं बहवोऽपि एकवाक्यतया अङ्गीकुर्वन्ति, नतु तत्र एषां विचिकित्सा भवतीत्यर्थः । **'तत्र हि'** इति तथाविधविरुद्धव्यवहारनिमित्तभूता वागित्यर्थः । यदि पारमेश्वरी वाक् प्रमाणं, तदा वेदः कथम् । आह **'ईश्वराज्ञा हि'** इति आ समन्ताद्-

प्रतिहतम्, आ च फलसिद्धेर्व्याप्रियमाणम्, आविनयं हृदयं व्यश्नुवानं विमर्शरूपमाज्ञा

'नुमस्त्वामृग्यजुःसाम्नां शुक्रतः परतः परम्।

यस्य वेदात्मिकाज्ञेयमहो गम्भीरसुन्दरी ॥' (स्त०चि० ६९)

इति, यस्येति ऋगादीनां शुक्रं सारं वीर्यं वाक्त्रयं पूर्वं व्याख्यातमिच्छादिशक्तित्रयमयं, ततो यत्परं परशक्त्यात्मकमानन्दधाम; ततः परं समस्तशक्तिप्रतिष्ठारूपपरमशक्तिविश्रान्तिधाम; तत् नुमः। अहो इति गाम्भीर्यस्य सौन्दर्यस्य च अतिशयं द्योतयन्नध्यात्माधिभूताधिदेवादिविषयार्थसहस्रगर्भत्वमाचक्षाणः सर्वागमाविसंवादितां वेदागमस्य आह। यथोक्तं

'...............सर्वज्ञानमयो हि सः।'

इति। '**उभयी**' इति निबद्धा, अनिबद्धा च। विपर्ययो विरुद्धा प्रसिद्धिः प्रामाण्यलक्षणमश्नुते इति संभाव्यते इति सम्बन्धः। तथाच

'......शुक्रात्प्रभृति मद्यस्यापेयता द्विजैः।'

इत्यादि श्रूयते इति सापि प्रसिद्धिरेव। सापिच अनादिः। अनादिकालभाविन्यो हि सर्वाः प्रसिद्धयः। तत्र तु काचित् कदाचिदुन्मज्जति, काचित् निमज्जति,—इति उन्मज्जननिमज्जने एव उदाहरणेन स्पष्टयति '**तथाच**' इति। '**तदुपचारवस्तु**' इति नामाक्षराणि श्रोत्रमनोगोचरीकार्याणि अपि लिपौ यतः उपचर्यन्ते चिरतरबहुजन्माभ्यस्तव्यवहारपरिचयदृढनिरूढेन परमेश्वराज्ञानुवर्तितया श्रीमत्सर्ववीरभर्गशिखाद्यनुगतया तथैव सत्येन सामानाधिकरण्येन दृढविमर्शवशात् व्यवह्रियन्ते। दृढस्य च विमर्शस्य सत्यत्वम्। ततस्तेषु आप्यायकसन्तापकादिरूपवरप्रमुखवर्णोपचरितरूपलिप्यक्षरयुक्त्यैववा आप्यायकसन्तापकादि-

रूपक्षीरावसेकखदिराङ्गारतापनादियुक्त्या वा आप्यायनादिकर्म-प्रैषाद्यभिधायिवर्णोपचरितरेखायोगेन वा आप्यायितेषु अथवा सन्तापितेषु तल्लिप्यक्षरतादात्म्यविमृष्टवर्णरूपप्रत्यवमर्शाभेदप्राप्त-प्रकाशस्वभावोऽसौ पुरुष आप्यायितः, सन्तापितो वा भवतीति। तत्र ईश्वरेच्छया स भावो यथैव प्रकाशे प्रतिबिम्बात्मना सृष्टो विशिष्टरूपादिप्रकाशमयः, तथा विशिष्टरूपोपरागविचित्र-विमर्शविशेषमय इति कथमेवंप्रायाणामर्थासंस्पर्शित्वं शब्दानाम्। तदेव द्रढयितुं निदर्शनान्तरमाह **'तन्नामनक्षत्रे च'** इति। षड्क्षोपतापादिविचारे जन्मनक्षत्रादपि मुख्यनामाक्षरद्वारायातं नक्षत्रमवकहडादिषु चक्रेषु स्वरोदये मुख्यतया गण्यते। तच्च अतीवसंवादि दृष्टम्। एवं शास्त्रदिशा कार्यकारित्वेन तस्य शब्दस्य तदर्थात्मकत्वं प्रदर्श्य लोकप्रतिभामुखेन अपि आह **'तथा'** इति। पशोर्मातापितृप्रायस्य यद्यपि इच्छा तत्र व्यापृता, तथापि ईश्वरेच्छैव अत्र मुख्यत्वेन विजृम्भते वास्तवतात्पर्यात्। उदाहरणस्फुटीकृतमागमलक्षणं सर्वत्र संचारयति **'एवम्'** इति। **'अत्र'** इति व्यवहारे। **'तेन'** इति ईश्वरेण। **'अन्यथा'** इति तदध्यासं विना। एतच्च

'घटोऽयमित्यध्यवसा··················।' (१।५।२०)

इति सूत्रे विवेचितम्। **'निबद्धः'** इति विशिष्टवाक्यरचनाभिः, अनिबद्धस्तु यत्र तथा नास्ति। महाजनो यत्र कर्तव्ये यः प्रसिद्धिं यातो वर्गः, स एव मन्तव्यः—यथा वेदानुष्ठाने च्छा-न्दसः, वैष्णवानुष्ठाने भागवताख्यः। यथाह वराहमिहिरः

'विष्णोर्भागवता मघाश्च सवितुः शम्भोः सभस्मद्विजा
मातॄणामथ मातृमण्डलविदो विप्रास्त्वथ ब्रह्मणः।
शाक्याः सत्त्वहिताय बुद्धवपुषो नग्नास्तथैवार्हतो
यैर्यो देव उपास्यते स्वविधिना तैस्तस्य कार्या क्रिया॥'

इति । ते ते हि तत्तद्विमर्शतादात्म्यप्रतिपत्तिसंवेदनास्तत्तत्फलमय-त्वत उल्लासयितुं समर्थाः । कश्चित् पुनरागमो महेशताविभाग-लक्षणपरमनिर्वाणफलो भवन्ननन्तसामान्यनिकुरुम्बस्वीकारिघटा-भासवदनन्ताभासस्वीकारेण वर्तमानोऽधरशासनाभिहितभोगा-पवर्गसमर्थोऽपि भवति, नतु अधर ऊर्ध्वफलदानसमर्थः । तत उच्यते

'शैववैष्णवबौद्धार्हदागमार्थव्यवस्थिताः ।
उत्तरोत्तरसामर्थ्याः पूर्वपूर्वविघातिनः ॥
तस्माच्छैवागमे तिष्ठन्नन्यानुग्रहणेच्छया ।
वैष्णवाद्यागमज्ञेभ्यस्तत्तदागमयेन्मतम् ॥
नतु वैष्णवदीक्षादिसंस्कृतस्य कदाचन ।
शैवागमेऽधिकारोऽस्ति विना तद्दीक्षया पुनः ॥'

इति । '**तेन यथा**' इति प्रसिद्धिरूपेण वादेन । '**तेन**' इति प्रतिपन्ना । '**तत्र**' इति देशे । '**तदा**' इति काले । एवकारेण शास्त्रान्तरलोकाचारविरोधेऽपि न विचिकित्सितव्यमित्याह '**वि-गाने**' इति तद्विरुद्धविमर्शोदये । '**अनिबद्धापि**' इति महा-जनानुष्ठानशेषतयैव स्थिता । ननु अदृष्टविषये प्रसिद्ध्या पर्यन्त-फलोदयया भवितव्यम्, नतु असावर्थसंस्पर्शिनीति कुतः प्रामा-णादवसेयमित्याशङ्क्य आह '**निर्विचिकित्सा**' इति । यथाहि वृक्षत्वं शाखादिमत्त्वरूपं प्रत्यक्षेणैव सकृदुद्गतेन मध्ये बाधकवै-धुर्यमनासादयता त्रैकाल्ये त्रैलोक्ये च निश्चितम् । एवं निर्विचि-कित्सप्रसिद्धेर्बाह्यार्थपर्यन्तत्वं नामनक्षत्रादौ विषभूतग्रहादौ चेति प्रत्यक्षेणैव प्रामाण्यनिश्चयः । ननु मध्ये बाधकं न उदेष्यतीति कथम् । अत्रापि आह '**अदृष्टविषय एव**' इति । '**दीक्षातो मोक्षः**' इति

न्तात् निवर्तयितुं न केनचित्प्रकारेण अन्यो भवति शक्तः। यतो-ऽसावुपदेश्यस्तत्र आप्तसम्बन्धिनि ज्ञाने प्रत्यक्षपक्षाश्रयेण स्थितः। यदाप्तेन उक्तं—मया साक्षादेतत् ज्ञातमिति, तत्र असावुप-देश्योऽभिमन्यते—मयैव एतत् साक्षात्कृतमिति। नच बालोऽपि साक्षात्कृतात् युक्तिशतैरपि शक्यनिवर्तनः। यथाहुः परेऽपि

'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः॥' (प्र०वा०१।२२३)

इति। बुद्धिपक्षपातेन हि दृढतमतया अनुन्मूलनीयविमर्शत्वमेव प्रामाण्यस्य निबन्धनं व्यापकमिति तत्सद्भावो यत्र यत्र, तत्र तत्र प्रामाण्यमेव। तत एव **'क्रियासम्बन्धादिधियः सत्याः'** इति आवेदितं प्राक् (२।२।१)। आगमः प्रमाणमबाधितविमर्श-तयेति स्वभावः। ननु आप्तत्वमस्य कथं निश्चितमिति चेत्, आह **'चेष्टाविशेषैः'** इति। तत्रापिहि कार्यस्य सुविवेचना किं न सह्यते। **'प्रतिचरणम्'** इति शास्त्राप्तवादः। तथाहि पाणि-निवररुचिप्रभृतेर्व्याकरणे आप्तता प्रसिद्धा, न अक्षपादादेः। पुरुषाप्तवादेन तु लोकाप्तवादपरिग्रहः। तदाह **'चरणाप्तवादः'** इति। अयं च आप्तवादः पूर्वोक्तमागमभेदं यथायोगं व्याख्या-नादिद्वारेण अनुगृह्णाति। तत एव सर्व आगम आप्तो-पदेशशब्देन भगवत्पतञ्जलिप्रभृतिभिः संगृहीतः। आगमस्य स्वरूपमभिधाय प्रत्यक्षस्य आगमस्य च अनुमानात् बलवत्त्वं यत् प्रदर्शितम्, तदेव संवादयितुमुपसंहरति **'तदेवम्'** इति। **'सर्वमेव'** इति भ्रान्तावपि स्वसंवेदनस्य प्रामाण्यानपायात्। **'उक्तक्रमेण'** इति अभ्यासादिना। **'आर्षम्'** इति प्रतिभा-रूपवेदादिप्रसिद्धिरूपसदोदितलोकप्रसिद्ध्यात्मकमृषिणा सम्यक् द्रष्टृभिमतेन आप्तेन उत्थापितमनुमानस्य बाधकमेव। प्रत्यक्षा-

गमयोर्हि यत् प्रकाश्यं च विमृश्यं च, तत् यथाक्रमं प्रकाश-विमर्शमुखेन अन्यापेक्षाशून्यम् । प्रत्यक्षे हि प्रकाशद्वारेण विमर्शोऽन्यत्रतु विपर्ययः । अनुमाने तु नान्तरीयकवस्त्वन्तरप्रकाश-विमर्शापेक्षानुमेये प्रकाशविमर्शयोग इति सापेक्षत्वात् दूरा इयं प्रमितिः प्रमेयात् । तत्रापिच नान्तरीयकताज्ञानं दुर्लभमिति उक्तम् । नच वाच्यमागमेऽपि शब्दविमर्शनपूर्वकमर्थविमर्शनमिति तत्रापि सापेक्षतादि भवेदिति । नहि शब्दविमर्शनादपरमर्थ-विमर्शनं किंचित् शब्दस्य स्वपरविमर्शात्मकत्वात्

'घटोऽयम्..........................।' (१।५।२०)

इत्यत्र उपपादितात् । ननु न सर्वैरागमस्य प्रामाण्यमभ्युपेतं, तत् कथमस्य विमतिपदपतितस्य अनपेक्षत्वं भवता उक्तम् । अभ्युपेतमेवेत्याह **'प्रसिद्धिः'** इति । ननु लक्षणेन ज्ञायिष्यते छागादिशब्दार्थः, किमत्र प्रसिद्ध्या । अत्रापि आह **'चतुष्पात्त्व'** इति । **'सोऽपि'** इति लक्षणान्तर्गतः । ननु इतिहासपुराणादिव्यवहारात् ज्ञास्यते इति चेत्, तत्रापि प्रसिद्धिशरणत्वं न विघटते इत्याह **'पुरापिच'** इति । तथाच आह **'लोके येष्वर्थेषु'** इति । **'प्रागपि'** इति प्रथमसूत्र एव । न केवलं दृष्टानुमितार्थ एव आप्तः, यावदाप्तान्तरोपजीव्यपि,—इत्याह **'उपदेश'** इति । आगमेषु हि गुरव आप्ताः पठ्यन्ते 'एवं वै तत् ।' ननु शास्त्रितेऽर्थे ये स्वयमशास्त्रज्ञाः, परम्परया च तदर्थवेदिनः; तेषां तत्र प्रामाण्यं भवति वा न वा भवतीत्याह **'उपदेशपारम्पर्येपि'** इति । आगमग्रन्थाववबोधेन विनापि उपदेशपरम्परायां केवलायामपि आप्तागमस्यैव तत्र प्रसङ्गादाप्तागमता प्रसज्यते प्रसिद्धिरूपता च पर्यवस्यति, येन आप्ततया मध्यवर्तिन्या मौलिक्या च पारमेश्वरानादिप्रसिद्धिरूपतया तादृशा अपि

गुरवोऽन्यस्य उपदेष्टारो भवन्ति । यत एवं समस्तेषु आगमग्रन्थेषु पठ्यते

'मुखान्मुखागतं ज्ञानं कर्णात्कर्णमुपागतम् ।'

इत्यादि । समस्तागमग्रन्थपाठादितिपाठे नत्वमन्ये पठन्ति व्याचक्षते च—नहि समस्तमागमग्रन्थं केचित्पठन्ति, अपितु गुरुपरम्परयैव उपदेशेन व्यवहरन्ति,—इति; यदिवा यद्यपि केचित्पठन्ति, तथापि न समस्ताः पठन्ति, तेऽपि च गुरवो भवन्ति; यदिवा इत्थमवतारणा—आगमरूपता काचित् स्वमात्रोपकारिणी या समव्यादित्रयस्य, तत्र उपदेशपारम्पर्यमेव केवलम्; या तु स्वपरोपकारिणी गुरुत्वे सति, सा समस्तस्य आगमग्रन्थस्य अर्थावबोधे यः पाठः, तत एव; अन्यथा पुनराप्तागमत्वं तत्र न प्रसज्यते, नापि प्रसिद्धिः पर्यवस्यति । तत एव तत्र तत्र आगमे उच्यते

'चतुष्पात्संहिताभिज्ञं गुरुत्वे योजयेत्पुनः ।'

इति,

'सर्वलक्षणहीनोऽपि ज्ञानवान् गुरुरिष्यते ।'

इति,

'यतश्च मोक्षदः प्रोक्तः स्वभ्यस्तज्ञानवान् गुरुः ।'

इति । एवमेतत् लोकप्रसिद्धसमस्तव्यवहारोपयुक्तैकदेशगुरुताभिप्रायेण पूर्वं व्याख्यातम्, अन्यत्तु प्रक्रियाक्रमायातशास्त्रोक्तसमस्तगुरुताभिप्रायेणेति उभयथा अपि इदमस्मद्गुरुभिर्निरूपितम् । मध्यगत आप्तः, प्रसिद्धिश्च मूलत इति प्रधानम् । यतः समस्तेषु आगमग्रन्थेषु गुरवः पठ्यन्ते

'एवं परम्पराख्यातमिदम्..................।'

इति,

'मयाप्येतत्पुरा प्राप्तमघोरात्...............।'

इत्यादिचेति । एतत्प्रमाणं यदुक्तं, तत्किं नित्यमुत अन्यथेति विवेचयति **'तच्च'** इति यत् प्रमाणत्वेन उक्तम् ।

'केवलं भिन्नसंवेद्य........................।' (१।५।२१)

इत्यत्र च इदं पूर्वमुक्तम् । **'प्रत्यक्षस्यैवच'** इति आभासांशः प्रमाणं, विमर्शांशः फलमिति । ननु अनुमाने एतदस्तु ज्ञानात्मके, आगमस्तु शब्दरूपत्वात् जडः; तत्र कथमियं व्यवस्था,—इत्याशङ्क्य अस्मन्नये तस्य अपि अजाड्यमिति उपपादयति **'आगमोऽपि'** इति । ननु अस्तु एवं प्रसिद्धिरूपे निबद्धानिबद्धे, आप्तोपदेशे तु आप्तसम्बन्धि यत् शब्दनात्मकं ज्ञानं, तत् कथं परस्य संवेदनरूपं प्रमाणं स्यात्; प्रतिपत्तरि तु तदुदीरितशब्दद्वारेण यदुत्पन्नं, तस्य प्रतिपत्त्रेकविश्रान्तस्य आप्तात् भिन्नस्य कथमाप्तसम्बन्धिता भवेत् । उभयथा अपि न दोष इति दर्शयति **'आप्तस्यापि'** इति । च उक्ताशङ्काद्योतकः **'गुणप्रधानतास्तु च'** इत्युक्तः । **'अत एव'** इति यतस्तदानीं तयोरभेदापत्तिस्ततो हेतोः । प्रतिपादयितरि हि असौ सक्रमः शब्दोऽक्रमविमर्शात्मकप्रतीतिमूल इति तथैव प्रतिपाद्ये संक्रामन् प्रतीतिपर्यवसायी ततोऽनन्यत्वात् तस्य । **'उपयोगः'** इति आगमत्वेनेति शेषः । श्रोत्रज्ञानगम्यत्वे हि असौ रूपादिवत् विषयमात्रं, न प्रमाणरूपः । ननु वाचकः सन्नागमः, सच पूर्वं वक्तरि, ततः श्रोतरीति भिन्नकालयोः कथं तादात्म्यम् । नैवमित्याह **'प्रमातृता'** इति । अन्तःसंवेदनभूमौ वाचकत्वं, साच कालास्पृष्टा; देहाद्युपचारात्तु कालभेदव्यवहार इति सर्वमनवद्यम् । तदियता नित्यं संवेदनरूपं यत् भगवति, तत् न प्रमाणमिति उपपादितम् , नहि भगवति विद्यातत्त्वान्तं प्रमेयस्य पृथक् प्रकाशः कश्चिदहमित्येवविश्रान्तेः ।

सर्वज्ञानामपि कालस्पर्शे तत्प्रमातृतासङ्कोचादशेषप्रमेयनिष्ठमपि ज्ञानं कालस्पृष्टमेव, यदि परं नित्यप्रवृत्तवर्तमानतोद्रेकेणैव तेषां ज्ञानं व्यवह्रियते, तदा सर्वं विदन्तीति ॥ २ ॥

ननु

'एकाभिधानविषये मितिः··········।' ( २।३।२ )

इति उक्तं, तत्र स्वलक्षणं चेत् तथा, तर्हि प्रत्याभासं प्रमाणमिति कथं युज्येत; आभासमिश्रीकारे हि स्वलक्षणमितिशङ्काशान्त्यै सूत्रं

**यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।**
**आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधिते ॥ ३ ॥**

घट इति आपाते यद्यपि एक एव अर्थ इति लोकस्य अभ्यासादविवेकितया प्रसिद्धिस्तथापि असौ विवेकेन पृथग्निर्भज्यमानतां न न सहते । विवेकश्च त्रिधा—स्वातन्त्र्येण, अर्थित्वानुसारेण, पूर्वप्रसिद्ध्युपजीवनेन वेति । तर्हि एकत्वमर्थस्य कथम् । आह आभासानां पृथग्भासमानानां प्रकाशप्रमाणभूतो विमर्शः कदाचित् प्रत्याभासं विश्रान्तो यत्र सामान्यव्यवहारः, जातुचित् गुणप्रधानतया अत्रेदमित्थमितिव्यामिश्रणाप्राणोऽनुसन्धाननामा । तत्र अन्त्येन साधिते एकस्मिन्नपि स्वलक्षणात्मनि अर्थे रुचिं स्वातन्त्र्यं वा, अर्थक्रियार्थित्वं वा, वृद्धव्यवहारं वा अनतिक्रम्य आभासा भिद्यन्ते इति सूत्रार्थः । वृत्तावेवेन अप्यर्थ एव आख्यात एकत्वं तत्र न न युक्तमित्याचक्षाणेन । अत एव अवतारणिकायामविचारितत्वमेकनियमं प्रति निमित्तं मन्तव्यम् । 'अग्रे' इति

'पृथग्दीपप्रकाशानाम्············।' ( २।३।७ )

इत्यत्र यस्मादेवं वक्ष्यते, तस्मात् कथं तत् स्वलक्षणं सन्निवेशबुद्धिमात्रविषयः, कथंच तत् मृन्मयतामात्ररूपम् । नहि आभासान्तरगम्यमाभासान्तरगम्येन एकरूपं भवितुमर्हति घटस्य अपि

पटेन एकताप्रसङ्गादिति यो दोषः शङ्क्यते, स न। अत्र हेतुः **'पूर्वेतर'** इति

'तात्कालिकाक्ष················।' (१।८।१)

इत्यत्र प्रकरणे तावदाभासवैचित्र्यमुपपादितम् 'तत्संयोजनवियोजनस्वातन्त्र्यं भगवतः' इति। **'येन'** इति येन विमर्शसामर्थ्येन सा एवंभूता भवति पृथ्वादिता या सन्निवेशमात्रे मृण्मयत्वराजतत्वाद्यनपेक्षिणि व्यवहृता। कीदृशी भवति। आह अन्यैराभासैर्मृण्मयो लोहित उन्नत इत्यादिभिर्विशिष्टैरेकरूपे विशेष्यरूपत्वादेव केवलं सन्निवेशसामान्याभासात् विलक्षणाभासेऽपि भवन्ती पूर्वप्रतिपन्नात् सामान्यात् सन्निवेशमात्राकारात् रूपादभिन्ना। एवं मृण्मयता। एतदन्यत्र अतिदिशति **'एवम्'** इति महत्त्वादि। यदेकैकमनामिश्रमनेकं बहुसंख्याकं सामान्यं, तद्विषयत्वेन ये निश्चिताः परामर्शास्ते पुनरेकस्मिन् स्वलक्षणे प्रवर्तमानास्तं सामान्यात्मानं विशेषीभूतमपि पूर्वं सामान्यप्रतिपत्तिव्यवहारकाले प्रतिपन्नेन विविक्तेन अनामिश्रेण बहुसंख्याकेन तदेकपरामर्शविषयेण सामान्येन एकतां नयन्ति। **'तदेवच'** इति एकत्वापादनम्। इयता **'एकस्मिन्'** इत्यादौ सूत्रांशे **'वस्तुनि'** इत्यन्ता वृत्तिर्व्याख्याता। शेषसूत्रांशवृत्तिं व्याचष्टे **'पुनर्'** इति। हिशब्देन अस्य अर्थस्य पूर्वसूत्रार्थे 'प्रत्याभासं प्रमाणव्यापारः' इत्यस्मिन् हेतुत्वमाह। स्वेच्छा बहिष्करणे व्याप्रियते, अन्तःकरणे वेति दर्शयति **'भागशः'** इति **'प्रयत्न'** इति च। **'अथ'** इति यदिवेति यावत्। सन्निवेशोऽपि स्वेच्छातो वैचित्र्यान्तरं दर्शयति **'चित्र'** इति। पृथुबुध्नादितावैचित्र्यं सन्निवेशतामात्रं वा तत्सामान्यं भाति। अत्र दृष्टान्तमाह **'तथाहि'** इति भित्तिरिव स्वलक्षणं रेखाविभाग इव सामान्यविभागः। एवं यथारुचि भव-

त्येकत्रापि भिन्न आभास इत्यत्र अर्थे भित्तिचित्ररेखादृष्टान्तेन स्फुटीकृते '**यथार्थित्वम्**' इति विभजति '**अरूपमात्रतया**' इति एतदीयावयवविभागानादरेणेति यावत् । '**यथाव्युत्पत्ति**' इति व्याचष्टे '**अविशेषेणैव**' इति । इदमपि शाखादिमत् स्वलक्षणमिदमपि, तत एव शाखादिमन्त एते अर्था इति प्रतिपत्तिः । तत्रापि वृद्धव्यवहारनैपुणेन विभागोल्लासः—धवोऽयं, खदिरोऽयं, कदरोऽयमिति स्फुटीकरणार्थं रुच्यर्थिताव्युत्पत्तय उदाहरणभेदेन निदर्शिताः । एकत्रापितु घटस्वलक्षणे त्रयमपि शक्ययोजनमेव ॥३॥

**दीर्घवृत्तोर्ध्वपुरुषधूमचान्दनतादिभिः ।**
**यथाभासा विभिद्यन्ते देशकालाविभेदिनः ॥ ४ ॥**
**तथैव सद्घटद्रव्यकाञ्चनोज्ज्वलतादयः ।**
**आभासभेदा भिन्नार्थकारिणस्ते पदं ध्वनेः ॥ ५ ॥**

प्रसिद्धेन जडाजडगतेन रुच्याद्युत्थापितेन भेदेन सामान्याभासात्मना प्रथमश्लोकोक्तेन अप्रसिद्धमाभासभेदं घटगतं श्लोकान्तरेण स्फुटीकरोतीति सूत्रद्वयस्य तात्पर्यम् । वृत्तिकारो द्वयं द्वयं भिन्नविषयं व्याचक्षाणो जडरूपं दृष्टान्तद्वयमजडरूपमेकं व्याचष्टे । घट एवहि ऊर्ध्वावयवेषु एव अवहितनेत्रस्य दीर्घः प्रतिभासते । तदाह '**भागान्तर**' इति भागान्तराणां यो देशस्तान्येववा देशस्तत्परिहारेण तत्र चक्षुषोर्मनसश्च प्रणिधानेन । '**त्र्यश्र**' इति द्विगुर्मत्वर्थीयाजन्तः । '**यथारुचि**' इति पूर्वसूत्रोक्तमुदाहृतं (दन्तोदाहरणं कृतं) '**दीर्घवृत्त**' इतीयता । यथार्थित्वमपि उदाहरति '**ऊर्ध्वपुरुष**' इति, व्युत्पत्तौ तु उदाहरणं '**धूमचान्दनता**' इति । तत्र च न वृत्तौ निदर्शनान्तरं दर्शितमित्याह '**व्युत्पत्तौ**' इति । न केवलमत्र उदाहरणं, यावदुदाहरणेऽपि प्रसिद्धं निदर्शनान्तरमुक्तमिति अपिशब्दः । ननु

प्रत्यक्षज्ञानमत्र विचार्यते, तत् किं निदर्शने संभवति,—इत्याशङ्क्य संभवत्येवेति भर्तृहरिवचनेन दर्शयति

'परेषामसमाख्येयमभ्यासादेव जायते ।

मणिरूप्यादिषु..............................॥' (वा०प० १।३५)

इति । अनेन आप्तोक्तत्वमानुमानिकत्वं च नेति दर्शयता आभ्यासिकप्रत्यक्षत्वमुक्तम्, तत एव व्युत्पत्तावेतदिति स्फुटं निदर्शितम्। **'अत्र च'** इति उदाहरणत्रयेऽपि । **'ननु स्वलक्षणान्तरत्वम्'** इत्यत्र हेतुः **'देश'** इत्यादिः । **'न स्पृशति'** इति व्याचष्टे **'अत्र'** इति । **'एकस्वलक्षणत्वम्'** इति दीर्घवृत्तादिद्वयपरामर्शावस्था । सधूमत्वं जातिः, चान्दनत्वमिति व्यक्तिः । **'एकत्वम्'** इति एकस्वलक्षणता । एवं दृष्टान्तश्लोकं व्याख्याय दार्ष्टान्तिकं वाक्यं व्याचष्टे **'एवम्'** इति । दार्ष्टान्तिकतां समर्थयते **'अनुपलक्ष्य'** इति उपलक्षयितुमशक्यः, तत एव अप्रसिद्ध आभासानां भेदो यत्र स्वलक्षणे, तत्र धर्मभेदेषु आभासभेदेषु अवभासवदस्य प्रकाशनभेदस्य संभवो दृष्टान्तानुसारेण अनुसरणीयः । कथम् । आह **'अवधित्सादि'** इति रुच्यादिभेदत्रयाश्रयेणेत्यर्थः । एवमिह घट एव ऊर्ध्वतादीर्घताद्यवभासेन प्रसिद्धभेदेन दृष्टान्त उक्तः, अप्रसिद्धभेदेन तु सत्त्वघटत्वादिना दार्ष्टान्तिकः । ननु न अत्र आभासस्य वैलक्षण्यं, शब्दः केवलमन्यः सन्निति । एतत् न सहते **'नहि'** इति । एवंहि पर्यायमात्रतैव भवेत्—सन् घट इति, नच एवमित्याशयः । ननु सन्नित्याभासेन घटेऽपि विश्रान्तेन यतः पटशकटादिकमाभासान्तरमाक्षिप्यते, ततो घटाभासात् भिद्यते; ननु सदाभासो नाम कश्चिदन्य इत्येतदपि निषेधयति **'नापि'** इति । **'तदेवहि'** इति यत् त्वयैव उपगतम् । अस्मदुक्तदृशि तु एतत् युज्यते इत्याह **'यदाहि'** इति यत्र

अभ्युपगमावसरे । **'तेषाम्'** इति पटाद्याभासानां मध्ये घटादेः कस्यचिदेकतमस्य अनियतस्य अर्थस्य सन्नित्यस्यां धियि अवभासः संभाव्यते यतः सत्स्वलक्षणेन साध्या सा अर्थक्रिया प्रस्तुता, नतु पटेनवा घटेनवा। तत् यथा द्वयोः पणपूर्वके विवादे गृहेऽत्र न किञ्चिदस्ति किञ्चिदस्तीतिवचनात् संभाव्या अत्र अर्थक्रियेति दर्शयति **'सत्ता'** इति सदित्याभासस्य देशाद्यवच्छेदेन विशेषीभूतस्य तदभावेन वा सामान्यरूपस्य परस्परं विलक्षणा अन्यतश्च पटाद्याभासादस्त्येवेति शेषः । ननु सदित्याभासान्तर्वर्ती सत्परामर्शः, स कथमर्थक्रियेति उक्तः । अर्थक्रिया हि कार्यं, नतु स्वभावः । अत्र आह **'परामर्श'** इत्यादि । हृद्भङ्गपरिहारनिमित्तभूता या धृतिश्चित्तस्य, सा अपि अर्थक्रिया । सदाभासस्य पौनरुक्त्यं शङ्क्यमानं वृत्तौ प्रतिहन्ति **'महासामान्यम्'** इति । एकपदप्रयोगे हि सामान्यविशेषता अपि गम्यते । ननु च वृत्तौ वक्ष्यमाणेषु घटकाञ्चनाद्याभासेषु अन्यात्मतापरिहारो वक्ष्यते—तत्रैव घटे घट इत्याभासो यः पटादिषु नास्ति, काञ्चन इत्याभासो यो मृण्मयादिषु नास्तीति, तद्वत् सत्ताभासोऽपि कस्मात् न उक्तः । अत्र उच्यते **'बहिष्करण'** इति । सदित्यवभासो हि घटाद्याभासेभ्यो निकृष्टः केवलं

'..........................मनोऽनुव्यवसायि सत् ।' (२।२।३)

इत्युक्तनीत्या अन्तःकरणेन आभास्यते, नतु बहिष्करणेन शुद्धोऽसावासादयितुं शक्य इति तेषां सद्व्यतिरिक्तानामन्येषामभावाभासानां परिहारो न उक्तो वृत्तौ । **'सन्नित्याभासो यो घटादिविविक्तेषु अभावेषु नास्ति'** इतिनैव उक्तो वृत्ताविति यावत् । **'तत्'** इति पटादिप्रतियोगित्वं वृत्तावुक्तम् । **'सामान्यशब्दः'** इति वृत्तिगतः । **'तत्र'** इति मृद्विकारेषु । **'ऊहापोहा-**

**भ्याम्**' इति अनुगमाननुगमसंवेदनाभ्यामित्यर्थः । नहि यदेव अनुगमबुद्धिग्राह्यं, तदेव व्यावृत्तिसंवेदनस्य विषयः,—इति उक्त आभासभेदोऽत्र स्यादेवेति भेदप्रसिद्धिरिति संबन्धः । '**स्वात्मनः**' इति स्वसंवेदनेन सिद्धेऽनपह्नवनीयतामाह । '**एवमाभासभेदा भिन्नार्थकारिणः**' इति विवृत्य '**ते पदं ध्वनेः**' इति विवृणोति '**तथा शब्दैरपि**' इति । सौत्रमादिपदं लेशतो व्याख्यातुं या वृत्तिः '**चैत्रः**' इत्यादिका, तां व्याकरोति '**अवस्था**' इत्यादिना । स्वलक्षणैकरूपत्वेन अपि यः संमतस्तत्रापि इत्थं सामान्यरूपत्वेन चैत्रशब्दप्रवृत्तिरिति दर्शयति '**स्वलक्षणैका**' इत्यादिना । एकसन्तानतामात्रेण प्रत्यभिज्ञा भविष्यति, अलमत्र सामान्येन यथा सौगतो मन्यते । एतत् निषेधयति '**अन्यथा**' इति सामान्यरूपतानङ्गीकरणे । '**ह्योहष्टेन**' इति यत्र सदृशापरापरोदयप्रबन्धप्रत्ययोऽविच्छिन्न इति यावत् । ननु एवं सर्वत्र सामान्यरूपतानुप्रवेशोऽस्तीति शुद्धं स्वलक्षणं कदा भवतीत्याशङ्कामपास्यति '**सामान्यत्व**' इत्यादिना । '**अनभिव्यक्तेः**' इति उदितस्य अस्य अस्फुटतायाम्, अनुदिते तु सर्वथा मायाप्रमातरि सर्वमिदमहमिति श्रीसदाशिवभूमिका स्वलक्षणरूपता । तत एव आह '**सहजेदन्ता**' इति अनेन समयानुपयोगादनुमानुपयोगमाह । '**अन्यदा**' इति अवस्थाप्राधान्याभावे । '**विततावयविवत्**' इति अवयवी देशविततो भाति, अवस्थाता पुनरवस्थाभेदानुसन्धानैकताविवक्षायाम्—अहो खलु अयं चिरजीवी दृष्टव्यवहारसतत्त्व इति आभासनीय एकः कालविततः अवयव्याभासवदिति एकस्मिन्नेव क्षणे शिरःपाण्यादिमनेकमवयवमवभासयन्त्येव यथा एकघनरूपग्राहिणी अवयविबुद्धिस्तथा जन्मप्रभृति वा स्वकानन्ता-

वस्थाभासनमङ्गीकुर्वती एकघनरूपग्राहिणी अवस्थातृबुद्धिः । ननु एवं यथा एककालवितते प्रत्यवस्थं भेदेनैव व्यक्तितया गृहीते सत्येव एकानुसन्धेः सामान्यरूपता अवस्थारूपव्यक्त्यनुयायिनी कल्पिता, तथा देशवितते$\mathrm{S}$पि कस्मादेकक्षणे$\mathrm{S}$पि सा न कल्प्येतेति भ्रमं भिनत्ति **'ननु'** इति। तत्र हि अवयवेन अवयवानुसन्धाननिरपेक्षैव प्रत्येकं चैत्रबुद्धिर्न उदेति शिर एव चैत्र इत्यप्रतीतेः। बाल्याद्येकतमावस्थाभाजि पुनरवस्थातुरनुसन्धानवन्ध्यतायामपि उदेति चैत्रबुद्धिः, शिरोबुद्धिस्तु भवन्ती पाण्यादिकमवयवान्तरमवश्यमनुसन्धापयति; ततो भवत्यपि शिरसि तादृशी चैत्रबुद्धिः, नतु सर्वथा न भवतीति मुख्यग्रहणम् । तदेवमाभासादेकैकतैव अर्थक्रिया । तत्र तु आभासान्तरस्य अन्वेषणनान्तरीयकतया वह्न्यर्थितायामिव पात्रस्य तत एव अनियतस्य अन्वेषणमिति प्रतिभासविमर्शार्थक्रियाभिराभास एव वस्त्विवति प्रसिद्धतरप्रसिद्धाप्रसिद्धाशयेन एको$\mathrm{S}$पि अर्थो विचित्रतया विभक्तः सूत्रे **'दीर्घवृत्त'** इति **'धूम'** इति **'सद्घट'** इति ॥५॥

ननु एवमेको$\mathrm{S}$र्थो घटत्वलोहितत्वाद्यात्मा न वस्तु भवेत्, भवतीत्याह सूत्रेण

**आभासभेदाद्वस्तूनां नियतार्थक्रिया पुनः ।**
**सामानाधिकरण्येन प्रतिभासादभेदिनाम् ॥ ६ ॥**

आभासानां मिश्रत्वे कश्चिदाभासः प्रधानम्, सो$\mathrm{S}$न्येषां समानमधिकरणम् । तेन सह यस्तेषां सम्बन्धस्तत्सामानाधिकरण्यम्, तदुपलक्षितो यः प्रतिभासः स्वानुरूपेण एष—इह—इदानीं घटो$\mathrm{S}$स्तीति वाक्यार्थविमर्शेन अनुप्राणितस्ततो निमित्तात् ये$\mathrm{S}$भेदिन एकस्वलक्षणतामाप्ताः स्वं भेदमनुज्झन्तस्तेषामन्या अर्थक्रिया समुदायरूपा, आभासविमर्शभेदे पुनरन्या नियता

एकैकमात्रस्वभावा। पुनःशब्दो विशेषद्योतकः। भेदापरित्यागाच्च स्वालक्षण्येऽपि यदाभासमात्ररूपत्वं, तदेव समानव्यक्त्युपरञ्जकं परमार्थतः सामान्यम्, शुद्धघटाभासमात्रावमर्शे तु योग्यतामात्रेण सामान्यरूपतेति सूत्रार्थः। **'अनेकस्यैकता'** इतिवृत्तौ संबन्धरूपं स्मारितम्। ननु अनेकामर्थक्रियां कुर्वत् कथमेकम्। आह **'प्रमाणेन'** इति एकां कुर्वदेकमित्यपि हि न पितृभ्यां प्रीणितमिति अङ्गीकार्यम्, अपितु प्रमाणेन। तच्च आभासप्रत्यवमर्शात्मकम्, नच प्रत्यवमर्शोन्मूलनमित्याह बलग्रहणेन। वृत्तितात्पर्यं व्याचष्टे **'प्रत्याभासम्'** इति। **'अत्र'** इति **'एकस्मिन्'** इत्यादौ वृत्तिग्रन्थे। ननु तथा प्रथनं चेदन्तर्लीनत्वं वस्तूनां कुत इति मोहमपोहति **'प्रथात्मकत्वाच्च वस्तुतत्त्वस्य'** इति। ननु यदि ता एव अर्थक्रियास्तेभ्य आभासेभ्यः, तर्हि भिन्ना एव ते सन्तु; किमेषामुपरि वृथैव इदमेकत्वमारोप्यते। वृथैवेत्याह **'एकप्रथा'** इति। **'वक्ष्यते'** इति पृथग्दीपसूत्रे (२।३।७)। **'ततोऽपि'** इति आभासनविमर्शनाभ्यां तावदेकत्वं सिद्धमेकार्थक्रियाकारित्वमपि परलालितमनयोर्हस्तं ददातु को दोष इति अपिः। **'निरुक्तः'** इति निर्भज्य व्याख्यातः। **'पुनःशब्देन'** इति भेदपृष्ठ एव अभेदात्मा विशेषो द्योतितो भूयस्तावानेकत्वानेकत्वाभ्यामाभासस्य यौगपद्येन, नतु द्वितीयवारवाची पुनःशब्दोऽत्र पुनर्भुङ्क्ते इत्यादाविव। तदाह **'नतु'** इति। ननु पृथक्त्वावभासात् कथमधिकरणव्यवहार इत्याशङ्क्य आह **'अधिकरणं च'** इति। **'तथात्वम्'** इति समवायः। **'एतद्विवक्षित'** इत्यादि समासपदम्। एकाधिकरणत्वं समानाधिकरणत्वमिति यद्यपि शब्दप्रयोगो न विवक्षितः, तथापि अर्थभेद एव वस्तुतो नीलोत्पलशब्दयोः सामानाधिकरण्यं चैत्रमैत्रयोः

समानमधिकरणमितिप्रतीत्योरत्यन्तवैलक्षण्यात् । ननु विकल्पोत्थापितमेतत् सामानाधिकरण्यादि, नतु वस्तु; तत्तु अस्य न किंचित् । आह '**बुद्धि**' इति यद्यपि समवायादि एव सम्बन्धरूपं, तथा संबन्ध एवच अनेकस्य एकता; तथापि समवायः पृथक्पदार्थः । सामानाधिकरण्याद्यपि अदृष्टरूपं वस्त्वन्तरं वा धर्मात्मकं पृथगेवेति येषां दृष्टिस्तदाशयेन सम्बन्धस्य सर्वानुग्राहकत्वमभिधातुं पृथगुक्तमेकत्वमपिच अनेकस्य वास्तवमिति । तथाहि तत्रभवान् समवायस्य रूपमभिधाय अभ्यधात्

'तां शक्तिं समवायाख्यां भेदाभेदप्रदर्शिनीम् ।
अनुगृह्णाति संबन्ध इति पूर्वेभ्य आगमः ॥' (वा०प०३।११)

इति

'शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ।' (वा०प० ३।५)

इत्यादि च । '**एतदर्थ**' इति स्वलक्षणवाची, नतु आभासमात्रवाचीति यावत् । एकत्वं विरुद्धं मत्वेति संबन्धः । तथाभिमाने हेतुः समर्थनाय अशक्तत्वम् । हेतौ शता । पर्वतात् लुठन् यथा कुशकाशमवलम्बमानस्तेनैव सह पतति, नतु तदस्य प्रतनुकामपि रक्षां विधत्ते; तथा यन्न्यायावलम्बनं क्रियमाणमपि न प्रकृतपरिपुष्टये प्रभवति, तदेवमुच्यते । कुशकाशावलम्बनं च तेषां समवायादेर्व्यतिरिक्तपदार्थरूपता गङ्गोदकपवित्रतावच्च स्वयं वृत्तिस्वभावतेत्यादि । अत्र हि पक्षे

'तौ च भावौ तदन्यश्च············ ।'

इति दूषणशल्यमशक्योद्धरणमेव, इहतु दर्शने न विरोधः कश्चिदिति निरूपयति '**बुद्धि**' इति । बुद्धिप्रतिभासित्वं सतो लक्षणम् । तत्रापि अर्थक्रियाकरणोपाधित्वे सत्त्वस्य विशेषो वस्तुसत्त्वमित्येतदधिकं नाम । तदेतावत् विवेच्यं—प्रकृतं यदेकस्य अने-

कत्वं, तद्वस्तुसत् स्यात् न वेति । अत्रापि उच्यते **'एवं वस्त्वव-स्तुनोः'** इत्यादि । प्रतिभासासंभवं दर्शयति **'भावे हि'** इति आ समन्तात् रूप्यते इति तथा नच सर्वतो यद्रूपितं तत् स कथञ्चन रूपितमिति भवति । **'एकप्रथा'** इति एकतया प्रथेत्यर्थः ॥ ६ ॥

ननु न अत्र एका काचिदर्थक्रिया यत्क्रियायै स्वलक्षणमेकमङ्गी-क्रियते । अर्थक्रियाः किल बह्वयो बहुभ्य आभासेभ्यः इत्येताव-दस्तु, प्रत्युत आभासा भिन्ना मिश्रीभवन्ति,—इत्युच्यमाने निय-मनिदानं वक्तव्यं येन जलाग्न्याभासयोर्घटपटाद्याभासानां वा न मिश्रीभाव इति वदन्तं प्रत्याययितुं सूत्रं

**पृथग्दीपप्रकाशानां स्रोतसां सागरे यथा ।**
**अविरुद्धावभासानामेककार्या तथैक्यधीः ॥ ७ ॥**

पृथग्वर्तिन्यः प्रदीपप्रभाः सूक्ष्मतमा अवलोकनशक्त्याधानं न अकार्षुः, एकभवनसंमूर्छितास्तु कुर्वते । तत्र न बह्वयोऽर्थक्रिया याः प्राक् पृथगपि भवन्ति । सागरपतितानि स्रोतांसि बहुतर-तरङ्गसंभारभावितया अद्भुतसंरम्भारम्भीणि भण्यन्तां, कोऽत्र अर्थक्रियाणां समुदायः । तद्वत् घटः काञ्चनो लोहितो महा-निति, अतः शिवलिङ्गस्नपनोचित इति तीव्रप्रीतिरूपामेकामेव अर्थक्रियां विधत्ते इति कथं तत्कारि एकं स्वलक्षणं भवेत् । अर्थक्रियाकारितया हि लौकिकं वस्तुसत्त्वमिति उक्तम् । यत्तु उक्तं नियमनिदानमित्यादि, तत्र उच्यते—येषामेव अविरोध-स्तेषामेव मिश्रता, न रूपाभासपवनाभासादीनां; विरोधोऽपिच नियतिशक्तिमहिम्नैवेति । पृथक् ये दीपप्रकाशास्तेषां संबन्धि यदेकं वस्तु गृहे तन्मेलनात्मकं, सागरे च महत्याशये स्रोतसां संबन्धि यदेकं वस्तु महाजलावयविरूपं; तेन एकेन कार्या यथा

ऐक्यधीरिति ऐक्यबुद्धिस्तदुपलक्षितश्च एकविमर्शः, एकाच अर्थक्रिया; तथैव अविरुद्धा येऽवभासा घटलोहितोन्नतादयस्तेषां सम्बन्धिना एकेन स्वलक्षणात्मना मेलनेन कार्या ऐक्यधीर्व्याख्यातरूपा,—इति सूत्रार्थः । **'एकधा'** इति एकस्य भाव ऐकध्यमित्यकारान्तता उपपन्ना, अन्येतु धमुञन्तात्स्वार्थेऽनुदर्शनमित्यत्र ध्यमुञन्तादपीति स्मरन्ति । व्याख्यानेन वृत्तिगतेन इतीदमुक्तं भवतीति सम्बन्धः । किं तत् । आह **'सूत्र'** इत्यादि । ननु वृत्तौ चकारैस्त्रिभिर्भाव्यमेकेन वा । अत्र आह **'चकारेण'** इति एकेन **'अविभागेन'** इत्यादिका क्रिया समुच्चिता चकारेण आकृष्टेति, द्वितीयेन तु द्रव्यसमुच्चय इति आशयशेषः । **'तद्गतत्वेनैव'** इति चिन्तागतमवस्त्वपि भवेत्, वस्तु च इह दृष्टान्त इत्यर्थः । ननु नीलं पीतमिति दृष्टं विशेषणत्वं यथा नीलं वस्त्रं तव अस्ति, पीतं तु हृद्यतममिति; तदपि सज्यतां त्वयेति केनचिदुक्ते प्रत्याह नीलमेव मम पीतमिति । एतत् समर्थयति **'गुणगुण्यादि'** इति । गुण्यते आरोप्यते हृद्यतादिधर्मेण साधर्म्यादिति गुण आरोप्यमाणः; यत्र आरोप्यते, स गुणी । तत औपचारिकमेवमादि सामानाधिकरण्यमिति उक्तं भवति । आदिग्रहणात् निषेध्यादि तथा पीतं नीलमिति नेति उपचारे दृष्टान्तमाह **'सिंह'** इत्यादिना । ननु एकविचित्रचमत्कारात्मकार्थक्रियाभावेऽपि पानकबुद्धिर्दृष्टा । नेत्याह **'अव्युत्पन्न'** इति । वृत्तिवाक्यं व्याचष्टे **'शौक्ल्याद्याभासाः'** इत्यादिना । प्रथमप्रसिद्ध्यनुरोधतो वाक्यभेदेन वृत्तिं व्याख्याय एकवाक्यतया शास्त्रन्यायावलम्बनेन व्याचष्टे **'अथ'** इति । 'न ब्राह्मणोऽब्राह्मणः' इति वृत्तिसमानार्थत्वात् वाक्यस्य अनित्यसमासत्वाच्च नञ्समासस्येति मन्यते । शिष्टाश्च प्रयुञ्जते एवम् । तथाहि अक्षपादमुनिः

'तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ।' ( ४।१।६ )

इति अवोचत् । अयं हि अत्र अर्थः—अमूढस्य इतरानुत्पत्तेरिति । यद्यपि अनेकाभासयोग उक्तस्तथापि न पूर्णता स्वलक्षणस्येति **'तस्यापि'** इति अपिशब्दः । ततश्च अन्यदपि देशकालाभासरूपं तत्र योज्यमिति द्वितीयोऽपिशब्दः । तद्योजनं विना तु न पूर्णता, तद्योजने तु अन्यायोजनेऽपि पूर्णता स्वलक्षणस्येत्याह **'देशकालभेदादेव'** इति । ननु उक्तेन प्रकारेण य एकाभासः, स भ्रान्तोऽस्तु,—इति सामान्याभासा एव वस्तुसन्त इति कश्चित् । तं निषेधति **'तथाच'** इति चः शङ्काद्योतकः । **'तथा'** इति तेन प्रकारेण । **'तथा शौक्ल्येन'** दार्ष्टान्तिकता तथाशब्देन सूचिता । स कोऽपि अर्थक्रियाविशेषोऽस्ति,—इति संबन्धः । **'ततश्च'** इति अर्थक्रियाविशेषसंभवात् । **'अन्यदा'** इति द्वयोर्विरुद्धयोर्युगपत्समकक्ष्यतया प्रतिपत्तुमेकविषयत्वेनायोग्यत्वात् । **'तथापि'** इति न समकक्ष्यतया प्रतिपत्तिः, अपितु गुणप्रधानभावेनेति तात्पर्यम् । **'अन्यथावा'** इति समुदायासमुदायित्वादिना न अत्र दर्शनान्तरसमर्थनेऽस्माकमभिनिवेश इति यावत् । **'अन्यथा'** इति यदि तदापि तथाप्रतिभासो न भवेत्, तदा तावतो विमर्शात् भेदं न सहते यः प्रकाशः, स न स्यात् । अत्र दृष्टान्तः **'यथा'** इति । अननुभूयमानोऽनेको रसो येन प्रमात्रा यस्य पित्ताद्यन्यतमोद्रेकात् कटुरेव मधुर एववा भाति, न तस्य प्रमातुः पानकरसः प्रतिपन्नो भवति । ननु प्रत्यक्षेऽपि यदि एकमनेकं च भाति, तर्हि

'तद्द्वयालम्बना एता मनोऽनुव्यवसायि········ ।' (२।२।३)

इति कथमुक्तमित्याशङ्कां निकृन्तति **'केवलम्'** इति । येन हि प्रमात्रा मरिचगुडादि न आस्वादितं कदाचित्, पानकमेवतु

आस्वाद्यते इति; तस्य स भिन्नो रसो विकल्पेन व्यवहार्यतां न नेतुं शक्यः प्रत्यक्षावभातोऽपि, अपरस्य तु शक्यस्तत उच्यते—पूर्वसंस्कारापेक्षत्वाद्विकल्पेन स्फुटीक्रियेते भेदाभेदाविति। न केवलं तावत् विमर्शसहत्वं यत् प्रकाशस्य, तदेव अनेकप्रतिभाससम्भवहेतुर्यावत् कार्यकारणगतस्य वैलक्षण्यस्य भावोऽपीति दर्शयति '**कार्यकारणभावोऽपि**' इति। '**अन्यस्य**' इति मृद्दण्डादिकात्। ननु अनेक एव आभासोऽस्तु विमर्शभेदात् कार्यभेदात् कारणभेदाच्च, एकाभासता तु कुतः। आह '**एकाभासश्च**' इति तदनेकाभासपृष्ठे सोऽपीति चः। न केवलमनुभवविमर्शबलात्, कार्यबलादपि एकाभास इत्याह '**अर्थक्रियाभेदः**' इति। '**तेषाम्**' इति विवेकिनाम्। '**तदा**' इति एकाभासापह्नवे सत्येऽर्थक्रिया। ननु ज्वरादिशमन इत्यादिन्यायेन अनेकस्मादपि एका सा भविष्यति। नेत्याह '**नच**' इति। ननु ज्वरादिशमनं पञ्चमूलादेः कथम्। उच्यते '**द्रव्यान्तर**' इति। तत्र हि पृथक् रसवीर्यादिना दोषांशशमनं यत् यस्य प्रसिद्धं द्रव्यस्य, तदेव द्रव्यान्तरसंपर्केण उपबृंह्यते दोषान्तरोद्दीपकत्वं परिरक्ष्यते इति न्यायः॥ ७॥

ननु मरिचादीनां गुडादिद्रव्यान्तरसंपर्कात् रसान्तरमेव उदेष्यति रूपान्तरमिव ताम्बूलीदले चूर्णकसितखदिराणाम्। नैतदिह सममिति दर्शयति '**तदाविर्भावे वा**' इति। अस्ति च कुशलस्य पातुस्तथा पृथक्त्वेन परिज्ञानं मरिचादिना एतत् कृतमितिप्रत्ययादिति भावः। कारणमपि एकसामग्र्याभासरूपमस्ति प्रसिद्धमिति तु न दर्शितम्। ननु न मरिचादिषु शौक्ल्याभासादिष्विव सामानाधिकरण्यमस्ति पृथग्भूतान्यावयविद्रव्यस्वभावत्वेन एषां प्रसिद्धेः। सत्यम्, सामानाधिकरण्ये तु न

अयं दृष्टान्तः । क तर्हि । आह '**एकतापत्तेरुपपत्तौ**' इति । ननु न दृष्टान्तमात्रात् वस्तुसिद्धिः । उच्यते पृथगनेकाभासत्वे विमिश्रतायां च एकाभासत्वे यतः साधनं प्रकाशविमर्शकारणकार्यभेदाभेदाभासलक्षणमस्ति, तेन हेतुना; न दृष्टान्तेन । दृष्टान्तेन तर्हि किम् । आह '**मरिचादीनाम्**' इत्यादि । अनेको विलक्षणो रूपस्पर्शरसादिर्गुणो यस्य द्रव्यस्य, तद्रूपाणाम् ; पृथगिति पृथग्देशानां मरिचादीनां द्रव्यान्तरेषु गुडदध्यादिषु पृथग्देशेषु तथैवेति विलक्षणगुणेषु भिन्नजातीयेषु अनुप्रवेशे व्यामिश्रतायां सत्यामापन्न उपनत ऐक्यावभासस्तावदुपलभ्यते, नच काकतालीयेन, अपितु असकृत् । एवं यत्र उपलभ्यते व्यवहारे सति तस्मिन् सत्त्वादीनां व्यवहारे कदाचिदपि पृथगननुभूतस्वतन्त्रभावानां का विमतिरैक्यावभास इति परस्य असंभावनां निराकर्तुं दृष्टान्तोऽयं सत्यपि हेतौ '**ननु**' इति । एतदेव घटयति '**नहि**' इति । मरिचगुडदध्नां न धर्मधर्मिभावेन गुड एव दधि मरिचमेव गुड इति वा न प्रख्या, न उपाख्या पानकभूमौ गङ्गायमुनावितस्तादीनां सागरे । '**गुण**' इति लौहित्यस्य घटद्रव्यस्य च पटत्वादेश्चेतनगतस्य धर्मपदार्थमध्ये गृहीतस्य चैत्रस्य धर्मधर्मिभावो वास्तव एवेत्याशङ्कापूर्वकं सूत्रमवतारयति

> **तत्राविशिष्टे वह्न्यादौ कार्यकारणतोष्णता- ।**
> **तत्तच्छब्दार्थताद्यात्मा प्रमाणादेकतो मतः ॥ ८ ॥**

'**एकैक**' इति, चोऽप्यर्थे शङ्क्यमानत्वमर्थस्य आह । यद्यपि प्रत्यक्षस्य प्रत्याभासं प्रामाण्यमुपगतं, तथापि अविशिष्टे वह्न्याभासमात्रे प्रत्यक्षेण गृहीतेऽपि इन्धनकार्यताभासो धूमकारणताभास इत्यादिवस्त्वन्तरापेक्षो य आभासवर्गः उष्णताभास इति अनपेक्ष इत्येतावानकृत्रिमः सर्वदेशकालगतो नियतिशक्त्या

कृतो, यश्च तस्य तस्य शब्दस्य अयमर्थस्तत्तच्छब्दाभिधेयताभासः कतिपयदेशकालनियतः सङ्केताभिव्यक्त्यपेक्षी नियत्या कृत आत्मा स्वभावः आदिग्रहणादूर्ध्वदिक्संयोगिता रसगन्धाभावविशिष्टता जलविरोधित्वमिति; स आत्मा एकस्मादेव नियतिवदनावलोकिनः प्रत्यक्षात् मतः सिद्ध इति सूत्रार्थः संक्षेपेण व्याख्यातः '**सर्व**' इत्यादिना । सर्वशब्देन यथोचितनियतिनियमितदेशकालकात्स्र्न्यमुच्यते । सूत्रे द्वितीयतृतीयपादौ समस्तावेव । वृत्तौ हि समास एव स्फुटीकृतः ।

'अर्धयुक्पादवृत्तान्ते विश्रान्तिः········· ।'

इति तु काव्येऽयं समयो, न शास्त्रे; अपेक्षानपेक्षापौरुषेयत्वादिविभागप्रदर्शनाय विभागेन भावप्रत्ययः । ननु प्रत्याभासं संव्यवहारे प्रमाणस्य प्रवृत्तिर्न अनुभूयते देशकालाभासयोः सर्वत्र अन्ततो व्यभिचाराभावादित्याशङ्कामनुवदन् परिहरति '**प्राचुर्येण यद्यपि**' इति । ननु किमर्थं प्रकारान्तरेण वस्तुस्वभावं जिज्ञासते । आह '**तत्**' इति । तस्मिन्नेव व्यवहारे उपयोगिनी सा प्रत्याभासं जिज्ञासा भवेत् तत्तत्कार्याद्यंशसिद्धये । तत्तत्कारणांशसंभरणं हि ऊहापोहाभ्यामभ्यस्ते विभागे सति संभवति, न इतरथा । '**कदाचित्**' इति जिज्ञासावसरे इति यावत् । वृत्तौ देशकालाभासावेव त्याज्यत्वेन कस्मादुक्तावित्याशङ्क्य आह '**देश**' इति । तावेवहि आकारस्य आक्रियमाणस्य अर्थस्य भेदमन्यत्र अन्यदा च अननुगामितां प्रतिष्ठापयतः, तदभावे हि आभासान्तरमिश्रणा विशेषरूपतां विश्राणयन्ती अपि न स्वालक्षण्यमाक्षिपति । तत् निदर्शयति '**तथाहि**' इति । '**शावलेयादिः**' इति सत्त्वद्रव्यत्वप्राणित्वपशुत्वगोत्वाभासानन्त्यमव्यभिचरन्नपीति भावः । तेन महाविषयत्वाल्पविषयत्वाभ्यामा-

पेक्षिकाभ्यां सामान्यविशेषरूपत्वमनियतम्, स्वालक्षण्यं तु नियतम्। एवं स्वालक्षण्यस्य देशकालाभ्यां व्यतिरेकमाभासान्तरैश्च तद्भावं प्रदर्श्य, तस्यैव ताभ्यामन्वयं, तैश्च तद्भावं दर्शयति '**देशकालाभास**' इत्यादिना। एतदेव घटयति '**देश**' इति। '**तत्**' इति देशकालत्यागे। इयति च नियतिरेव अनुप्राणिकेति घटयितुमुक्तपूर्वमेव स्मारयति '**देशकालभेदोऽपि**' इत्यादिना। अत्र च इदं तात्पर्यम्—इह त्यागो य उक्तः, स कयोः; देशकालयोरिति चिन्तायां स्वरूपीभूतयोर्मूर्त्यवभासक्रियावभासात्मनोर्मन्तव्यः। सहि भेदस्वरूपनान्तरीयक एव। ततः सदाभासोऽपि असदनाभासात् मूर्तिभेदरूप एव। तत्र तु घट इत्यस्ति मूर्त्याभासान्तरेण संभेद इति सामान्यतैव। इयतिच अत्र सामान्यविशेषता सर्वत्र प्रकाशापेक्षया। यत्र तु पर्यन्तवर्तिनि मूर्तिक्रियाभासेऽन्यसंभेदासंभवः, स विशेष एव। तदेतदाह '**आभासभावाभावौ च**' इति। स्वलक्षणं स्वरूपमाभासान्तरादौष्ण्याद्याभासात् व्यावृत्तं येषां रूपाद्याभासानां, ते तथाभूता एव सृष्टा इति स्वरूपीभूतदेशकालात्याग एव भवेत् व्यतिरिक्तदेशकालयोगस्तु त्याज्यः। सोऽपि विशेषरूपतया शक्यत्यागो, न सामान्यरूपतया। नहि एतत् भवति—भास्वररूपाभासो न केनचित् देशेन कालेन वा विशिष्ट इति। अनेन आशयेन आह '**इति च**' यत् वृत्तावुक्तं तद्देशकालसामान्ययोगेऽपि तस्य रूपाद्याभासस्य सामान्यरूपत्वं न हीयते इति प्रतिपादयितुमिति। ननु देशादिसामान्याभासः कस्माद्हेयः। यत इत्याह '**स्वरूप**' इति स्वरूपभेदावभासेन आक्षिप्तत्वात्स एव असावुक्तः। तदेव आक्षिप्तत्वं दर्शयति '**नहि**' इति। '**वस्तुरूपौ**' इति पृथगर्थक्रियाकारी भूतलादिरादित्योदयादिश्च भवत्येव देशकालात्मा। अत्र

आह '**यद्यपि**' इति। '**उपचर्येत**' इति व्यवह्रियेत, यदिवा गौणवृत्त्या उच्येतेत्यर्थः। '**भेदावभासेनैव**' इति स्वरूपभेद-पर्यवसायेनेति यावत्। तं भेदावभासं दर्शयति '**भिन्नेन च**' इति एकश्चो ह्यर्थे। एतदुपसंहरति '**तत्**' इति तस्मात्। स्वात्मा-भासस्य रूपादिलक्षणस्य विशिष्टदेशकालयोगाभावे न भेदस्तद-वश्यं क्वचिद्देशे काल इति वा सर्वत्रेति वा तत्सामान्यावभासः, भिन्नेन तु योगो दण्डेन इव पुंसो भवन् स्वरूपमेव भिन्दंस्तथा भवति। एतदुक्तं भवति—स्वरूपमेव संकोचि देशकालौ, तत्रापितु मध्ये संकोचान्तरात् सामान्यता, यावत्संकोचान्तरं मूर्तिभेदा-न्तरमसहमानं विशेष एव, न सामान्यम्; मूर्तिभेदगर्भतासहं तु महासामान्यं सत्ता। एतत् स्फुटयति '**तथाहि**' इति। देशो दूरादिभेदानपि सन्दधानः स्फुटताधानेनैव उपकारीति स्मर्यमाणत्वमस्य दिवसादिवत् न निदर्शितम्, कालस्तु त्रिधा भवन् वर्तमानात्मा स्फुटतया, अन्यस्तु अस्फुटत्वेन भवत्युपका-रीत्याह '**अथवा**' इति। स्मर्यमाणेन अत एव अस्फुटाभासेन सहितः क्रियाविशेषो यस्य अवभासते, स भूतः। '**प्राक्**' इति कालचिन्तायाम्। अत्र च स्मर्यमाणेन उत्प्रेक्ष्यमाणोऽपि उप-लक्षितः। चकारेण च अनागतः संगृहीतः, यदिवा अनागतेऽव-भासनं प्राचुर्येण निश्चितं न संभवति,—इति न असौ दर्शितः। ननु सूर्यसंचारादेरपि वर्तमाने इव गतिरस्ति, सा कथम्। इत्थ-मिति दर्शयति '**स्वात्मन्येव**' इति। देहावस्थानां प्राणगमाग-मानां च वैचित्र्यात् कालभेदः सूर्यादेरिति यद्यपि, तथापि पर्यन्ते प्राणादीनपि अयं परित्यज्य बुद्धावपि चित्तरूपायां प्रमा-तृत्वाभिमानेन प्रमेयतया वा यदा विश्राम्यति, तदा

'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ।' (यो० सू० ३।९)
इति

'शान्तोदितौ तुल्यप्रत्ययौ।' (यो० सू० ३।१२)

इति च नयेन अवश्यं स्फुटास्फुटरूपत्वं संभवत्येव। ननु चित्तव्यापारस्य केन रूपेण स्फुटत्वमस्फुटत्वं च। चित्तं व्यवसायरूपम्, अवसायश्च विमर्शः; सच प्रकाशस्य आत्मा, प्रकाशश्च अदेशकालकलितः। अत्र आह **'विषयावभास एव'** इति। विषयोपरागसंकुचितत्वादेवहि तत् चित्तमुच्यते, अन्यथातु चिदेव, नतु चित्तं किञ्चित्। विषयश्च वेद्यरूपः, ध्येयाद्याकारो वा चित्तप्रलयादवस्थितस्वरूप एवेति तदात्मना स्फुटास्फुटत्वयोगो युक्त एव। तदेवमियता रूपाद्याभासानां सामान्यदेशकालयोगेऽपि तद्विशेषायोगात् सामान्यरूपतैव, तस्यामेवच प्रमाणव्यापार इति उपपादितम्। ननु यत्र एकव्यक्तिरूपत्वं चैत्रो मैत्र इत्यादौ, तत्र सामान्यायोगे किंनिष्ठः प्रमाणव्यापार इति चोदयितुं विस्मरणशीलतां दर्शयति **'एकावयवि'** इत्यादिना। अवस्थातृरूपं हि तत्र एकं सामान्यमिति उपपादितम्। एकमेकैकसामान्यस्वरूपमुपपाद्य प्रकृतं सूत्रार्थं तत्र योजयति **'तथाभूते च'** इति भित्तिकल्पे ते स्वभावा धर्म्यवैचित्र्यात्मानः। ननु यत् रूपग्राहि प्रमाणं चाक्षुषं, तदेव कथमौष्ण्यग्राहि। औष्ण्यं हि स्पार्शनं, न चाक्षुषम्। अत्र आह **'एकत्वं च'** इति। न अस्माभिरुक्तम्—येनैव भास्वरं रूपं गृह्यते प्रमाणेन, तेनैव औष्ण्यमिति; अपितु एवमुच्यते—येनैव प्रथमप्रथमप्रवृत्तेन प्रमाणेन भास्वरसन्निवेशविशेषरूपमौष्ण्यादि अव्यभिचारितया गृहीतम्,तेनैव त्रैलोक्ये त्रैकाल्ये च भास्वररूपसंनिवेशविशेषस्य तदौष्ण्याव्यभिचारित्वं निश्चितमिति न तत्र प्रमा-

णान्तरोपयोगः । एवमौष्ण्यविशेषोऽपि तथारूपाव्यभिचारितया येनैव प्रमाणेन प्रथमं निश्चायितः, तेनैव सार्वत्रिकस्तथैव व्यवस्थापित इति । तत् तु कतमत् प्रमाणं स्यात् यदेवमव्यभिचारनिश्चयाय अभिषिच्यते इति अदूरे एव वितनिष्यते । '**अत्र**' इति वृत्तौ । ननु स्वभावे एवमस्तु, कार्यकारणादियोगे तु परापेक्षके कथम् । कथंच न स्यादित्याह '**कार्यत्वादि**' इति । प्रमाणेन न विषयीकृतं तदिति तावदशक्यवचनं प्रतीत्यपह्नवापत्तेः; विषयीकृतं चेत्, स्वभावभूतमेव तत् जातमन्यापेक्षमपि व्यवह्रियमाणम् । अत्रैव उपपत्तिं सूचयंस्तत्तच्छब्दवाच्यत्वेऽपि अयमेव न्याय इत्याह '**अत एव**' इति एकवारप्रवृत्तं प्रमाणं यदि सार्वत्रिकतया भावनिश्चये मन्दीभवेत्, तदा अयमग्निरिति महानसे गृहीतसङ्केतः श्मशाने कथं व्यवहरेदग्निरयं ज्वलतीति । यत्र च साङ्केतिकेऽपि अयं मन्दस्तत्र अकृत्रिमे तत्कार्यत्वतत्कारणत्वादौ का नाम अनवक्लृप्तिरित्येवं वक्तुमत एवेति मध्ये निरूपितम्, नतु एकरसमेव उक्तमग्निशब्दवाच्यतापीत्यादि । '**आदिग्रहणात्**' इति वृत्तिगतात्, टीकागतादपि आदिशब्दात् पवनसखत्वादेर्ग्रहणम् । '**स्वभावशब्देन**' इति वृत्तिगतेन । अधुना तत् वितनोति यदुक्तं कतमत् प्रमाणं तत् स्यादिति । तत्र पूर्वपक्षं तावत् करोति '**अत्र च**' इति । चः प्रमेयसमुच्चये । अत्र सूत्रे यदेवंविधं वक्तव्यान्तरमुपयोगि, एतत् कथं व्यवस्थापनीयमिति अतिदूरेण संबन्धः । का अस्य व्यवस्थापने दुर्घटतेति चेत्, आह '**एकस्मात्**' इति सन्निधग्धसत्ताकमर्थान्तरं भूतलान्तर्निधानादि । '**परस्पर**' इति यत् सत्, तदुष्णमिति । एवमेकैकस्य परस्परस्वभावताग्रहणे कुण्ठशक्तित्वमुपपाद्य समूहस्य अपि उपपादयति '**अनेकेनापिच**' इति शिखरस्थ-

संवेदनेनैव गृहापणरथगजादि । ननु प्रमाणसमूहानन्तरभावि विकल्परूपं संकलनाज्ञानमन्योन्यस्वभावतां व्यवस्थापयिष्यति । नेति ब्रूते '**संकलना**' इति । दण्डपुरुषप्रतिसन्धानवदेतदपि भविष्यतीति उत्तरं

'·········तदसिद्धं यदसिद्धेन साध्यते ।'

इत्युपालम्भेन भिनत्ति '**दण्ड**' इति '**अवभास**' इति अवभासेन । ननु अनेकाभासं यत् विज्ञानं, तत् विषयमेलनां कुर्वदेव एकं प्रमाणं भवेत् । उक्तमत्र

'गजतुरगरथादेर्मेलनं नैकदृष्टौ ।'

इति । तावत् दोषान्तरमपि आह '**अन्यथा**' इति । परस्परं विषयस्वरूपमपेक्षमाणमेव यदि प्रमाणं स्यात्, तदा द्विचन्द्रमपेक्ष्यैव नभोग्राहि प्रमाणं नभसि प्रमाणं भवेत्, न द्विचन्द्रोऽस्तीति अप्रमाणमेव स्यात्; गगनमपेक्ष्य वा द्विचन्द्रे प्रमाणमिति गगनस्य वस्त्वन्तरस्य आलोकादिरूपस्य वा संभवात् तदपेक्षया द्विचन्द्रेऽपि स्यात् प्रमाणम् । अथ द्विचन्द्रेऽस्य पृथक् व्यापारः पृथगवगमविषयीति, तर्हि सत्येषु अपि प्रमेयेषु पृथगेव अस्य प्रामाण्यम्, न अन्योन्यापेक्षयेति । ननु एकैकता अस्तु प्रामाण्यमेकैकं तु स्वलक्षणरूपमुच्यते, तच्च अनेकव्यावृत्तिकल्पनीयधर्मतामात्रमिति तेनैव रूपसंनिवेशोर्ध्वगामितात्मकं वह्निस्वलक्षणं गृहीतम्; भवन्मतेऽपि एकं स्वलक्षणमनेकसामान्यमेलनरूपमिति एकस्वलक्षणताग्रहणबलादनेकस्य तस्य अन्योन्यापेक्षा अपि सिद्ध्येदेव । एतत् निराकुरुते '**अनेकावभासित्वेऽपिच**' इति ज्ञानस्य परामृशत एव प्रामाण्यादिति संबन्धः । अत्र हेतुमाह बौद्धमते क्षणिकत्वादौ भातेऽपि अनिश्चितेऽध्यक्षस्य माभूत्प्रामाण्यमिति अपरामृशतोऽपि हि प्रामाण्ये क्षणिकत्वेऽपि···

वा व्यतिरेकितया गृहीते स्यादेव प्रत्यक्षं प्रमाणम्, नच एतदिष्टं परस्य । ननु परामृशत एव प्रामाण्यं चेदियता किम् । आह **'परामर्शानां च'** इति ।

'यावन्तोऽर्थसमारोपास्तन्निषेधेऽपि निश्चयाः ।

तावन्त एव.....................॥'(प्र०वा० १।५१)

इतिनये प्रतिव्यावृत्ति भेदेन वर्तमानः परामर्शः प्रमाणमपि एकैकस्यां व्यावृत्तौ सामान्यरूपायां पृथगेव वर्तमानं पर्यवसाययति । ननु तेन प्रमाणेन समस्ततावद्व्यावृत्तिरूपसामान्याभासानामेकस्वलक्षणविश्रान्तावभासानामभेदो गृहीतः । सत्यं गृहीतः, किन्तु तं गृहीतमपि अवधीर्य पृथगेव प्रामाण्यं युक्तम् । अवधीरणे हेतुर्यतोऽसाववभासो ग्रहणात्मा विमर्शवशेनैव उपयुज्यते प्रवर्तकत्वादिना प्रामाण्यं भजते । प्रमेयमुपसंहरति **'ततश्च'** इति पृथक्पृथग्व्यावृत्तौ प्रामाण्यादित्यर्थः । स्वविषये एकव्यावृत्तिमात्रं विशेषणविशेष्यत्वं यत् भास्वरं, तदुष्णं; यो धूमजातीयः, सोऽग्निकार्यं इत्येवंभूतं ज्ञातुमशक्यम् । ततश्च **'पूर्वोक्ता'** इति एतत्सूत्रदर्शिता अनन्तरसूत्रदर्शयिष्यमाणा च प्रवृत्तिर्न भवेत् विशिष्टार्थितया विशिष्टस्य प्रमाणेन क्वचिदपि अप्रदर्शितत्वात् । ननु अर्थिताबलात् प्रवृत्तिरिति उक्तं, सत्यम्, अर्थितापि सति अर्थसंशयादौ भवेद्यत्र क्वचिदर्थिताकृतप्रवृत्त्यभावः । नच क्वचिदपि कदाचित् विशिष्टं दृष्टमनेन किञ्चिदिति अर्थसंशयाद्येव अस्य न भवेदिति प्रेक्षकश्चेत् न प्रवर्तेत क्वचिदप्रवृत्तेरेव प्रेक्षकता तदानीम् । तदाह **'प्रेक्षा'** इति । किंच अर्थितातारतम्येन प्रवृत्तिमान् मूढलोको भवति, न प्रामाणिकः । सोऽपि च वर्तमानो दृष्ट इति तत्प्रवृत्तिर्न भवेदेव उक्तक्रमेण । तदपि आह **'प्रेक्षा'** इत्यादि । **'येषाम्'** इति

सौगतकाणादादीनाम्। **'अपरिहार्यः'** इति सर्वथा अत्र नास्ति परिहारः। तथाहि यदुच्यते तैः—अग्निर्धूमकारणतां, धूमश्च अग्निकार्यतां त्यजन्नकारणको भवेदौष्ण्यादिकं च त्यजन् निःस्वभाव एव स्यादिति, तत् सिद्धेन कारणकत्वाद्याभासेन सह धूमाभासादेस्तादात्म्येन भण्यते नाम। तदेव तु पृथगाभासेषु प्रमाणेषु न सिध्यति। तथाहि—ग्राहकं कियतीति परामर्शबलात्परामर्शाच्च पृथगेवेति दर्शितम्। एकग्रहणगृहीतवस्तुविषया यावन्तः परामर्शास्तदध्यवसिततावद्व्यावृत्तिमय एकोऽर्थात्मेति चेत्, एतदेव दुर्ज्ञानमेकग्रहणेन कियद्गृहीतमिति। एतावन्तश्च परामर्शा एतद्ग्रहणपूर्वका इत्यपि दुर्ज्ञानतरम्। उक्तं हि

'दृक् स्वाभासैव..................।' ( १।३।२ )

इति। ततश्च केन एतत् तृतीयेन ज्ञेयं ग्रहणानन्तरमयपरामर्शात्माध्यवसाय इति। स्वसंवेदनतया हि उभे अपि ज्ञाने स्वात्मानं जानीतां नाम, न अधिकं तु ज्ञातुमर्हतः। अत एव इदमपि अयुक्तमुक्तमनग्नौ भवन् धूम एव न स्यात्। अग्न्यनन्तरस्वभावो हि सः, अतथात्वे पुनरेकवारमपि तथा न स्यात्। यदिहि एकवारमपि एतत् सिध्येत्, सार्वकालिकता यावगता, तद्बले ग्रन्थिर्लग्न इति न शक्यं किंचिदौषधमुपयोक्तुमाक्रष्टुं वा दोषजातम्। तत एव तन्मात्रनिमित्तत्वं तन्मात्रस्वभावं तन्मात्रप्रापणत्वं तन्मात्रानुबन्धित्वं तन्मात्रलक्षणत्वं धूमवत्त्वादेर्वह्निमत्त्वादिना,—इत्यादिवाचोयुक्तिसहस्रमपि वैराटैरिव रटितं बलवद्भिरुपचिते ग्रहेऽकिंचित्करमिति अस्मद्दर्शनमेव ऐश्वरानुग्रहार्जितार्जुनतेजोऽत्र शरणीकर्तव्यम्। तदाह **'अस्माभिः पुनः'** इति उपपन्नं युक्तमभिन्नप्रकृतित्वं पारमार्थिकमेकस्वसंवेदनात्मकत्वं यासां, तादृश्यः समर्थिताः संविदः। नच शुष्केण एकत्वमात्रेण अपि एतत्

निर्वहति । तत आभासमेलनां नियतां कर्तुमैश्वर्यमुपेयमिति ख्यापयति '**प्रत्यवमर्शो**' इति । '**सा**' इति संवित् । '**प्रमाणम्**' इति स्वसंवेदनलक्षणम् । ननु ऐक्यं गृहीत्वा तया संविदा स्वालक्षण्ये न गृहीतेऽभेद एव तात्त्विकीकृत इति सामान्यात्मान आभासा एव परमार्था इति आभासवस्तुवादस्त्रुट्यति । न त्रुट्यतीति दर्शयति '**ऐक्यमपिच**' इति '**अपराग्निशब्द**' इति वाच्यभाग इव वाचकभागेऽपि अभेदात्मा सामान्यरूपतयैव प्रधानमित्यर्थः । सापि संवित् सामान्यविषयैव यत ऐक्यमपि सामान्यरूपतया प्रमिमीते इति सङ्गतिः । '**एवमेवच**' इति स्वसंवेदनरूपतया देशेन संबन्धो धरायां वह्निरिति, कालेन ग्रीष्मे दावाग्निरिति, द्रव्यान्तरेण पवनोऽस्य उद्दीपको जलविरोधीति; आदिग्रहणादूर्ध्वज्वलनादिक्रियाद्यात्मना धर्मवर्गेण संबन्धः । '**इत्थमेवच**' इति इदं च असकृत् निरूपितम् । ननु यत् सौगतैरत्यन्ताननुगामि स्वलक्षणमुच्यते, तत्र का वार्ता । आह '**यत् पुनः**' इति । तत्र मायाशक्तिवशादत्यन्ताननुगामिताभिमानः परम्, अनुगामितैव तु परमार्थः । तथाहि—यदा तावदयं भावात्मा मायीयपरामर्शपदवीमेति, तदा अयमिदानीं विशिष्टो घटो मया चैत्रेण इह मीयत इति वाक्यार्थपरामर्शोऽपि एवंजातीयतयैव पुनःपुनरुदयोचितः । ततः सामान्यरूपतैव तात्त्विकी । मायीयत्वानुदयेऽपि अहमिदमिति शुद्धा अपि इदन्ता या सङ्केतानपेक्षिणी तत एव कालान्तरानुवृत्त्यादिशून्यस्वालक्षण्यमात्रपर्यवसिता, सापि अहन्तायामभिन्नायां लीयते मायीयताया अनभिव्यक्तेरिति कोऽस्य अवसरः । कुत्र भेदस्तात्त्विकतां प्रतीत्यनुसारेण अवलम्बते मुक्त्वा तदभिमानमात्रं मायोत्थापितम् । सर्वत्र हि

'इदमित्यस्य विच्छिन्नविमर्शस्य……………।' (अ०प्र०सि०१५)
इतिनयेन प्रमातृतायामेव विश्रान्तं स्वरूपं सर्वं, प्रमातृता च अभिन्ना। एतदाह **'यत्पुनः'** इत्यादिना **'उपपादिताविभेदत्वम्'** इत्यन्तेन। बहुव्रीहेरयं भावप्रत्ययः। ननु सत्यं प्रमातुरभेद उपपादितः, किन्तु मायीये प्रमातरि नीलस्वलक्षणप्रतीतिर्विश्राम्यति; सच नीलावच्छिन्न इति कथं तस्य अभेद इत्याशङ्कां निराकरोति **'तथाविधार्थ'** इति। नीलस्वलक्षणप्रमातृता अपि उक्तवाक्यार्थपरामर्शरूपा देशकालसाधारणी एव। **'तथाविधोऽपि'** इति स्वलक्षणात्मा अपि। **'तात्त्विकः'** इति मायीयाभिमानमात्रकृतस्तु भेदः पूर्णस्वात्मरूपाख्यानमात्रसार इति यावत्। तदाह

'सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्थिताः॥'

(वा० प० ३।३२)

इति। एतदुपसंहरति **'तेन'** इति स्वलक्षणमपि यत्नेन यथा उपपादितं, तथा दर्शयति सामान्यपदेन। **'अत्रैवच'** इति स्वलक्षणतायाम्। **'भेदमात्रात्'** इति स्वलक्षणताव्यतिरेकादित्यर्थः। प्रसिद्धं हि समानोपरञ्जकत्वं, लक्षणं तदेव। एवं स्वदर्शने तत्त्वमुपपाद्य, परः स्वदर्शनमेवं यदिहि उत्पादयेत्—ननु मा भूदध्यवसायबलेन प्रतिव्यावृत्ति प्रामाण्यं, निरंश एव अस्तु स्वलक्षणे भास्वरोर्ध्वगामिरूपे प्रामाण्यमिति, तत् कोऽस्य दोषः। अयमित्याह **'तदेकत्रैव'** इति। तदिति तस्मादभ्युपगमात् हेतोः क्षणिकत्वांशे न प्रमाणं, स्थैर्यांशे तु प्रमाणमिति हि विषयभेदे सति शोभते, नतु एकवस्तुविषयतायाम्। **'तदुक्तान्येव'** इति यानि सर्ववाद्यन्तरोपमर्दनपरमास्त्राणि विरुद्धधर्मापादनानि।

ननु मा भूदेषा प्रमाणाप्रमाणादिविभागप्रक्रिया, किं हि अनेन वादान्तरगमनेन । प्रकृतं हि तावत् सिद्धम्—वह्निरेकस्वभावो, ननु व्यावृत्तात्मा प्रमाणात् सिध्यतीति । प्रकृतमेव न सिद्धमिति दर्शयति **'तैश्च'** इति सौगतैर्भास्वरत्वसन्निवेशोर्ध्वगामित्वादावेकेन्द्रियग्राह्यस्य एष क्रमो, भिन्नेन्द्रियग्राह्यस्य तु एकेन ज्ञानेन ग्रहणासम्भवे कथं भास्वर उष्णोऽग्निरित्येकस्वभावताव्यवस्थापनं; ततश्च भास्वरः शीतमपनुदतीति अविदिते भास्वरं दृष्ट्वा अपि शीतापनोदार्थी कथमुपसर्पेदिति तथापि व्यवहारलोपः । **'यदि नाम'** इति विशेषणविशेष्यतात्मकसम्बन्धप्रतीतौ नास्ति व्यापारोऽध्यक्षस्य, किंच एकघनाध्यवसायोदयो नास्ति,—इति घ, एकघनो गृहीत इत्येतदेवाबद्धप्रायमिति । अत्रापि अवज्ञां दर्शयति **'मनोविज्ञाने'** इति विकल्परूपे । तत् हि काममेकस्मिन्नेव क्षणेऽनेकं रूपादिकमतद्व्यावृत्तिमात्रेण सामान्यरूपमनियतं विषयीकुर्यात्, ननु अन्योन्ययोजनामविकल्पकेन अकृतपूर्वां कर्तुं योग्यं भवति । **'एकत्र'** इति एकत्वेन संमतेऽर्थे न स्यादेवमाकारा प्रतिपत्तिर्यत एवंभूतं विज्ञानस्य स्वरूपमिति सङ्गतिः । सप्तमी निमित्तार्थे । अत्र पराभिप्रायं शङ्कते **'अथ'** इति । **'रूपाश्रय'** इति रूपस्य आश्रयोऽधिकरणं समवायिद्रव्यं तत्र, रूपमेववा आश्रयोऽतिनिकट इति रूपसन्निकर्ष इति साधारण्युक्तिः । अत एव उपसंहरिष्यति **'ननु एकदेशता सन्निकृष्टतासन्निकृष्टता वा'** इति हस्तसन्निकर्षे स्पर्शग्रहणं रूपं च तत्रैव उपलभ्यते इति । एषा च सा तृतीया संवित् सिद्धान्तिमते पारमार्थिकी स्थिता लोकस्य, परन्तु एतत् न उपपद्यते इति विकल्पयति परमाक्षिपन् **'ननु'** इति । **'अत्रापि'** इति अस्मिन्वस्तुतत्त्वे स्थितेऽपि तव कथमेतदिति यावत् । हस्तो हि

रूपस्पर्शात्मा वस्तुतस्तत्र विकल्प्यते यो हस्तस्य स्पर्श आन्तरो नैर्मल्याद्विषयस्पर्शग्रहसमर्थ इति इन्द्रियतया उक्तः, स वन्नैरन्तर्येणेति तावद्युक्तम्। एतेन आशयेन विकल्पद्वयं कृत्वा अन्त्यं विकल्पं घटयति स्पर्श एवहि इन्द्रियम्, अनुमेयता तु तस्य यतो नियते देशे नियतेन कर्कशसुकुमारशीतादिना रूपेण अवधार्यमित्येवं यद्यपि उक्तं, तथापि यावद्गति विचारणीयमिति दर्शयति **'तत्र यदि'** इति। एनं पक्षमसम्भवेनैव प्रतिक्षिपति **'केन'** इति। रूपस्पर्शोभयग्राहिणा रूपस्पर्शनैरन्तर्यं गृह्यते, नच तद्विज्ञानमस्ति। ननु रूपमुपलभ्यैव स्पर्शमुपलभते, विपर्ययो वा 'सकृत् सतु धियः।' इति दृशि वा युगपद्रूपस्पर्शोपलम्भद्वयम्। भवतु एवं तावत्, प्रकृतं तु न प्रसिद्ध्यतीति दर्शयति **'केवलम्'** इति पौर्वापर्यात् नियतात् कार्यकारणता यौगपद्यादेककार्यता सिद्ध्येत्, नच अयं नियमः—कार्यकारणयोरेककार्ययोर्वा नियमेन एकदेशत्वं संनिकर्षो वा—इति धर्माधर्मादीनां भस्मधूमादीनां च पूर्वापरसमानक्षणात्मनो विश्वस्य अपिवा कार्यकारणसमानसामग्रीकरूपस्य अपि संनिकृष्टतया दर्शनात्। एतदेवच अस्मद्दर्शन एव उपपद्यते

'प्रत्यक्षानुपलम्भानाम्·········।' (१।७।४)

इत्युक्तयुक्त्येत्याशयेन अभ्युपगममात्रमेतदिति सूचयति **'यदि नाम'** इत्यनेन। अथ हस्तस्य यः स्पर्शः, स न इन्द्रियं स्पर्शग्राहकम्; अपितु

'तद्विज्ञानाश्रयरूपप्रसादाच्चक्षुरादयः।' (अ० को० १।९)

इति आभिधार्मिकनीत्या हस्तस्य यद्रूपं तत् स्पर्शग्राहि, रूपं च चाक्षुषप्रत्यक्षेण उपलभ्यते हस्तस्य च अग्नेश्च; अग्निरूपसन्निकर्षपरिगृहीतहस्तरूपसन्निकृष्टश्च तेनैव हस्तरूपेण स्पर्शनेन्द्रियसंज्ञा-

भाजा स्पर्शाग्निस्पर्श उपलभ्यते इति । एतदपि दूषयति **'तत्परोक्षम्'** इति हस्तरूपं हि यदिन्द्रियीकृतं, तत् न उपलभ्यते इति तस्य अग्निरूपसंनिकृष्टता दुर्ज्ञाना अभ्युपगम्या अध्याहार्यापीति । हस्तरूपं हि चाक्षुषेण ज्ञानेन गम्यमग्निरूपं च, अग्निस्पर्शश्च स्पर्शनेन्द्रियताभिषिक्तहस्तस्वरूपजेन ज्ञानान्तरेणेति द्विग्राहकं न ज्ञानं समर्थितं किंचित् । एवं रूपस्पर्शयोः संनिकर्षमेकाश्रयतां वा ग्रहीतुं न किंचित् संवेदनकुशलमिति उपपाद्य जितकाशितया हस्तस्य नैरन्तर्यमग्निस्पर्शस्येत्येतदपि दुरुपपादमिति दर्शयन् हस्तनैरन्तर्येणैवेति भाषामात्रमेव तव न युक्तमिति दर्शयति **'अथापि'** इति युक्तमपि पक्षमुपगच्छता दुष्टं च त्यजतापि भवता दुरुपपादमिति यावत् । **'अनेन'** इति करणस्य अध्यक्षतामाह । **'नच'** इति तेन रूपस्य करणता स्पर्शं प्रतीत्ययुक्तपक्षत्यागं ब्रूते । **'तेन'** इति हस्तस्पर्शेन इन्द्रियभूमिकामाश्रयता । **'स्पर्शान्तरम्'** इति अग्निस्पर्शः । **'नहि'** इति आन्तरता हि तस्य आत्माभेदेन वर्तमानता,—इति आत्मनि अविदिते कथं विदिता भवेत् । **'ततश्च'** इति ततोऽपीत्यर्थे । तदयमर्थः—प्रत्यक्षमिन्द्रियं स्वपरप्रकाशकमिति तावदत्यन्तमलौकिकम्, ततोऽपितु अङ्गीकृतादग्निस्पर्शो हस्तस्पर्शेन निरन्तर इति सिद्ध्येत्, न हस्तरूपेण निरन्तर इति । **'अथ'** इति लोकप्रतीतिमात्रावलम्बनेन इदमुच्यते । **'एकस्य'** इति हस्तस्य स्पर्शेन संनिकृष्टं रूपमिति अग्नेरपि तथा तज्जातीयत्वात्, किंच एकस्येति हस्तसम्बन्धिनः स्पर्शस्य यत् सन्निकृष्टं हस्तरूपं, तदस्य अपि स्पर्शस्य अग्निसम्बन्धिनः स्पर्शजातीयत्वात् । ततश्च इदं जातमित्याह **'येन'** इति एवंव्यवस्थापनेन । अत्र मूलमेव निकृन्तति **'तत्रापि'** इति । **'तज्ज्ञानयोः'** इति हस्तसम्बन्धिरूपस्पर्शज्ञाने

हि स्वात्मनिष्ठे एव, एवं रूपस्वलक्षणे स्पर्शस्वलक्षणे च देशक्रमेण नैरन्तर्यमान्तरत्वादिना अवधारयितुमशक्यं परमते इति उपपाद्य कालक्रमेण अपि अवधारणमशक्यमित्याह **'यथा च'** इति कालक्रमे च भिन्नाक्षज्ञानविषयत्वं न उपजीवनीयम् । **'तथैव'** इति स्वरूपनियतिस्थितिकत्वेन । **'एकत्र'** इति क्रमो हि ययोर्विचार्यते, तौ कथमेकत्र ज्ञाने भासेयाताम् । **'तत्रापि'** इति विकल्पे **'न'** इति वास्तव इति भावः । ननु एकविकल्पप्रतिभास्यतैव अस्तु क्रम इत्याशङ्क्य आह **'नहि'** इति । एवं प्रसङ्गतो मध्ये कालक्रमं परमते निराकृत्य देशक्रममेव प्रस्तुतं विचारयति **'देवदत्त'** इति। यदिहि कश्चित् ब्रूयात्—भावयोः प्रातिस्विकस्वरूपदर्शनमेव देशकालादिभेदग्रहणमिति तदनेन विहतमोहः क्रियते **'तथात्वेन'** इति वास्तवेन नैरन्तर्येण । **'स एव'** इति य आवृत्तः, अथवा स एव यो दृष्टपूर्वो, नतु अन्य इति शङ्कया द्वितीयता ? नैव निश्चयो देशविशेषेण सह अपेक्षाया अग्रहणे घटमात्रस्यैव उचितत्वात् । **'द्वितीय'** इति द्वितीयस्य यत् किल दर्शनं नक्षत्रस्य, तत् न अपेक्ष्यते नक्षत्रान्तरदर्शने तेन ज्ञानेन। पृथगेवहि स्वे स्वे विषये एकस्यापि ज्ञानस्य प्रामाण्यमिति उक्तम् । अनेन युगपद्ग्रहणेऽपि परमते न कथंचित् समर्थ्योऽयमर्थः इति दर्शितम् । ननु नक्षत्रद्वयनिरन्तरताप्रत्ययो भ्रान्तोऽतिदूरव्यवहितत्वात् नक्षत्राणाम् । अत्र आह **'नैरन्तर्य'** इति विकल्पोऽपि इष्यमाण इति संबन्धः । **'सर्वदैव'** इति मनोराज्यादावपि । ततश्च आभासवस्तुवादोऽयं स्यादिति आशयः । एतदुपसंहरति **'तस्मात्'** इति । **'व्यवस्थितम्'** इति वस्तुस्थित्या देशकालक्रमवदपीत्यर्थः । एवं क्रमचिन्तायां

'क्रमो भेदाश्रय················ ।' (२।१।४)

इत्यत्र य उक्तो न्यायस्तेन उपलक्षिते ये आभाससदसत्त्वे, ताभ्यां साध्यो यः, स न सिध्येत् तयोरेव अनिश्चयात् परमते । यस्मादेवं तयोरनिश्चयस्तस्मात्परस्य नैव सिध्येदिति हिशब्देन आह । '**तस्मात्**' इति प्रवृत्तपूर्वघटाभासाभावोपलक्षितं तादृशं सन्तं पटमपेक्ष्य '**निरन्तरः**' '**पूर्वं**' इति लोकदृशं पदार्थवादिदृशं च आश्रित्य विशेषणद्वयम् । काणाददर्शने हि परत्वापरत्वे दिक्संयोगकार्ये । अग्रेऽपि एवं मन्तव्यं '**भूतता पूर्वता च**' इत्यादौ । क्रमः पौर्वापर्यम्, व्यवधानं सान्तरत्वम्; आदिपदात् दूरत्वादिकम् । इयदेषां घटादीनां प्रमातृशरीरादिकमनपेक्ष्यैव स्वगतमन्योन्याभासाभावमन्योन्यत्र एकप्रमातृस्वतन्त्रप्रकाशविमर्शमहिम्ना उत्थापितमपेक्ष्य भवतीति उक्तम् । '**पौर्वापर्यादि तु**' इति पूर्वमिदं, पश्चादिदं, दक्षिणत इदम्, उत्तरत इदमित्यादि । अपिशब्दादन्योन्याभाससदसत्त्वकृतत्वमपि अनुजानाति घटस्य दक्षिणतः पट इत्यपि व्यवहारात् । एवं देशक्रम एकप्रमातृतत्त्वाधीन इति उपपाद्य कालक्रमोऽपि उपपाद्यते '**काल**' इत्यादिना । '**एवम्**' इति देशवदेव आभाससदसत्त्वापेक्षत्वादित्यर्थः । एवं स्वतन्त्रद्रव्याणां विचार्य, धर्मरूपाणामपि तं क्रमं विचारयति '**रूपरसादीनां च**' इति आदिपदादेकसामग्र्यधीनतैकार्थसमवायित्वाविरोधित्वादि । एवं जडगतत्वेन विचार्य, चेतनगतं विचारयति '**ज्ञानानामपि**' इति रूपरसादीनां च क्रमो बोध्यैरेव साध्यस्तेऽपि च विचार्या इति दर्शयति । ततश्च प्राक् यद्यपि

'एवमन्योन्यभिन्नानाम्……………… ।' (१।३।६)

इत्यत्र प्रकरणे निरूपितम्, तथापि एकप्रघट्टकावस्थितं प्रमेयं कर्तुमत्र स्मारयति '**कदाचित्**' इति युगपज्ज्ञानसत्त्वोपगमपक्षे । '**तस्याः**' इति असत्तायाः '**न स्वयं प्रथा शक्या**' इति ज्ञातुमसत्त्वेति

पूर्वेण सम्बन्धः । **'तत्'** इति तस्मात् रसज्ञानात् । **'सर्वदैव'** इति रसज्ञानसत्तोपगमेऽपि । **'सर्वदैव'** इति सत्यपि रसज्ञाने नास्ति व्यतिरिक्तं रसज्ञानमिति असत्ता अस्य निश्चीयते । **'तत्'** इति रसज्ञानस्यैव यत् स्वरूपेण अभावः, स एव तर्हि अभाव-व्यवस्थाया अभावनिश्चयस्य हेतुस्तदन्वयव्यतिरेकानुवर्तनात् । स च नीलरूपो न प्रथते इति उक्तम् । अत्र परकीयमाशङ्कते **'अथ'** इति । **'तस्य'** इति रसज्ञानस्य । एतत् दूषयति **'तत्'** इति । तस्मात् त्वदुक्तादेव वचनात् हेतोरेतादृक् चेत् रूपज्ञानस्य सामर्थ्यं—यत् रसज्ञानाभावं निश्चाययति, तत् पूर्वोक्तं दूषणम-विघटितमेव । **'प्रदेश'** इति **'नास्ति'** इति संबन्धः । स्वरूप-मात्रनिष्ठितो हि सदा भावः । ननु प्रदेशज्ञानं यथा घटेन सहितं च संमिश्रं च भवति, तथा इहापि भविष्यतीति । एतत् परास्यति **'न तथेह'** इति । अत्र हेतुः **'स्वप्रकाशस्य'** इति । **'स्यात्'** इति तत्र असंमिश्रत्वे रसज्ञानाभावनिश्चयो युज्येतेति आशयः । एतत् निगमयति **'तस्मात्'** इति । ननु केन इन्द्रि-येण रूपरसौ तत्संवेदने वा मेलयेदसौ । आह **'प्रणालिका'** इति न अस्य इन्द्रियाधीनं कर्तव्यसर्वस्वं स्वातन्त्र्यशक्त्यैव तन्नि-र्वाहात्, मायाप्रमातृतापरिग्रहे तु नियतिरस्य विजृम्भमाणा प्रमुखे तावदिन्द्रियोपयोगं करणभावेन आदर्शयति; परतस्तु तदिन्द्रियज्ञानानुप्राणकविमर्शशक्तिविस्फाररूपेण विकल्पशब्दवा-च्येन प्रमातृव्यापाररूपेण भावान् व्यवस्थापयति । तदेतदाह **'स हि'** इति एकः प्रमाता । **'आत्मनि'** इति स्वरूपे । **'व्यतिरिक्त इव'** इति ज्ञानशब्दवाच्ये धर्मरूपे कथं तुल्य-कालतां तयो रूपरसयोर्न व्यवस्थापयेदन्यथाच भिन्नका-लतां कथं न व्यवस्थापयेदिति संबन्धः । भिन्नकालतायां

हेतुः **'अन्यथावभासनात्'** इति । ननु परदर्शने विकल्प एव एवं रचयिष्यति, रूपरसवस्तुस्पृक्त्वं च अस्य न दुःसमर्थम्। अनुभवायन्ते हि विकल्पाः । एतदेव तर्हि प्रकृतमपाकरोतीत्याह **'रूपानुभव एव'** इति आत्मकालमनुभवकालमपेक्ष्य। **'तथा'** इति तदनुभवसमानकालत्वेन अध्यवस्येत् । ननु स्वसंवेदने विकल्पानां पूर्वानुभवापेक्षा काचित्, तत् कथमुक्तं—निजं जीवितमेषां नास्तीति । अत्र आह **'स्वसंविदंश'** इति **'स्वयम्'** इति संवेदनरूपतायां वेद्यधर्मः कालो न उन्मिषति, उन्मिषन्नपिवा रूपरसयोरकिंचित्कर इत्याह **'बहिर्मुखत्वाभावाच्च'** इति स्वसंवेदनं रूपरसविकल्पसंवेदनविकल्पस्य यत्, तदेव करिष्यतीति चेत्, आह स्वसंवेदनपरिपाट्या अपि न तुल्यातुल्यकालादिव्यवस्थापकता युक्ता । नहि तत्रापि स्वसंवेदने कल्पिते रूपरसद्वयविषयमेककमनुभवान्तरमस्ति भिन्नेन्द्रियवेद्यत्वात् तयोः । ननु च स विकल्प एव अनुभवायते । सत्यम्, यत्र अस्य विकल्पता स्वसंवेदनात्मकस्वरूपातिरिक्ते रूपरसांशे, तत्र अनुभवायतामनुभवायैव तु प्रकृतोपरोधिनी । तदेतदाह **'यत्र पुनः'** इति । **'अनेन'** इति विकल्पेन अनयो रूपरसयोर्न कालप्रतीतिसङ्गतिः । साहि अन्योन्यापेक्षणेन भवति। तच्च नास्ति अयोजितयोरेव तयोस्तेन विकल्पेन अवभासनात्। **'स्वानुभवेनेव'** इति साधर्म्यदृष्टान्तः । स्वेन स्वेन अनुभवेन यथा तावयोजितावेव गृह्येताम्, तथैव तदनुसारिणा विकल्पेन अध्यवसायबलादवभास्येते, नतु अन्यथा। **'आसादयेत्'** इति **'नतु'** इति संबन्धः । ननु विकल्पो येन विकल्पान्तरेण विकल्प्यते, तेनैवं करिष्यते रूपरसौ पूर्वं विकल्पितौ यौ तावेककालाविति । नेत्याह **'विकल्पस्य'** इति रूपरसविषयमै-

न्द्रियिकं मौलमेव अनुभवमनुसरति सोऽपि अपरो विकल्पः। ननु विकल्पोऽनेन विकल्प्यते, न अनुभवः; तं कस्मादनुसरति। इत इत्याह **'नच'** इति विकल्पस्य विकल्पनव्यापारं विकल्पयति विकल्पो न स्वसंवेदनम्। एतच्च

'अशक्यसमयो ह्यात्मा................।' (प्र०वा० ३।२४९)

इति वदता परेण उपगतं विकल्पव्यापारश्च परमांशः इति तदनुभवस्य मूलभूतस्य अवश्यमपेक्ष्यम्। ततश्च तत्र यत् नास्ति ललाटे इव तर्जनयत्नसहस्रेषु ? इव तत् विकल्पनसहस्रेषु अपि कुतः। तदाह अनुभवेन अवभासितस्य अर्थस्य रूपादेर्या वृत्तिर्यो वृत्तान्तो निरूपितोऽन्योन्यापेक्षकालभेदशून्यत्वं, तस्यामेव पर्यवसाने विश्रान्तौ सत्यां विकल्पपरम्पराशतेऽपि उदितेऽनुभवादतिरिक्तोऽर्थावभासनव्यापारो नास्ति, अनुभवश्च न एवंकारी,—इति पुनः पुनः स्मारयति **'नच'** इति। ननु त्वत्पक्षपातितोऽपि विकल्पः कथमेवं कुर्यात्। सत्यं कुर्यात्। अस्मन्मते हि असौ प्राणितान्तरमेव प्रतिपन्नः। यदभिनवभारती

'प्रभुपरिचयाद्धर्मं धैर्यं धियं च पराक्रमं
परिजनजनो धत्ते नास्य स्वकं स्फुरितं क्वचित्।
रजनिशरणाः शोच्यत्वं ये तमोभिरशिश्रय-
न्नहरभिसृताः पश्यैते किं भवन्ति मुहूर्तकाः॥'

इति। तदाह **'स्यात् पुनर्'** इति। इदानीमेव भवत्पक्षपातित्वं दूषितं विकल्पस्येति अपिशब्दः। **'अयम्'** इति विकल्पः। **'कालाविभागेन'** इति देशोऽपि अत्र उपलक्षितः। स्वात्मना देशकालास्पृष्टोऽपि मायाप्रमातृभूमिकावतीर्णः स्वात्मनि कालं देशं च अवभासयंस्तेन सह भावस्य तद्देशतां तत्कालतां निर्भासयन्नेव तस्य भावस्य भावान्तरेण सह तामवभासयति,—इति न किञ्चित्

दुःस्थम् । कालावभासं घटयति **'तथाहि'** इति, देशभेदं तु **'देशभेदोऽपि'** इति । **'एकद्रव्यात्मताम्'** इति द्रव्यबुद्धेः सत्यत्वे समर्थितत्वात् । अपिशब्दः सौगतसंमतं सन्निकर्षं सूचयन् परदृशि दूषितं स्वदृशि समर्थयितुमाह **'यः पुनर्'** इति । सन्निकर्षो हि नैरन्तर्यमन्तराभावः । तस्य च इत्थं संवेदनं यदि तस्य अन्तरस्य व्यवधायकस्य उपलम्भलक्षणप्राप्तत्वं भवेत्, नच तदस्तीति तात्पर्यम् । ननु एवं पृथगनुभूतयोर्गृहयोर्यदि देशक्रमो न संचेत्यते, तर्हि तौ क्रमशून्यावेव किं निर्भासेते । सत्यमेवमेव, देशक्रमापेक्षया यो हि क्रमोऽवभासते तत्र, स कालतो, न देशतः । एतं दर्शयति **'पृथक्'** इति । ननु पृथगनुभवे कालक्रमोऽपि कथं भासते तस्यापि परस्परापेक्षाप्राणितत्वमेव ननु, किं सहानुभवे कालक्रमः कश्चित्, तर्हि कथमयमुपपादयितव्यः। इत्थमिति दर्शयति **'विकल्प'** इति विकल्पकाले ये सह भासेते, नच एकरसतया, अपितु स्फुटत्वेन एकमपरं च अस्फुटत्वेन; तयोः पृथगनुभवबलादेव तथाभूते सति आभासभेदे कालक्रम एव भाति, न देशक्रमः । कश्मीरकान्यकुब्जादेस्तु सहानुभवाभावे देशक्रमोऽनुमीयते, नतु प्रत्यक्षः । एतेन तदपि प्रदर्शितपरमार्थं कृतं यदुक्तं **'निरन्तरयोर्घटयोः'** इति । तत्र हि कालक्रमेऽनुभवक्रियापेक्षे प्राङ्निरूपितस्थित्यपेक्षया पश्चात्तनस्तथानुभवापेक्षो विकल्पो देशक्रममनुमापयति यदि स पूर्वो घटोऽपसारितः, अन्यथा पश्चाद्भाविसहानुभवबलेनैव प्रत्यक्षतया विकल्प्यतेऽनयोर्देशक्रमः । अथ यदुक्तं **'नक्षत्रद्वयम्'** इति । तत्र आह **'नक्षत्रयोश्च'** इति विप्रकृष्टत्वेन यावभिमतौ पूर्वपक्षे निरूपितौ, आगमादिना वा तथा संमतौ नक्षत्ररूपावर्थौ; तयोः सहप्रथने सन्निकर्षो नैरन्तर्यं यदवभासते, तत् **'तथैव'** इति सत्यरूपमेव । यदिहि

उपलम्भलक्षणप्राप्तमन्तरं भवेत्, तदुपलभ्येत; नच एवमिति असदेव अन्तरम्, सदपितु पिशाचादिकल्पं; न सान्तरता व्यवहारहेतुः। अत एव आगमेऽपि एवमुच्यते

'अनयोरद्य समागम एकक्षगतत्वम्...... ।'

इत्यादि। एवं स्वदर्शनमुपपाद्य तीव्रं व्यामोहस्थानमिदं मूढानामिति मन्वानः स्वदर्शनपरदर्शनयोर्महदन्तरं भवदपि अनिश्चिन्वानान् परान् प्रत्याययितुं तुलारोहणपौनःपुन्येनैव तयोरन्तरं कर्तुकामः पुनरपि परदर्शनानुपपात्तिं दर्शयति **'अनुभवात्'** इत्यादिना यदि परमिति तौ तथाभूतौ भावावेव द्वौ दृश्यमानौ संनिकृष्टत्वविप्रकृष्टत्ववर्तमानकालत्वं चेतीयतैवोत्तरेणेति मन्यते, नतु अत्रापि परस्परापेक्षा निर्वहतीत्याशयः, कालविशेषस्य वर्तमानतामात्रस्येति मन्तव्यम्, नतु प्राज्ञस्य अव्यवहितस्यापि च प्रतिपत्तुं शक्यो देशकालविशेषावभासो देशभेदे कालभेद इन्द्रियभेदे वा सतीति संबन्धः। ननु इन्द्रियभेद इत्येव अवश्यम्। नेत्याह **'एकेन्द्रिय'** इति। अत्र हेतुः **'अर्वाक्'** इत्यादि। ननु

'विकल्पयन्नप्येकार्थं पुरोऽन्यदपि पश्यति।' (प्र०वा०३।२०७)

इतिन्यायेन घटं च अनुभवेत् पटं च अस्फुटं विकल्पयेदयमेव तयोः कालभेदः। नैवमित्याशङ्कापूर्वकमाह **'यद्यपिच'** इति **'येन'** इति स्वातन्त्र्येण। स्वकालो विकल्पनस्य वर्तमानता स्फुटत्वेन, स्वदर्शने तु नायं दोष इत्यभिमतत्वादनुबध्नाति **'सर्वं'** इत्यादिना। सर्वेषामनुभवज्ञानानां यदान्तरं संवेदनस्वरूपत्वमेकं, तदेव स्वातन्त्र्यादनुभवमयीं तां बहिर्मुखतां परामृशत् स्वरूपस्य अनुभवस्य च एकीभावात् स्वयंकृतमनुभवकृतं च स्वयंकृतमभिमनुते इति वस्तु एव इदं, न अन्यथा। एतदेव घटयति **'सहि'**

इति विकल्पः । '**अन्यथा**' इति अनुभवरूपानपेक्षया । योगी हि न प्राच्यानुभवान्तरसापेक्षप्रतिपत्तिकः । '**ननु**' इति भिन्नत्वेन संवेदनेभ्यः प्राच्येभ्योऽभिमतो यो विकल्पः, स कथं विषयोन्मुखो भवेत् विषयवेदी च । यदेवंभूतं वस्तु उक्तं वक्ष्यते च

'अत एव हेतुभूतादस्य दर्शनस्य पराभ्युपगमाद्विशेषः ।'

तत् वस्तु दर्शयति '**यस्यैव**' इति संवेदनलक्षणस्य आन्तरप्रमातुः । '**अनेक**' इति अनुभवभूमिकापरिग्रहे । '**स एव**' इति विकल्पभूमिकावगाहने । '**नतु**' इति सौगतादिवदित्याशयः । काणादृदृष्टिषु अपि दुःसमर्थमेतत् ज्ञानानामेकरूपत्वाभावे सत्येकसंविद्रूपाश्रयमात्रयोगस्य अकिंचित्करत्वादिति उक्तमेव प्राक् । स्वदर्शनं क्रमेण पूरयति '**स एवच**' इति । '**तथाच**' इति किंचेत्यर्थः । '**अनेकात्मकम्**' इति रूपस्पर्शादिमयम् । बहुतरप्रमेयतरङ्गान्दोलितं सूत्रार्थं स्थिरीकृतत्वेन उन्मीलयति '**एवम्**' इति नतु अन्यथेति यावत् । '**अर्थस्वभावः**' इति एकैकाभासरूप इत्यर्थः । '**एतत् तावत्**' इति । अनेन सूचितं प्रमेयान्तरमपि उपपन्नमधुनेत्याह '**यदपि**' इति '**वस्तु**' इति अनेकाभासात्मकमेकमिति यावत् । '**सैव**' इति दाहकादिरूपैकाग्निप्रतीतिः । '**उभयत्रापि**' इति आभासभेदेषु, तदेकाभासे च । '**ततः**' इति प्रमातुः । '**अतः**' इति यत एवं वस्तुतः प्रमातैव प्रमाणं, तत एष सिद्धान्तो जायते इत्यर्थः । सङ्कोचतः स प्रमाता चाक्षुषप्रमाणरूपतां प्रतिपद्यते इति सङ्गतिः । '**स्वात्मापेक्षया**' इति प्रमातृप्रकाशतादात्म्यवृत्तेराभासस्य ऐक्यापेक्षया । '**एवमेव**' इति तस्य च नाम क्रियमाणं युक्तिरिति समुचितं प्रमाणपरिगृहीताभासभेदयोजनात्मकत्वात् गन्धयुक्तिवत् । अत एव अनेकप्रमातृगताभासभेदयोजनं यथा यथा स्फुटीभवति, तथा तथा

प्राज्ञत्वं प्रकृष्यते, अपरथाच विप्रकृष्यते । एतदपिच भगवत्स्वातन्त्र्यमय्या इच्छाशक्तेरेव विजृम्भितमिति सैव सर्वत्र शरणम् । तदुक्तं

'बुद्धिर्ज्ञानमसंमोह............ ।' (१०।४)

इत्यादि । 'अत्रापि' इति अनन्तरूपरसाद्याभासमिश्रीकरणाभासे । 'एतत्' इति अनेकात्मकैकसाक्षात्कारात्मकं प्रत्यक्षम् । न केवलं साक्षादनुभवयोजनात्मिकैव युक्तिः, यावत् स्मृतिद्वारेण अपि अनुभवयोजनात्मिका सेति दर्शयता विततस्वभाववस्तुव्यवस्थापनमिव विततकालवस्तुव्यवस्थापनमपि इत्थं युज्यते इति दर्श्यते 'शरत्' इत्यादिना । प्रमात्रैव तत्काले एकप्रत्यक्षरूपतां प्रतिपाद्य एवंभूता वितताकारा परिपाटी प्रतीयते इति संबन्धः । परस्य तु एतत् न संभवतीत्याह 'नहि' इति । 'तत्' इति निरन्तरपरिपाट्याभासात्मकं वस्तु सत् । ननु परेण चेदेतदुररीकृतम्, कस्तर्हि स्वपक्षे पक्षपातः । आह 'तच्चैतत्' इति परेण उपगतं यत्, तत् क्रमिकेभ्योऽनुभवेभ्यस्तद्विकल्पेभ्यस्तत्स्मरणाच्च व्यतिरिक्तेन एकसंवेदनात्मना युक्तिवाचोयुक्त्युक्तेन निरूपयितुं शक्यम्, न अन्यथेति । 'एतत्' इति यदेव तदैक्याभासे साक्षात्काररूपे, तत् पुष्पस्वरूपं पुष्पस्मरणात्मकम् । एवं विततकालवस्तुव्यवस्थापनेन मुहूर्तादेर्महाकल्पपर्यन्तस्य आभासस्य वस्तुतां व्यवस्थाप्य विततदेशवस्तुव्यवस्थापनया क्रोशयोजनादेः समस्तकालानलभुवनप्रभृतिसदाशिवान्तभुवनवर्गगतस्य अपि अभेदात्मन आभासस्य सत्यतामवस्थापयति 'सन्निकर्ष' इत्यादिना । अर्थान्तराणामल्पत्वं महत्त्वं च आभासमानं विद्यते ययोरर्थयोः सन्निकृष्टविप्रकृष्टाभिमतयोराभास्यमानयोस्तावाभासेते यस्मिन् ज्ञाने, तेन यथासंख्यं सन्निकर्षेतरौ व्यवस्थापयितुं

शक्यौ । यस्तु मन्यते—वस्तुनी एव ते द्वे सन्निकर्षोऽन्यो वेति, तस्य अन्तरालवर्तिषु वस्त्वन्तरेष्वपि अगृह्यमाणेषु तद्गृह्यमाणवस्तुद्वयमात्रनिष्ठितौ तावपि व्यवस्थापनयोग्यावभविष्यताम् । नच एवम् । तदाह **'नत्वन्तराल'** इति । सर्वत्र च दूरतादिग्रहणेऽन्तरालग्रहणं प्रयोजकं मन्तव्यमिति उपपादयति **'यत्तु'** इति । **'निशीथसमय'** इति यत्र अन्तरालवर्तिनां नदीपर्वतादीनां ग्रहणमसंभाव्यमित्याशयः । सन्निकर्षमादिग्रहणात् विप्रकर्षं, तत्रापिच तारतम्यं व्यवस्थापयतः प्रमातुर्यत् प्रवृत्तौ वैचित्र्यमिह शीघ्रं गन्तव्यं, न गन्तव्यमित्यादि; तत्र अन्तरालस्य न अग्रहणमपितु ग्रहणमेव । तत् दर्शयति **'यतः'** इति । **'द्वयम्'** इति दिग्द्वयादुत्थितम् । **'तस्य'** इति शब्दप्रवाहद्वयस्य । ननु न देशद्वयवर्तितया प्रवाहो गृह्यते, अपितु श्रोत्रशष्कुल्यवच्छिन्न एव नभोदेशे गृह्यते यथा काणादा मन्यन्ते, उत्पत्तिदेश एववा गृह्यते यथा कापिला मन्यन्ते श्रोत्रवृत्तिः शब्दोत्पत्तिदेश एव शब्दसाक्षात्कारात्मना परिणमतीति, नतु उभयत्र ग्रहणम्, नापि अन्तरालग्रहणम् । एतत् दूषयति अनुभवं प्रमाणयन् **'श्रोत्रदेश एवच'** इत्यादिना । **'तदैव'** इति उत्पत्तिकाले । ततश्च कालभेदेन प्रतिपत्तिर्न भवेत्, साच अस्तीत्याह **'न चैवम्'** इति उत्पत्तिदेशस्य दूरत्वे उत्पत्तिकालमतिक्रम्य चिरेण प्रतिपत्तिर्दृष्टा, अतिदूरत्वे चिरतरेण; अत उभयदेशमध्यवर्ती प्रवाहस्वभावोऽसौ शब्दोऽवगम्यते इति उपगम्यम् । योऽपि आह उत्पत्तिदेशे शब्दस्य श्रोत्रेण न ग्रहणम्, अपितु श्रोत्राकाशावकाशाश्रित्या अन्त्यशब्दविशेषणलिङ्गेन अनुमानत इति, तेनापि आनुमानिकं तावदन्तरालग्रहणमुपगतमेव; तेन दिग्विशेषदिग्द्वयागतत्वं शब्दस्य दुर्ज्ञानम् । शब्दस्य हि

विशेषः कामं दूरतादि ज्ञायतां, नतु दिगादिविशेषणं सम्बन्धिग्रहणकाल एव तदपरिज्ञानात् चक्षुषा भेरीदण्डादिसंयोगप्रभृतिकारणावलोकनेऽपि

'नावश्यं कारणानि············ ।'

इति न्यायेऽन्यकारणतासंभावने संशयानिवृत्तेः । नच दिग्विशेषजेन शब्देन जनितस्य अन्त्यशब्दस्य विशेषेण भवितव्यं क्षणिकदृशि इव दक्षिणोत्तरप्राक्पश्चिमदिगागतानां पुरुषाणां पुरो नेत्रपातिनामिति अलमवान्तरेण । सर्वथा तावदुत्पत्तिदेशेऽपि गृह्यते शब्दः, नतु अन्त्य एव मन्दतमः । अतश्च एवं—यदतिदूरादपि गीतमाकर्णयन्नवैति—तारतारं गायतीति, तत् तीव्रता अपि तत्र अन्या गृह्यते । यथातु दूरात् गृह्यमाणोऽन्तरालपतितरजःप्रभृतिभावान्तरावरणवशादस्फुट इति प्रतीयते, तथा स तीव्रनादेन आरभ्यते यस्तीव्रोऽपि मध्यवर्तिरजःस्थानीयसंभाव्यमानवायवीयादिशब्दावरणवशादस्फुटः प्रतीयते; अन्त्य एवतु स्फुटः । अनुभवसाक्षिकं च इदं—यत् निःशब्दायां रजन्यां यत एव दूरात् ध्वनिराकर्ण्यमानः स्पष्टवर्णत्वेन अवभाति, तत एव प्रवृत्तजनसंपातवचसि दिवसधामनि अस्पष्टवर्ण एव नादमात्रतयेति । तदेतदुपसंहरति **'तस्मात्'** इति । **'दृश्यते'** इति प्रमाणोपपन्ना अवलोक्यते इत्यर्थः । ननु किमर्थं शब्दान्तरारम्भणमिष्यते, तदपिच देशान्तरे येन प्रवाहद्वयमित्युक्तम्, तावन्तं कालं स एव शब्दोऽवस्थास्नुरस्तु; आरभमाणो वा तत्रैव आरभताम्; आरम्भे वा कोऽस्य विरामावसरः; सर्वतश्च आरम्भे चतुर्दिकमपि शब्दश्रवणप्रसङ्गः—इत्याशङ्काः शमयति **'अग्रस्थित एव च'** इति । तेन न चतुर्दिकं श्रवणम् । **'अप्रतिहत'** इति वास्वादिप्रतीघातादेव विरमतीति यावत् । **'येन'** इति शब्दान्त-

रजननेन दूरस्थिताः प्रमातारो यावति काले शब्दं शृण्वन्ति, तावन्तमेव कालमुत्पत्तिदेशस्था अपि प्रमातारः शृणुयुर्यदि स्थिरोऽसौ भवेत्, तत्रैववा शब्दान्तरमारभेत । उभयथापि हि असौ तत्रस्थस्तत्रस्थप्रमातृश्रोत्रगम्यतां न अतिवर्तते । नच एवं काष्ठ-परशुसंयोगाद्धि शब्दः स तत्रस्थैस्तदैव श्रूयते, दूरवर्तिभिस्तु पुनः परशोरुद्यमनकाल एव । तेन अन्तरालवर्तिशब्दग्रहणपूर्वकमेव शब्दस्य अपि दूरतादिग्रहणमिति स्थितम् । यत्तु उक्तं शब्दस्पर्शेत्यादि, तत्र तत्प्रवाहातिरिक्तस्य शब्दस्य अप्रतीतिरुक्ता मन्तव्या ॥ ८ ॥

एवं प्रत्याभासं विश्रान्तेन प्रमाणेन भावस्वभावव्यवस्थापनं क्रियते । परस्परस्वभावनियमोऽपि आभासानां तदाभासनियतभिन्नप्रमाणानुप्राणकान्तर्मुखबहिर्मुखतोभयभाजा स्वसंवेदनेन प्रत्याभासं गृहीतग्राहिणा अपि मिश्रणांशे प्रमाणभावभाजा प्रमीयते इत्येवं मानस्यां प्रवृत्तौ प्रमाणोपयोग उक्तः; कायप्रवृत्तौ तु यथा प्रमाणव्यापार उपयोगी, तथा दर्शयितुं सूत्रान्तरं

**सातु देशादिकाध्यक्षान्तरभिन्ने स्वलक्षणे ।**
**तात्कालिकी प्रवृत्तिः स्यादर्थिनोऽप्यनुमानतः ॥ ९ ॥**

तुः पूर्वतो विशेषकः । अर्थक्रियाकारिणामपि विशेषाणां प्रकाशपरामर्शमयचित्स्वरूपविश्रान्त्या यद्यपि विशेषरूपता विशीर्यते एव, तथापि मायाशक्त्या दृढीक्रियते इवेति विशेषसाध्यया अर्थक्रियया योऽर्थी, तस्य या तस्मिन् स्वलक्षणे तत्कालमात्रोपयोगिनी, नतु भावस्वभावव्यवस्थापनवत् कालान्तरेऽपि उपयुज्यमाना वाङ्मनःकायप्रवृत्तिः; सा देशे काले स्वरूपे स्वरूपान्तरानुसन्धानादौ च यानि अध्यक्षान्तराणि बहूनि प्रत्यक्षाणि, तेषां भिन्ने भेदे सति संभाव्यते; न अन्यथा, प्रमाणसमूहादेवच, नतु एकैकतः प्रमाणादिति यावत्, यदिवा देशादिकानि यानि अध्य-

क्षान्तराणि प्रत्यक्षीभूतानि आभासान्तराणि, तैर्भिन्ने स्वलक्षणे सति तन्निमित्ता प्रवृत्तिरिति सङ्गतिः। अत्रापि प्रमेयबहुत्वमुखेन प्रमाणसमूह एव निमित्तत्वेन उक्तो भवति, यदिवा पारमार्थिक-रूपाभिप्रायेणैव योजना। देशादिकेषु अध्यक्षेषु सत्सु आभास-योजनया विशेषरूपतायामपि सत्यां तेषामेव अध्यक्षज्ञानानाम-न्तरिति प्रमातृभूमावभिन्नं यत् स्वलक्षणं, तत्र प्रवृत्तिरिति। न केवलं प्रत्यक्षकृतायां प्रवृत्तावयं क्रमः, अनुमानतोऽपि या प्रवृ-त्तिस्तात्कालिकी, सापि प्रमाणसमूहादेव। तत् यथा—पर्वतग्राहि प्रत्यक्षमग्निग्राहि अनुमानं,शीतापनोदग्राहि अनुमितानुमानं,चौरा-द्युपद्रवविरहग्राहि आप्तवचनमिति। अतः प्रमाणसमूहादेकान्त-मुखस्वसंवेदननिष्ठा प्रवृत्तिरिति सूत्रार्थः। तमवतारयति **'यत्र'** इति। **'पुनः'** इति। तुर्याख्यातः मात्रशब्देन अपिशब्देन च। सर्वथा वस्तुस्वभावव्यवस्थापनं न निषिद्धमित्याह सम्बन्धे यदि कार्यीया प्रवृत्तिः स्यात्, स तर्हि एकेनैव प्रयोजकेन प्रमाणेन गृहीत इति प्रमाणसमूहात् प्रवृत्तिरिति कामं हीयेत; नतु सम्बन्धे प्रवृत्तिः। अत्र हेतुः **'अन्तर्'** इति। प्रवर्तते बहिः, संबन्धश्च अन्तरैक्यम्। यथोक्तं

'...................भावा एकप्रमातरि।

अन्योन्यान्वयरूपैक्ययुजः............।।' (२।२।४)

इति। स्वलक्षणमेव कस्मात् विचित्रामर्थक्रियां करोति। आह **'सामान्यस्य'** इति भास्वरतया हि प्रकाशेत परं, न दहेत् पचेत् वा। यदातु भास्वरता औष्ण्याभासेन मिलति, तदा दाह-पाकादि। तदाह **'यदा पुनः'** इति तेषां स्वभावानामाभासा-त्मनां यदैक्यं, तद्विषयं यत् प्रमाणं योजनाग्राहि; तेन सहभावीनि एकात्मताभाञ्जि अपि न सर्वथैव गलितभेदानि आभासान्तराणि

अपितु कटकतलमिलितविचित्रसन्निवेशोत्थापककनकपृषतकल्पानि प्रवृत्तिं कुर्वते। '**अप्यनुमानतः**' इत्यंशं व्याख्यातुमनुमान-वृत्तान्तं संक्षेपेण तावदाह '**अनुमानं च**' इति शब्दवाच्यत्वं प्रत्याभासमिति कथितमसकृत्। ननु देशायोगव्यवच्छेदाय यदु-क्तमत्रापीति, तत् यदि न दर्श्यते; कोऽनुमानस्य दोषः। न कश्चित्, अप्रमाणं तु तत् भवेदिति निरूपयति '**धूम**' इत्यादिना कार्यस्वभावयोरुदाहरणद्वयम्। '**नापि**' इति प्रत्यक्षेणेति शेषः। '**नियते**' इति देशे तत एव प्रवृत्तियोग्ये। '**तद्बलात्**' इति। तद्देशप्रतिपन्नाग्न्यव्यभिचारिधूमबलात्। '**तत्**' इति या प्रतीति-रेवंभूता, तदनुमानमित्यर्थः। एतदेव परिशोधयति '**नहि**' इति सर्वेषां संभाव्यमानानां प्रत्यक्षाणां सम्बन्धिनो व्यापारस्य यतो न विषयस्ततोऽनुमानेनैव गन्तुं ज्ञातुं शक्योऽर्हश्च। ननु एवं प्रत्यक्षस्य नैव अत्र व्यापारः। मैवमित्याह '**प्रत्यक्ष**' इति धूम-ग्राहिणा प्रत्यक्षेण अत्र आक्षिप्यतेऽग्न्याभासो व्याप्तिग्राहिप्रत्यक्ष-सामान्यादिति तयोरपि अस्ति व्यापारः। सत्यपि तस्मिन् स्वतो निजरूपमहिम्ना यदि सोऽग्न्याभासः स्फुरेत्, न पृथगनुमानं प्रमा-णत्वेन उद्घोषिष्यत, नतु एवं; तेन अनुमानं प्रमाणान्तरम्। ननु तर्हि समूहेन न किंचित् कृत्यम्। कथं न कृत्यमित्याह '**नच**' इति। आदिपदात् व्याप्तिलिङ्गादि। '**यत्र**' इति स्वयमेव निश्च-यस्वभावमनन्यापेक्षमनुमानमिति यत्र गीयते, यत्र च एतद्वक्तुं कश्चिदुद्यच्छेत्—ननु धर्म्यादिग्राहकं प्रत्यक्षादि यत् प्रमाणान्तरं, तदनुमानस्यैव तावत्परिकर इति; तत्रापि यावत् प्रमाणसमूहा-देव प्रवृत्तिः किमङ्ग प्रत्यक्षे इति। तथाहि सम्बन्धमात्रेऽनुमानं प्रमाणमत्र अग्निरिति। नच तत्र प्रवृत्तिरपितु सम्बन्धिनि; तत्रापि देशविशेषादिनियत इत्येवमाभासान्तरविश्रान्तानि प्रत्य-

क्षाणि कथं न प्रवृत्त्यङ्गीभवेयुः । परिकररूपमपि च न तदेव भवितुमर्हति तस्यैव तत्परिकरत्वायोगात् । भिन्नं चेत्, जडमजडं वा; जडं चेत्, प्रमेयमित्यवश्यं तद्ग्राहिप्रमाणान्तरापेक्षा; अजडमपि असंकुचितं चेत्, न अस्य नियतपरिकरता युक्ता; संकुचितं चेत्, प्रमाणान्तररूपमिति विधिनापि अशक्यभङ्गा इयं परमार्थकथा । तेन प्रमाणसमूहमयी एव सर्वत्र युक्तिः प्रवृत्तौ प्रयोजिकेति स्थितमेव । **'अनेक'** इत्यादिना प्रत्यक्षोक्तमेव न्यायं मन्दबुद्धीन् प्रति अनुसन्धत्ते । **'एकतामात्र'** इति आन्तरसम्बद्धरूपे । ननु एवमेकप्रवृत्तिकारित्वादेकमेव तत् किंचित् प्रमाणमस्ति । नेत्याह **'नतु एषाम्'** इति । विषयभेदेन कालभेदमाक्षिपता अवश्यं स्वरूपभेदोऽपि आनेतव्यः । नहि धर्मग्राहकं प्रत्यक्षं लिङ्गजवह्निज्ञानमात्ररूपस्य अनुमानस्य शरीरीभवितुमर्हेदिति समूहादेव प्रवृत्तिरिति युक्तम् ॥ ९ ॥

एवं विमर्शबलादेव भेदाभेदव्यवस्था । संविद्रूपस्य हि भगवतस्तदेव स्वातन्त्र्यमैश्वर्यम् । दूरान्तिकादौ च अर्थभेदो यः परैरुच्यते, स विमर्शबलादेव उपपद्यते; नतु आभासमात्रबलादिति श्लोकद्वयेन आह

> दूरान्तिकतयार्थानां परोक्षाध्यक्षतात्मना ।
> बाह्यान्तरतया दोषैर्व्यञ्जकस्यान्यथापि वा ॥ १० ॥
> भिन्नावभासच्छायानामपि मुख्यावभासतः ।
> एकप्रत्यवमर्शाख्यादेकत्वमनिवारितम् ॥ ११ ॥

प्रतिभासमात्रेण व्यवस्थां कुर्वन् दूरादूरादौ सकलासकलावृतानावृतस्पष्टास्पष्टरक्तकृष्णसंमुखपराङ्मुखादेर्भिन्नप्रतिभासगम्यस्य कथमेकतां भजेत् । ननु विमर्शोऽपि प्रत्याभासं जीवितकल्पो भिन्न एव । सत्यम्, अपरस्तु तत्र यो विमर्शो य एव मया

दूरादसकलो दृष्टः, स एव निकटे सकलो दृश्यते इति एकत्वेन प्रमाणरूपेण आ समन्तात् ख्यानं प्रथनं यस्य पूर्वाभासापेक्षया मुख्यस्य तदेकविमर्शतादात्म्यावस्थितावभासस्य, तमवलम्ब्य भिन्नावभासच्छायानामपि भावानामनिवारितमेकत्वमिति सङ्गतिः। भिन्ना अवभासने प्रकाशने च्छाया, नतु प्रकाशनस्य स्वरूपपरमार्थो विमर्शमयो भिन्नो येषां, ते तथा तेषाम्। '**सर्वदा**' इति सत्यत्वावसरेऽपीत्यर्थः। '**तदेव**' इति आद्याभासरूपम्। '**तस्य च**' इति विमर्शात्मनः फलस्य। '**अत एव**' इति यतः प्रमाणाबाधया न सत्यासत्यभावव्यवस्था, अपितु विमर्शाबाधयैव; ततो हेतोः। '**ते**' इति सौगताः। '**तथात्वम्**' इति नतु तद्ग्रहणमिति हि शपथशरणमेषां, न प्रमाणवृत्तोपनतम्। नच अतिव्यापकमेतदिति ब्रूते '**शुक्तिकायाम्**' इति विमर्शस्तत्र उन्मूल्य एवेति यावत्। उन्मूलनं च या नेत्याभासेन स्ववर्तिना परवर्तिनापिवा तावति प्रमात्रैक्यबलोपनतेन योजना संबोध्यते नेत्याभासस्य योजनीयान्तरोन्मूलनरूपत्वात्। साधारण्ये एव च उन्मूलनं, तत एव सुखादावान्तरे नाबोधोऽसकृदुक्तः। '**अन्यादृशाभासादपि**' इति पूर्वं या मृण्मयताभासमिश्रितादवलोकिता, सा राजतत्वावभासमिश्रितादपि उपलभ्यते तावदाकाशदेशव्यापकजलधारणादिका अर्थक्रिया। '**तस्य**' इति सामान्याभासस्य। '**दूरान्तिकतया**' इति व्याख्याय तत्प्रसङ्गात् '**अन्यथापिवा**' इति व्याख्यातम् '**एवम्**' इत्यादिना। अधुना '**परोक्ष**' इत्यादि व्याचष्टे '**धूमादपि**' इति। '**प्रमात्रन्तरैः**' इति वनेचरैः, सर्वज्ञैर्मश्रेश्वरादिभिः, योगिभिर्भावनाप्रभावोद्भूतपरोक्षसंवेदनैः। एतत् निगमयति '**तत्**' इति तस्मात्। '**बाह्यान्तरतया**' इति

व्याकुरुते '**तथा**' इति । '**पूर्वोक्तनीत्या**' इति

'स नैसर्गिक एवास्ति ..................।' (१।६।१०)

इत्यत्र उक्तया । '**दोषैर्व्यञ्जकस्य**' इति विवृणोति '**सूर्य**' इत्यादिना। रक्तोत्पलं नीलमिति दीपेन दृष्टं यत्, तदेव सूर्यालोकने रक्तमित्येव भाति। '**यथा**' इति येन न्यायप्रकारेण । '**तथा**' इति तेन प्रमाणवृत्तप्रकारेण । '**इदं युज्यते**' इति वृत्तिमधुना सूत्रेण संगमयति '**परोक्षस्य**' इत्यादिना '**अन्यथाशब्दार्थ**' इत्यन्तेन । '**न व्याख्यात**' इति वृत्तौ । नच संक्षेपमात्रमेतत्, अपितु प्रौढिरपि न्यायव्युत्पादिकेति दर्शयति '**अवभासमात्र**' इत्यादिना । '**अधिक उक्त**' इति सूत्रे। अनेन '**दूरान्तिक-तया**' इत्यस्य '**बाह्यान्तरतया**' इत्यस्य च पौनरुक्त्याशङ्का शमिता । '**अत एव**' इति यतो बाह्यान्तरते स्फुटास्फुटत्वं तत्र वृत्तावुक्तं येन सर्वधर्मसंग्रहस्ततो हेतोः । '**न विवृत**' इति वृत्तिकृता। '**तदपि**' इति व्यञ्जकभेदाभेदेऽपि परामर्शैक्यादैक्यमित्येवंभूतस्य तत्त्वतोऽत्र वाक्यार्थस्य परामर्शात् नपुंसकनिर्देशः । नापि सौत्रस्य अन्यथाशब्दस्य अर्थो विवृतः। अत एव हेतोरिति समन्वयः। '**तन्मुख्य**' इत्यादिकां वृत्तिं विवृणुते '**मितिः**' इत्यादिना पूर्वोक्तं वस्तु अनुवदन् । '**आभासस्य**' इति प्रकाशस्य। स्फटिकस्य संविदि यद्रूपमिति वैमल्यम्, तत् नीलादिना; ततो नीलादि तत्र च्छायेति उच्यते । तथैव प्रकाशस्य संविदि स्वसंवेदने यद्रूपं, तत् तेन न अपह्न्यते इति योजना '**संविद्रूपा-नपह्नम्**' इति पाठें। '**आवह्नम्**' इति पाठे तु अयमर्थः— यथा नीलादि स्फटिकस्य च्छाया केवला न संविद्रूपतां स्फटिकस्य आवहति, तथा आभासस्य प्रकाशस्य; विमर्श एव तु अस्य तामावहतीति स एव प्रधानम् ॥ १०,११ ॥

ननु अस्तु दूरादूरादौ स एव अर्थोऽर्थक्रियैक्यात्, बाह्यान्तरत्वे तु तत् नेति कथमैक्यम्। अत्र आह सूत्रेण उत्तरम्

**अर्थक्रियापि सहजा नार्थानामीश्वरेच्छया।**
**नियता सा हि तेनास्या नाक्रियातोऽन्यता भवेत् ॥१२॥**

'**अर्थक्रियापि**' इति सा तावत् स्वरूपं न भवतीति उक्तम्, अस्वरूपभूतापिच न सहजा अनन्यापेक्षा ईश्वरेच्छानियत्यपेक्षणात्। तेन तस्या अकरणात् न अन्यत्वमिति अवस्तुत्वं, वस्त्वन्तरत्वं वा भवितुमर्हतीति सूत्रार्थः। उल्लेखा एव घटादयस्तेषां बाह्यस्य स्वलक्षणस्य या अर्थक्रिया तया विरहेऽपीति वृत्त्यर्थः। '**अन्यथात्वम्**' इति अभावरूपतां घटस्य प्रदेशे कुर्यात् स्वभावोऽसन्, विद्यमानस्तु स्वभावो वस्त्वन्तरतां तस्यैव घटपटापेक्षया कुर्यादिति सम्बन्धः। '**पुरस्तात्**' इति

'यदसत्तदस......................।' (२।४।३)

इति प्रकरणे। '**अस्य आभासभेदे**' इति आभासविशेषे सामान्यरूपे विशेषात्मनि वा। '**अवभासान्तरम्**' इति सामान्यरूपम् ॥ १२ ॥

विमर्शैक्यादैक्यं यदुक्तं वस्तूनां, तत् भ्रान्तिदृष्टान्तभङ्गकारित्वादतिप्रसङ्गावहमाशङ्क्य सूत्रं

**रजतैक्यविमर्शेऽपि शुक्तौ न रजतस्थितिः।**
**उपाधिदेशासंवादाद्द्विचन्द्रेऽपि नभोऽन्यथा ॥ १३ ॥**

रजततया यद्यपि शुक्तिरजतस्य ऐक्यं विमृश्यते, तथापि शुक्तौ यत् रजतमिति भातं मनोविज्ञाने, न तस्य स्थितिः सत्यरजतैक्येन निरूढा। बाह्यता वस्तुता सर्वसाधारण्येन विक्रयादियोग्या न भवति तस्य विमर्शस्य उन्मूल्यमानत्वादुपाधिदेशेऽत्र रजतमितिदेशरूपतया उपरञ्जकस्वभावायां शुक्तावसंवादादुन्मूल-

नात् सत्प्रतिपक्षभूतविमर्शस्थैर्यात् न इदं रूपं रजतमिति । सम्यग्वदनं भासनपरामर्शत्मनात्मकं संवेदनं, तद्विपक्षोऽसंवादः । यथाच मानसे भ्रमे, तथा ऐन्द्रियिकसंमतेऽपि भ्रमे द्विचन्द्रे न स्थितिर्यतश्चन्द्रान्तराक्रान्तो यो नभोदेशो विमृष्टस्तत्र अन्यथाभूतं विमर्शान्तरमुन्मूलकमुदेति—न अस्मिन् नभोदेशे द्वितीयश्चन्द्र इति सूत्रार्थः । **'रजते'** इति सत्यरजते, **'शुक्तौ च'** इति रजतत्वेन अध्यवसितायाम्, **'द्विचन्द्रेऽपि बुद्धिर्मिथ्या'** इति वृत्तियोजना । सूत्रार्थमवतारयति **'तथा'** इति भेदेन यः प्रतिभासस्तदनादरेण, सहार्थे तृतीया । **'तत्'** इति विमर्शैक्यम् । **'कोऽयम्'** इति न अयं सत्यासत्यविषयविभागकारीत्यर्थः । अनया भङ्ग्या समनन्तरप्रमेयशेषभूतमपि सूत्रं प्रधानप्राकरणिकप्रमाणप्रमेयभावोपयोगिप्रमाणलक्षणशेषभूतत्वेन योजितम् । **'उपपादयितुम्'** इति सत्यासत्यत्वे विषयविभागेन अवस्थापयितुम् । **'रजतसामान्यम्'** इति तद्देशकालादित्यागेन रजताभासमात्रम् । ननु क्षेत्रज्ञनिर्मितं चेत्, तत् स्वलक्षणाभासरूपं तथापि कथं ब्रूमः । आह **'नच'** इति । **'तथा'** इति क्षेत्रज्ञनिर्मितया आख्यानमेवच भ्रान्तिरिति वितनिष्यते । **'अस्थैर्यमात्रं च'** इत्यादि पूर्वमेव निर्णीततत्त्वम् । ननु संवादाभावात् कथं भ्रान्ततेत्याशङ्क्य आह **'प्रमाणं हि'** इति अप्रमाणं हि प्रमाणलक्षणविपर्ययेण भवति । भ्रान्तितत्त्वं निरूपयितुं चोद्ये पीठबन्धं करोति **'ननु च'** इति । **'अथापि'** इत्यादिना **'अस्त्येवम्'** इत्यन्तेन ग्रन्थेन असत्ख्यातिमस्थिरख्यातिमसाधारणख्यातिमनर्थक्रियाकारिख्यातिं विपरीतख्यातिं च क्रमेण पर्यवसाय्य **'केवलमसौ'** इत्यादिना तामपि असत्ख्यातौ विश्रमय्य अख्यातिपरमार्थतां निर्वाहयिष्यति **'एतावन्मात्र'**

इत्यादिना । **'विरुद्धम्'** इति प्रकाशमानत्वमेव सत्त्वमिति कथितं **'ज्वाला'** इत्यादि । अत्र वक्तव्यशेषं यदस्ति—ज्वालादि खलु तथाभूतमेवेत्यादि, तत् सुखादिविषयवक्ष्यमाणन्यायसाम्यात् न पृथगुक्तम् । **'तदपि'** इति यदेवंभूतं नियतं रूपं भवता दर्शितम्, तत् कथं केन प्रकारेण प्रमाणस्य एवंविधनियमनिदानस्य अभावात् । तमेव आह **'येहि'** इति । **'तत्र'** इति एवंस्थिते । **'एवम्'** इति असाधारणैकस्वभावम् । **'तत्'** इति रजतादि । बीजकन्दात् कन्दकन्दाच्च कदली एकजातीयैव स्पर्शोपयोगात् स्रंसिनीव हरीतकी नीलोत्पलकन्दं च कन्दजं गोमयजं च एकजातीयमेव । **'अनेन'** इति विमर्शैक्यमेव सर्वत्र प्रतपतीति यावत् । **'अन्यथाभूतमेव'** इति अभिमतार्थक्रियाशून्यं प्रमात्रन्तरासाधारणं च । **'अन्यथा'** इति विपरीतख्यातितां दर्शयितुं यत् प्रयुक्तं, तदेव स्पष्टयति **'विशिष्ट'** इत्यादिना । दृष्टान्तमेव घटयति **'तद्धि'** इति कारणत्वादि । अत्र दृष्टान्तघटनेऽपि वैधर्म्यदृष्टान्तमाह **'यथा'** इति । **'पुनः'** इति अनभ्याससकालापेक्षया भूय इत्यर्थः । **'शुद्धत्वेन'** इति जात्यादिना । ननु यदि कारणत्वादि न अधिकं नीलादिभ्यस्तर्हि पर्यायमात्रता स्यादित्याशङ्क्य आह **'केवलम्'** इति **'उच्यतामेव'** इति आपेक्षिको व्यपदेशो न वस्तुसत्तामन्यथा करोति यथा न इदमस्माकं सुवर्णं सदिति । **'एतत्'** इति प्रथमानस्य प्रमात्रन्तरविषयत्वस्य **'विरुद्धो न प्रथते'** इति पूर्णप्रथाभावादपूर्णख्यातिरूपा इयमख्यातिरेव भ्रान्तिः । यद्यपि सर्वैव संसारकथोत्था भ्रान्तिस्तथापि 'स्वप्ने स्वप्नो गण्डे स्फोट' इति न्यायेन मायापदेऽपि भ्रान्तिव्यवहारोऽयं तावत्यपि समुचितोपयोगिपूर्णप्रख्याविरहात् । ननु स एतद्विरुद्धः किं कदाचित् प्रथते । सत्यमित्याह

**'स्वात्मनि'** इति निश्चितस्तिमिरलक्षण उपघातो नेत्रदोषो यैः। **'नायम्'** इति केशादिः। **'इह पुनर्'** इति भ्रमत्वे। **'एवंविधे वा'** इति आपेक्षिकी विशिष्टधर्मरूपा। एवं व्यतिरेकाभावं विचार्य तदात्म्याभावमपि विचारयति **'घटः पटो न'** इति। ननु कस्मादपरामृष्टस्वातन्त्र्यः क्षेत्रज्ञोऽत्र निर्माता। ननु ईश्वर एव, सोऽपिवा क्षेत्रज्ञः प्रत्यभिज्ञानपरामर्शभावनाभावितस्वातन्त्र्य इत्याशङ्क्य ब्रूते **'प्रमात्रन्तरासाधारणत्वेन'** इति **'परतः'** इति सामानाधिकरण्यप्रयोगानन्तरं न इत्येवमवभासते। **'अत एव'** इति यतः पूर्वं सामानाधिकरण्यात्मा समारोपः, परतश्च शून्यात्मा व्यावर्तनरूपो नञर्थस्तत इत्यर्थः। **'यस्यैवच'** इति **'ऐक्यम्'** इति पटेन सह तस्यैव घटस्य पटे शून्यताख्यो धर्म इति प्रत्यवमर्शबलात्। अत एवहि पदार्थवादिन इतरेतराभावं भावविशेषणं मन्यन्ते। एवमख्यातिरूपत्वे भ्रान्तेः स्थितेऽसत्ख्यातिविपरीतख्यातिनामधेयाधानमपि प्रतिभासप्रत्यवमर्शबलायातम्, तथा परमार्थवस्तुवादेन न सह्यमित्याह **'तदेवम्'** इत्यादि। अख्यातेरेवतु भ्रान्तित्वं भ्रमव्यवहार इति दर्शयति **'वस्तुतस्तु'** इति। आत्मख्यातिरूपत्वं तु न भित्तिभूतमत्रेति दर्शयति **'आत्मख्यातिर्न'** इति न किंचिदधिकमिति केवलं द्विचन्द्रज्ञानादौ स्मृतेरख्यातिर्न स्फुटेति व्यापकमख्यातिरूपमेव वक्तव्यं यत्र स्मृतित्वाख्यातिरपि अन्तर्भवेदितिभावः। महाभ्रमेऽपि अत्र संसारलक्षणेऽख्यातिरेव तत्त्वमिति प्रथयति **'मायावशात्'** इति। **'भेदप्रतीतिः'** इति विधिरूपा। अत्र हेतुः **'भेदस्य'** इति प्रकाशमानस्य अनाद्यन्तप्रकाशपरमार्थत्वात्। यत् नरेश्वरविवेकः

'इदं नीलमितीहापि नामरूपे प्रथात्मके ।
न हेये अनयोर्हेया त्वहंभावाप्रथैव सा ॥'

इति । न केवलमत्र समस्तसंसारिप्रमातृसाधारण्यां महाभ्रान्तावख्यातिः परमार्थः, यावत्प्रतिप्रमातृनियतायामपि प्रमातृविकल्परूपायां महाभ्रान्तौ सैव तत्त्वमिति दर्शयति '**माया**' इति । मायाप्रमातुर्व्यापारो यो विकल्पो—मम इदं सुखसाधनमित्यादिः, स रूपं यस्या भ्रान्तेः संसारसंमतायाः, सापि सर्वैव समस्तेषु प्रमातृषु प्रत्येकं भेदेन वर्तमाना अद्वयाख्यातिरूपेति पूर्वेण संबन्धः; नतु अपूर्वस्य अर्थस्य या ख्यातिर्विविध्ररूपः प्रकाशस्तद्रूपाप्रकाशनं भ्रान्तिः । ननु केन सह तत्र अद्वयस्य अख्यातिः । आह '**निरवभास**' इति अपूर्वावभासनशून्यः सदाप्रकाशनवपुर्घटाद्यवभासविशेषनिष्क्रमणावधिभूतश्च शुद्धो देहाद्युपाधिसंकोचशून्यश्चिद्रूपः परमार्थप्रमाता, ततो व्यतिरेकशून्यो यः स इति मायाप्रमाता; तद्व्यापाररूपतैव प्रकृतः स्वभावो यस्या विकल्परूपाया भ्रान्तेस्तेन संसारिप्रमातुः परमार्थप्रमात्रपेक्षया यद्द्वयं न प्रकाशते, ततो विकल्पव्यापारः पाशवसृष्टिस्वभावत्वेन भ्रम इति उच्यते, अन्यथा तु परमार्थतैव तत्रेति तात्पर्यम् । विकल्पो हि ऐश्वर्यप्रवेशे ऋजुर्मार्गः । यत् ममैव

'जलात् स्फूर्जज्ज्वालाजटिलवडवावह्निनिवहः
सुधादाम्नः पूर्णादिभरदनदम्भोलिदलना ।
विकल्पादैश्वर्यप्रसरसरणेः संसृतिदरः
कियच्चित्रं चित्रं हतविधिविघातात् प्रसरति ॥'

इति । '**वक्ष्यते**' इति आगमाधिकारे, संग्रहे च । एवं प्रसङ्गात् महाभ्रान्तिवृत्तान्तं वितत्य प्रकृतमेव रजतादिभ्रममुद्दिश्य विचारयति '**अभाव**' इति । प्रमात्रन्तरसाधारणत्वाभावस्य

यद्वाख्यानं तन्महिम्नैव असत्तावैपरीत्यव्यपदेशौ युक्तावन्वयव्यतिरेकाभ्यामिति दर्शयता येन अन्यथेति व्यतिरेक उक्तस्तं समर्थयितुमुदाहरणं हेतुगर्भतया दर्शयति **'केशादेः'** इति। तैमिरिकमात्मानं यो मन्यते, तं प्रति केशादेर्न असत्त्वेन, नापि विपरीतत्वेन व्यपदेशः। तेन हि प्रमात्रन्तरं प्रति न विषयोऽयमिति निश्चितम्। तत् केशादि। **'हि'** इति यस्मादेवं, तस्मात् युक्तो व्यतिरेकः। उदाहरणेऽपि दृष्टान्तमाह **'ऐन्द्रजालिकम्'** इति इन्द्रजालेन मायोपाधिमन्त्रलाघवशम्बरादिना चरति यस्तं प्रति यथा अलीकरूपाणां मणिप्रभृतीनामाभासपरमार्थानां तथैव सतां न असत्त्वं, नापि विपर्ययः कश्चित्; तेन असत्त्वविपर्ययव्यवहारस्य व्यापिका अख्यातिरेवेति तद्व्यापकाभावे तस्य अभाव इति निर्णयः। **'अत एव'** इति प्रमात्रन्तरविषयत्वाभावस्य अख्यातिरेव यतो भ्रान्तिता, ततो भ्रान्तिनिवृत्तस्य ख्यातिरिति भावः। **'केवल'** इति रजतस्य यः शून्यताख्यो धर्मस्तद्विशिष्टायाः शुक्तिकाया यत् प्रथनमेतदेव पूर्वमेव प्रमात्रन्तराणामविषयोऽयमित्यस्य रूपस्य प्रथनम्। **'द्विचन्द्रस्य च'** इति विषयत्वाभावप्रथेति सम्बन्धः। **'उक्तम्'** इति पूर्वव्याख्यातस्य वृत्तिवाक्यस्य पुनरावर्तनात् भूतप्रत्ययः। तत्प्रसङ्गपतितत्वाच्च **'नभोदेश'** इति वृत्तिवाक्यमपि उक्तमित्येव उक्तम्। ननु किमत्र शुक्त्याकाशदेशादेस्तच्छून्यत्वाविशिष्टत्वप्रथनेन, रजतस्यैव अभावप्रथा कस्मात् न उच्येतेत्याशङ्काविघटनं हेतुं **'तच्छून्यत'** इत्याह। **'तत एव'** इति शुक्त्यादेस्तच्छून्यत्वेन प्रथनात्, नतु रजतस्य अभावरूपतया प्रथनात्। तदेव हि स्वातन्त्र्येण उपपद्यते रजताभासमात्रस्य अन्यदेशादिविशिष्टरजताभासमात्रतातादात्म्यप्रतिपन्नस्य अभावायोगात्। एतदेव दर्शयति **'रजतादेः पुनः'** इति ॥ १३ ॥

इयता आभासानामेव वस्तुत्वं दर्शयता आगमसिद्धान्येव तत्त्वानि वस्तूनीति दर्शितम् । तथाहि काठिन्याभासः पृथिवी, लौहित्याभासो रूपं, नियतरूपो भावावभासः सन्निवेश; इहेति देशात्मा, अधुनेति कालाभासो, रजोगुणो मेलनाभासो, यावच्छिवरूपता प्रकाशमानताभास इति घटे एव यथा भेदाभेददृष्टिस्तथा पारमेश्वरे प्रकाश इति व्यवहारोऽपि अयं भगवदनुगृहीतानां परमार्थप्रवेशे प्रत्युत अभ्युपायः, नतु विरोधी । तथाच परमेश्वरायत्तैव भेदाभेदात्मकसमस्तप्रमेयसिद्धिः सूत्रेण उच्यते

**गुणैः शब्दादिभिर्भेदो जात्यादिभिरभिन्नता ।**
**भावानामित्थमेकत्र प्रमातर्युपपद्यते ॥ १४ ॥**

अनुवृत्तव्यावृत्तात्मना चकासत्सु भावेषु पुनरुन्मज्जननिरोधकस्य परमार्थबाधकस्य क्वापि भागेऽसंभवादुभेऽपि अनुवृत्तिव्यावृत्ती संवेदनस्वातन्त्र्यात् निर्भासमाने न उपालम्भमर्हतः । किंच अभेदपरमार्थं क्रियासंबन्धादि यथा सति एव प्रमातरि प्रतिसन्धातरि युक्तम्, तथा भेदोऽपि तद्भेदावधिप्रतिसन्धानक्षमे भगवति एव सति युक्तस्तत एव प्रमाणलक्षणे प्रमातृप्रधानतासूचकं स्वग्रहणमिति प्रमाणलक्षणस्यैव अयमियान्परीक्षाक्रम इति सूत्रार्थः। **न केवलम्**' इत्यादिना एतत् तावत् सिद्धं किमत्र उच्यते, इदं तु अद्भुतमपि अङ्गीकर्तव्यमिति तात्पर्यं ब्रुवाणं द्वितीयं पादं दृष्टान्तत्वेन व्याचष्टे प्रसिद्धत्वादस्य अर्थस्य । चो हेतौ । एकानेकविषयतायां प्रमात्रैक्याक्षेपकत्वं न केवलं यावत् भेदकैकरूपत्वेऽपि,—इति स्पष्टे तु व्याख्याने गुणानामपि एकानेकविषयतेति संबन्धनीयं स्यात्, नच तथा युक्तम् । भेदकैकरूपत्वं हि तथा तेषां न स्यादिति पूर्वैव गमनिका अत्र युक्ता । ननु जातिरपि

भेदिका भवतीत्याशङ्क्य आह **'तथापि'** इति **'गौर्गौः'** इति गोत्वस्य वपुः। **'स्वगुणकृत एव'** इति गोत्वाश्वत्वयोर्यो निजः कश्चित् धर्मः पवित्रतालक्ष्मीसंपत्त्याविर्भावकत्वादिराश्रितोऽस्तित्वमेयत्वादिसब्रह्मचारी तद्व्यतिरेकार्थसमवायी वा, तेन कृतो भेदः। **'तदा च'** इति भिद्यमानतायाम्। ननु शुक्लगुणो हंसहिमसुधादिषु अनुवर्तते। नैवमित्याह **'शुक्लत्वेनापि च'** इति। **'समानम्'** इति गुणानां जात्यादीनां च नियतमेव भेदकत्वमभेदकत्वं च क्रमेणेति यावत्। शब्दादिभिरेव च विशेषणभावेन अवस्थितैर्योगिसर्वज्ञादीनां परमाण्वादिषु व्यावृत्तप्रत्ययसिद्धिरिति किमन्यैरन्त्यैर्विशेषैरिति आकृतिशब्दवाच्यतया जातित्वमाशङ्कितं निराकृत्य संस्थानस्य गुणत्वमेव विधीयते। अन्यैरपि एतदङ्गीकृतमिति दर्शयति **'परमाणु'** इति। परमाणुपरिमाणं हि पारिमाण्डल्यमिति तैर्व्यपदिष्टं, तच्च वर्तुलत्वात्मकसंस्थानमेव। आदिग्रहणात् द्व्यणुकपरिमाणं दीर्घरूपम्। त्र्यणुकपरिमाणादीनां तु विशिष्टदिगवयवसंयोगसचिवानां त्र्यश्रचतुरश्रादिरूपत्वमतिस्फुटमेवेति संस्थानगुण एव। ननु चक्षुरादिगोचरोऽर्थो गुण इत्येव उक्तम्। स च भेदैकस्वभाव इत्यपि दर्शितं तदानीम्। अधरोर्ध्वादिदिग्व्यवस्था, एकोऽयं घट इत्यवयवी, घटो घट इति जातिः, चैत्रश्चैत्र इत्यवस्थातेत्येवमादि चाक्षुषं च अभेदसारं च कथं स्यात्। अत्र आह **'एतावदेव'** इति रूपादिषट्कम्। **'तन्मुखेन तु'** इति रूपादय एव हि सूक्ष्मतया क्षुभिततया च एकाकितया मिश्रतया च वर्तमानास्तन्मात्रमहाभूतरूपतत्त्वात्मानः। तेषामेव तु आभासान्तरव्यामिश्रणाकृतमेतत् दिगादीति मायाभूमौ भेदकरूपमेव इन्द्रियज्ञानेन मायाप्रमात्रुचितेन विकल्पात्मना ग्राह्यप्रधानं तन्मुखं, न तु अभेदकरूपोन्मेषः।

ननु एवमविकल्परूपायां भुवि का वार्ता । आह **'प्रथम'** इति । **'न तत्'** इति । सा हि श्रीसदाशिवावस्था न व्यवहारपदम् । **'परतः'** इति अहन्तान्तर्लीनीभवनोचितासाङ्केतिकेदन्तावभासानन्तरं मायाप्रमातरि अभिव्यक्ते । ननु यदि शुक्ल इत्यनेन जातिपर्यन्ततामवाप्नुवता भेद एव आक्षिप्यते साक्षात्, तर्हि गोत्वस्य अपि एवमुच्यताम् । न शक्यं तस्य एवं वक्तुमित्याह **'नत्वेवम्'** इति । तस्य हि जीवितमनुवर्तमानतैव । ननु गोत्वस्य इदं रूपं यत् सास्नाद्यवयवसन्निवेशः । एवं तर्हि न तत् सामान्यं भवेत्, अपितु गुण एव । स च भेदक एव, अभेदकता तु जातिपर्यन्ततयेति यदुक्तं; तद्भेदमवतिष्ठते । तदाह **'अवशिष्यमाणमपि'** इति । ननु आक्षेपोऽनुभूयते, न भेदाभेदौ तौ; दुर्बलेन च प्रमात्रैक्यं कल्पनीयम् । तथाहि भेदावधिमभेदयोग्यं प्रमाता एकः स्वविश्रान्ततया प्रथयतीति । अत्र आह **'भेदाभेदावपि'** इति । न केवलमवधिभूतभेदस्य अभेदस्य च विषयमाक्षिपन् प्रमाता उपयुज्यते तत्र यावत् स्वरूपमपि तयोरुपपादयन्निति दर्शयति **'प्रमातैव'** इति । ननु देशकालभेदादेव स्वालक्षण्यं नाम भेदः । तत्र किं प्रमात्रा कर्तव्यम् । अत्र उच्यते **'अवभासभेद'** इति । तेन हि विना देशकालभेद एव कुतः, अवभासभेदश्च प्रमात्रायत्त इति क्रमविचारे चर्चितचरमेतत् । तत इदमायातम्—यदुक्तं प्रमातैव देशकालभेदमपि रचयतीति । ननु एवमवभासभेद एव भेदक इति शब्दादयो भेदका इति व्याहन्यते । नेत्याह **'स च'** इति अवभासनभेदो हि अवभासमानावभास्यमानरूपेषु वेद्येषु शब्दादिषु एव भाति । तत एव **'पञ्चार्थतत्त्वमेव वेद्यम्'** इति आगमः । ननु एवं शब्दादेर्भेदकत्वेन गुणत्वे जातिर्नाम का अन्या स्यात्, न

अन्या; अपितु त एव शब्दाद्याभासा देशकालाभासानालिङ्गितात्मानो जातिः। तत्र च आभाससारत्वात् व्यक्तिसर्वगततावादेऽपि

'नायाति नच तत्रासीत्............।'

इत्यादिदूषणानामवकाशो नास्ति तत्रेत्यादेर्वस्तुतः कस्यचिदभावात्। सर्वसर्वगततावादेऽपि सर्वज्ञभ्रमनिषेधारोपादिभूमिषु सार्वात्म्यावभासादङ्गीक्रियमाणे नियतिशक्तेः प्रमातृदेशकालदशावैचित्र्यनियमौचित्येन नियामकत्वात् न सर्वः सर्वात्मक्रियाकारी स्यादित्यादिदूषणाशङ्कार्थम्। तदाह **'तस्यैवच'** इति। ननु एवं यतो व्यावृत्तिर्यत्र च अनुवृत्तिस्तदपि इन्द्रियेण निर्भास्यताम्, किं तत्र प्रमात्रैक्येन कृत्यमित्याशङ्क्य आह **'आक्षेपार्थस्तु'** इति। नहि सर्वो व्यक्तिग्रामस्तत्र अवभाति यावतो भिन्नं तत् यावति अनुवृत्तं च। तथावभासने हि क आक्षेपार्थः। स च इह अस्तीति दर्शयति **'स्फुट'** इति। **'अत एव'** इति यतः स्फुटमवभासनं नास्त्यलक्षणं, भवति च भासनं; तत इत्यर्थः। **'अपिशब्द'** इति वृत्तौ। **'विरोधच्छायाम्'** इति स्वातन्त्र्यसूचनायेति आशयः। नच परमार्थतो विरोध इति च्छायापदम्। **'अतिशयोक्तिं च'** इति

'क्रियासम्बन्ध..............................।' (२।२।१)

इत्यादिना क्रमेण प्रमाता सिद्ध्यतीत्ययमर्थो नैव साध्यः, अपितु सिद्ध एव। किमत्र तेनेति अतिशयोक्तिरव्यामोहस्थानेऽपि जनस्य व्यामोहस्थानतामाह। दुःसाधोऽयमर्थस्ततोऽत्र कथमुत्सोढव्यमिति मन्दोत्साहत्वविहरणाय शिष्याश्वासनमतिशयोक्तिफलम्। तदाह **'अवश्योपयन्तव्यता'** इति। अनेनैव आशयेन वृत्तौ भेदव्यवस्थैव उपसंहृता, विवृतौ च तत्प्रधानत्वेनैव अवतारणं कृतम्॥ १४॥

ननु एवं भेदाभेदरूपसमस्तप्रमेयनिःशङ्कविश्रमस्थानं प्रमातेति तत्रैव प्रमाणमुपन्यसनीयम्, न प्रमेये। यदाह 'प्रधाने हि यत्नः फलवान्' इति। तदेतदाशङ्क्य शास्त्रप्रारम्भोक्तमेव आदिसिद्धत्वं ज्ञाते प्रमाणस्वरूपे स्फुटमधुना वर्तते। एवंभूतं हि प्रमाणं, तत् कथं परमार्थप्रमातरि क्रमते इति। तत् दर्शयति श्लोकद्वयेन

विश्ववैचित्र्यचित्रस्य समभित्तितलोपमे।
विरुद्धाभावसंस्पर्शे परमार्थसतीश्वरे ॥ १५ ॥
प्रमातरि पुराणे तु सर्वदाभातविग्रहे।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि ॥ १६ ॥

संकुचितप्रमातृलग्नः प्रमेयोन्मुखो नवनव आभासः प्रमाणमिति उक्तम्। तत् प्रकाशनमात्रस्वभावे पूर्वसिद्धे कथम्। तथाहि तस्मिन् सति यत् तस्य देहादिसंकोचावभासि रूपं, तल्लग्नां प्रमेयस्य सिद्धिमादधत् प्रमाणम्। प्रमातुश्च किंलग्ना सिद्धिः। विश्वलक्षणं हि वैचित्र्यं तत्र प्रमातरि चित्रमिव समभित्तितले विश्रान्तं सत् प्रकाशते भित्तिप्रकाशमन्तरेण सिन्दूरहरितालादिप्रकाशचित्रप्रकाशासंभवात्। एकत्र हि निम्नोन्नतादिरहिते भित्तितले रेखोपकल्पितनिम्नोन्नतादिविभागजुषि निम्नमध्या पृथुनितम्बा उन्नतकुचकलशा इयमिति चित्रावभासः। एवं प्रकाशभित्तावेव सततप्रकाशमानतायां तल्लग्नत्वेन भेदाभेदात्मकविश्ववैचित्र्यप्रतिभास इति। सा तावदनपायिस्वप्रकाशसदातनरूपेति किं तत्र प्रमाणेन अभिनवाभासात्मना। नच वाच्यं—पूर्वमस्य प्रकाशो न भवति, सति प्रमाणे भवतीति; तर्हि स एव न भवतीति स्यात्। प्रकाश एव हि अस्य रूपम्। नच स एव न भवतीति युक्तं परमार्थसत्त्वादैश्वर्याच्च। तथाहि स एव तत्त्वतो भवति, न अन्यत्; अन्यत्तु तत्स्वातन्त्र्यरूपं संभ-

वति । तदस्य भवनस्वभावस्य अभवनेन कथं संस्पर्शो विरोधात् । स्यादेतत्—ऐश्वर्यमस्य अप्रकाशितं प्रमाणेन प्रकाश्यते, तदपि न । यदिहि असौ प्रमाता न भासते, क एवमुद्यच्छेत् ; भाति चेत् प्रमातृतया, सैव तर्हि ऐश्वर्यमिति सर्वदाभात एव तदीयो विग्रहो विविधग्रहणरूपमसाधारणं स्वरूपम् । अभावानुप्रवेशेन च व्याप्तः कालव्यवहारोऽभावास्पृष्टे व्यापकानुपलम्भात् नास्तीति पुराणोऽसौ । तत्र एवंभूते किं प्रमाणं कुतः प्रयोजनात् प्रमाणं, निरुपयोगमेव एतदिति यावत् । नच वाच्यं—प्रत्यक्षादि व्यतिरिक्तं किंचित् भविष्यतीति । सर्वस्य हि प्रमाणस्य नवाभासतैव रूपं प्रमितिकारित्वेन । सर्वाश्च प्रमितयस्तत्र प्रमातरि विश्राम्यन्ति । ततस्तस्मिन् प्रमित्सिते तत्प्रमितिः कुत्र अन्यत्र विश्राम्येत् जडेऽजडे वेति आदिसिद्धसूत्रोक्तमेव अनुसन्धेयमिति । उक्तं यत् मयैव

यत् प्रमेयीकृतोऽस्मीति सर्वोऽप्यात्मनि लज्जते ।
कथं प्रमेयीकरणं सहतां तन्महेश्वरः ॥

इति संक्षेपेण सूत्रार्थः । ननु प्रमाणविशेषानभिधाय वक्तव्यं किं प्रमाणमिति तत्र ते कस्मात् न सूत्रे लक्षिता इत्याशङ्काशमनपुरःसरं सूत्रमवतारयति '**एवम्**' इत्यादिना । '**तथा**' इति प्रमाणतया । '**अत्र**' इति संख्यायाम् । '**प्रमातृविशेषम्**' इति

'........................मातुरर्थक्रियार्थिनः ।'
'भेदाभेदवतार्थेन........................ ।' (२।२।७)

इति

'यथारुचि........................।' (२।३।३)

इति

'तात्कालिकी प्रवृत्तिः स्यादर्थिनः..........।' (२।३।९)

त्यादिना मायाप्रमातारं प्रतिपाद्येत्यर्थः। सामान्यरूपमाभासात्मकमेव वस्त्विति तत्त्वमिति उपपादितम्

'एकाभिधानविषये………………।' (२।३।२)

इत्यादिना परिशिष्टेन भेदाभेदमयत्वम्। ननु

'निष्प्रपञ्चो निराभास……………।' (मा०वि०२।४२)

इति आगमस्तत् कथमात्थ वृत्तौ **'नित्यावभासिनः'** इति। अत्र आह **'प्रकाशमात्रम्'** इति आगमे तु आकारेण ईषदर्थवाचिना प्रमेयताधर्म आभासशब्देन उक्त इति यावत्। **'शेष'** इति अन्यथातु नियमात् तृतीयैव स्यात्। अर्थावभासो हि धर्मत्वेन उच्यते, नतु स्वरूपावभास इत्याशयः। तं दर्शयति **'नित्यावभासिनः स्वाभास'** इति। **'अनन्तरम्'** इति अप्रवर्तितसूत्रे (२।३।१७)। **'प्राक्'** इति आदिसिद्धसूत्रे। **'प्राक्'** इति बाह्यार्थवासनादिदूषणावसरे। **'अत्र'** इति वैचित्र्ये उपपत्तिः कारणं **'तदिच्छातः'** इत्यनेन शब्देन वृत्तावुक्ता। ननु **'मायाशक्तिवशात्'** इति समनन्तरग्रन्थः कथम्। आह **'इच्छाविशेष'** इति एकरसाकारोऽनुपपद्यमानोऽपि यया अतिदुर्घटकारिण्या भेद उपपद्यते, सा इच्छा मायाशक्तिसृष्टेति। यथाहि भित्तिरेव वर्तुलत्वेन निर्भासमाना स्तनो नाम तनुरेखावशात्, तथा प्रकाश एव पृथुबुध्नादितया प्रकाशमानो घटः। सा तु अनधिका अपि प्रकाशतो मायाशक्तिवशादधिकेव अवभाति। **'परमार्थसति'** इति विवृणुते **'प्रथैकवपुष'** इत्यादिना। **'येषां तु'** इति नीलादीनां जडाभिमतानाम्। यथोक्तम्

'एवमात्मन्यसत्कल्पा…………।' (अ०प्र०सि०१३)

इत्यादि। **'कालोत्तरे वा'** इति आगमभाषया स्वमतं संवादयति। मूर्तिवैचित्र्यमन्योन्याभावप्राणितम्, तच्च दिग्देशोत्थाप-

कम् । अन्योन्याभावश्च अपोहरूपो न संभवति भगवतीति उक्तम्

'अहंप्रत्यवमर्शे······················ ।' (१।६।१)

इत्यादिना प्रकरणेनेति दर्शयति **'प्रथामात्र'** इत्यादिना अन्योन्याभावप्राणितं मूर्तिवैचित्र्यं देशभेदमुत्थापयतीति । यदत्र ग्रन्थे प्रथामात्रेत्यादौ गम्यमानत्वेन स्थितं, तत् परकीयमतनिराकरणे हेतुत्वेन उपजीवति **'अत एव'** इति ज्ञानानि स्वप्रकाशैकरूपाणि, ज्ञानान्तरवेद्यत्वं च एषां विरुद्धम् । तानि च बहूनि,— इति ये मन्यन्ते बाह्यमर्थमवयविनं च परमाणुरूपं च इच्छन्ति, तेषां मते नीलादिरूपाण्येव ज्ञानानि स्वपरसन्तानगामितया युगपदवस्थितानि परस्परस्वरूपपरिहारेणेति स्वरूपलक्षणेन देशेन भिन्नानि, ततश्च मूर्तिमन्ति । ततः किमिति चेत्, आह **'इति'** इति । अतो मूर्तिमत्त्वात् हेतोर्बाह्यपरमाणूनां यथा षट्कयोगादसत्तैव आपतति, तथा तेषामपि । विततो हि अर्थो यदि न एकस्तत् विततं ज्ञानमपि कथमेकं स्यात् दिग्भागभेदविरोधस्य तदवस्थत्वात् । ततोऽनेकज्ञानसंचय एव विततज्ञानम् । स च अनेकः । बहूनि च ज्ञानानि प्रत्येकं स्वसंवेदनविश्रान्तानि,— इति विततप्रतिभासायोगात् देशभेदो न कश्चित् यो विरोधमापादयेदिति चेत्, कालभेदोऽपि कोऽन्यो यो विरोधावहो भवेदिति ज्ञानबाह्यत्वं कुतः । **'नच'** इति बाह्यार्थाभावात् । ननु अस्तु असौ बाह्यः, तर्हि व्यवधायकतयैव अवश्यं व्यवधेयमध्यपतितस्तेन व्यवधातव्येन सम्पर्कमागच्छेदिति तत्संपर्कात् सांशतेति । अथवा **'ज्ञानानाम्'** इत्यादिना **'प्रसङ्ग एव'** इत्यन्तेन ग्रन्थेन दूषिते ज्ञानबहुत्वे गम्यमानतया यदापतितं संवित्तत्त्वस्य ऐक्यमिति, तत्र कालदिग्देशोत्तरत्वं पूर्वोक्तं हेतुत्वेन

उपजीवितम् । '**अत एव**' इति स्वरूपदेशकालभेदाभावादेकमेव चित्तत्त्वमवतिष्ठते इति यावत् । प्रकृतं प्रमेयमुपसंहरति '**तदेवम्**' इति । '**प्रतिपद्यते**' इति कर्मणि । '**तम्**' इति सत्यप्रमातारम् । '**प्रमातैव**' इति अनुज्झितकर्तृभाव एवेत्यर्थः । अन्यथाहि स न प्रतिपन्नो भवेत्, प्रतिपादितो वा । तदुक्तं

'ज्ञातासि कर्तासि सदैव सिद्धः कर्मापि सत्कर्तृतयैव भासि ।'

इति । कर्मता तर्हि कथमिति चेत्, पूर्वोक्तं स्मारयति '**पूर्वमेव**' इत्यादिना । '**प्रमाणादिना**' इति गुरुशिष्यादिरूपेण । '**सत्य**' इति उक्तं यतो

'यद्यप्यर्थस्थितिः..................।' (अ०प्र०सि०२०)

इत्यादि । एतत् सर्वप्रमितिभाक्त्वमुपसंहरति '**ततश्च**' इति चिद्रूपे सत्यप्रमातरि भगवति महेश्वरे, नीलादौ जडरूपे शून्यादौ च प्रमात्रीकारादजडीकृते जडाजडरूपे विविधे प्रमेये प्रमीयमाणे या प्रमा, तद्भित्तिभागेन मुख्यस्य संविद्रूपस्य प्रमातुरव्यभिचारः सर्वथाप्रकाशमानत्वात् ॥ १६ ॥

यदि न सर्वात्मना भगवति प्रमाणस्य उपपत्त्युपयोगौ, किं तर्हि शास्त्रेणेति शङ्काशान्त्यै सूत्रम्

**अप्रवर्तितपूर्वोऽत्र केवलं मूढतावशात् ।**
**शक्तिप्रकाशेनेशादिव्यवहारः प्रवर्त्यते ॥ १७ ॥**

अत्र वृत्तिविवृत्यर्थः स्पष्टीकृतः

'किन्तु मोहवशात्..................।' (१।१।३)

इत्यत्र, योजनामात्रं तु क्रियते । '**कृती भवति**' इति घट्टसाध्यं प्राप्य न क्लिश्यते इति यावत् । '**सर्वजनात्मनि**' इति एकस्मिन्नेवेति भावः । '**यथा**' इति येन प्रसाधनप्रकारेण । '**स**' इति संसारिजनात्मा । '**तथा**' इति ईश्वररूपतया प्रकाशमानः

सास्नादिमत्तानिबन्धनोऽयं गौरिति व्यवहारो वामनतासहभावी-त्येवमाकारो यो मोहस्ततः । दार्ष्टान्तिकं समकक्ष्यतयैव आह **'अन्यत्र वा'** इति ज्ञानादिनिबन्धनत्वेन ज्ञातोऽपि मोहात् न प्रवर्तितः । तथाहि अग्रे विश्वाधिष्ठातृशब्देन अष्टमूर्तिशब्देन च इदमाह । भेदवादिभिरपि तस्य भगवतो विश्वं शरीरतया अङ्गीकृतम्, तत्र केवलं जडं न संविदः पृथक्, संविदपि न संविदन्तरादिति अभेदवादपरमार्थतयैव पुराणागमादीनां व्यवस्थानम् । ततस्तत्प्रमाणसिद्धे भगवति विश्वाभेदादात्माभेदोऽपि सिद्ध इति भेदस्य अस्य मोह एव सारम् । मोहस्य मिथ्याज्ञानस्य आकारतो निर्देशं करोति **'अन्य'** इति दूरभुवनविशेषवृत्तित्वादस्मदाद्यदृश्यत्वादिना अपूर्वेण अस्मान् प्रति अप्रकाशमानेन अर्थेन असहभवनशीलोऽसावैश्वर्यव्यवहारः स्वात्मनि, तथाभूतापूर्वरूपविरहिणि विरुद्ध इति यो व्यामोहस्तेन ओतप्रोतहृदयः कथं तथा व्यवहरेत् । **'प्रवर्त्यते'** इति लोकेन अस्माभिश्च उपदिशद्भिस्तत्समर्थाचरणेन प्रवर्तयंल्लोकः प्रयुज्यते इति सूत्रेऽपि श्लेषच्छायया कारितद्वयं व्याख्येयम् । वस्तुनि ज्ञातेऽपि प्राप्तायामपि च अर्थक्रियायां व्यवहारसाधनमुपयोगवदेव तस्य यद्विशिष्टं कार्यं तत्संपादनाय कथम् । आह **'यत् तत्'** इति बहुतरं यत्कार्यं विशिष्टशब्दोपधेयपरामर्शगोचरतापुरःसरीभावेन ज्ञातं, तत् यस्मात् तथाभूतोपाख्यालक्षणशब्दव्यवहारप्रवृत्तिमन्तरेण **न आसाद्यते'** इति संभाव्यते इत्यतो हेतोः । ननु शब्देन अभिहितोऽनभिहितो वा तावानेव अर्थः । ननु एवं प्रमितश्च तावानेव अर्थः । ततः किम् । इहापि ततः किम् । किं शब्दप्रवृत्त्यर्थनयेति चेत्, तथापि किं प्रमाणप्रवृत्त्यर्थनया । सा प्रमातुरुपयोगिनीति चेत्, समः समाधिः । एतत् दर्शयति **'प्रमातुर्हि'**

इति । प्रमाणस्यैव विमर्शो जीवितं फलं यत्, तदेव शब्दव्यवहारेण पोष्यते इति भावः शावलेयत्वविशेषाभासो यथा गवाभासेऽधिकः । न तच्छब्दव्यवहारे प्रवर्तितेऽपि तस्य बाह्यस्य इदन्तापतितस्य स्वरूपं संभेदेन आभासान्तरं भासते । शब्दाभासभागेऽस्य इदन्तायामसंपात इति हि उक्तो

'घटोऽयमित्यध्यवसा..............................।'(१।५।२०)

इत्यत्र । ननु एवं शब्दे प्रवर्तितेऽपि अनाधिक्यं तस्य अर्थक्रियाकारिणि रूपे चेत्, तर्हि कस्तत्प्रवर्तने भरः । उच्यते **'केवलम्'** इति । दृष्टान्तेऽभिधाय प्रकृते योजयति **'एवम्'** इति । **'असौ'** इति व्यवहारसाधनादृतः प्रमाता । **'निरूढ'** इति अहमिति विश्राम्यन् । **'आरभते'** इति योऽसौ तदारम्भकस्तमेव स्वात्मानमभिमन्यते दार्ढ्येन सत्यपि मायासंस्कारजे देहाद्यहन्ताभिमाने इत्यर्थः । ननु व्यवहारसाधनशतैरपि आत्मनो महेश्वरतायामनाश्वासवन्तो जन्तवः सततमुपलभ्यन्ते । सत्यमित्याह **'कदाचित्'** इत्यादिना । **'स'** इति गोरूपो मोहोऽनेन भूयः परं पारमेश्वरं किमपि कृत्यं निर्वाहणीयमिति सोऽसंभवन्नपि संभाव्य एव । **'प्रयत्न'** इति चतुर्विधस्य कृत्यस्य तत्प्राणितत्वात् । **'तत्प्रसादादेव'** इति यत्रैव परमेश्वरात्मा प्रसन्नो देहाद्यभिमानकालुष्यत्यागेन, स एव मोहमहार्णवादुत्तरीतुं समर्थः । **'तत्'** इति परमेश्वरोक्ते शास्त्रे या उपपादिता **'भावेन'** इति संस्कारो दीक्षादिक्रिया ध्यानादियोगो योगो ज्ञानं तस्याः समन्ततः सामर्थ्यात् **'तां ताम्'** इति हेयरूपां देहप्राणपुर्यष्टकशून्यादिप्रमातृमयीं भोगाधारभोग्यादिलक्षणां भुवनभावादिमयीं भुवं परिहरंस्त्यजन् स्वयं ध्यानयोगज्ञानादिषु परमेश्वरगुरुप्रसादद्वारेण च दीक्षादौ स परमेशानुगृहीतः प्रकाशतां नयति ऐश्वर्यमात्मनि,—इति पूर्वेण

संबन्धः । इयति दीक्षादीनां सर्वेषां सामर्थ्यमुक्तं यदत्रैव जन्मनि परमेश्वरतालाभ इति योगज्ञानयोः प्राधान्येऽपि ज्ञानदीक्षापूर्वकत्वात् । यदागमो

'न चाधिकारिता दीक्षां विना योगेऽस्ति शाङ्करे ।
क्रियाज्ञानविभेदेन साच द्वेधा निगद्यते ॥' (मा०वि०४।६)

इति । यदातु ध्यानयोगाननभ्यस्यन्नेव ज्ञानदीक्षासमाश्वस्तस्तदा अस्य किमित्याह **'भावना'** इति । **'केचित्'** इति योगिनः । **'विभूतिभागम्'** इति सर्वज्ञत्वसर्वकर्तृत्वयोरंशमधिकज्ञानकरणसामर्थ्यमणिमादिविभूत्यष्टकलक्षणं तत्तद्भुवनविशेषविषयमिति । तदनेन प्रत्यक्षत एव अधिकसद्भावेऽपि न प्रकृतस्य हानिरिति प्रदर्श्य युक्त्या अपि एतदेव उपपद्यते इत्याह **'नहि'** इति । **'आत्मभाव'** इति **'परमात्मन'** इति च । उभयत्रापि परस्परं सन्निधानयोर्न विरोध इति उक्तम् । ननु मा भूत् प्राणादेरात्मभावसन्निधानेन परमात्मनः सन्निधाने विरोधः, स्वसंवेदनात्मकस्वप्रकाशत्वविरोधस्तु भवेत् । मैवम्, संनिहितश्चेत् परमात्मा, तदसौ स्वप्रकाशैकस्वभावः । तदाह **'नच'** इति । ननु परमात्मा चेत् स्वप्रकाशः, तर्हि प्राणादेरात्मभावः कथम् । **'तत्प्रथा'** इति परमात्मनो या स्वातन्त्र्येण प्रथा, तत्प्रभावादेव **'तस्य'** इति प्राणादेः **'तथा'** इति आत्मतया प्रकाशनं यतः । एतदेव द्रढयति **'अपरेषामपि'** इति प्राणादेर्वेदकतास्पृक्त्वमस्ति वेद्यतायामपीति एकग्रहणम् । **'भावानाम्'** इति वस्तूनाम् । एतत् स्पष्टयति **'अवस्तूनामप्येवम्'** इति दर्शयन् **'अभावस्यापि'** इति । ननु संवित्तत्त्वे मा भूदीश्वरत्वमपूर्वं साध्यम्, प्राणादौ तु आत्मतानिषेधोऽपूर्व एव साध्योऽस्तु । सोऽपि न अपूर्व इत्याह **'प्राणादीनाम्'** इत्यादि ।

**'तथाच'** इति प्रमेयतया । प्रमेयं हि स्मर्यतेऽनुभवविच्छेदनबलात् । प्रमातृरूपं तु यदविच्छिन्नप्रकाशसारं, तत्र स्मरणं न उपपद्यते । तत एव उक्तं

'नत्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ।' (स्प०का०१३)

इति । **'यद्वशात्'** इति निषेधव्यवहारसिद्धिसामर्थ्यात् । **'प्राक्'** इति

'एवमन्योऽन्य················।' (१।३।६)

इत्यत्र टीकायामुपपादितमेतत् । **'चिद्रूपस्य तु'** इति भवतैव हि उपपादितमिदं वितत्य

'भिन्नयोरवभासो हि स्यात्·········।' (१।६।२)

इत्यत्र । **'परम्'** इति इदंभावम् । **'उपजाता'** इति निरूढिं गतेति यावत् । **'पूर्वम्'** इति

'कैवल्यं जायते सद्यो नेत्रयोः स्तब्धमात्रयोः ।' (वि०भै०११३)

इति । उपदेशं स्मारयति **'परतः'** इति विकल्पोदये मायाप्रमातुरभिव्यक्तौ । **'संसारफलः'** इति धर्माधर्मनिबन्धनजात्यायुर्भोगहानादानप्रबन्धरूपसंसरणकारीत्यर्थः । **'यत्र'** इति ततो युक्तमुक्तं तच्च विरुद्धस्वरूपप्रकाशनेनैव निवर्त्यते इति आशयशेषः । **'अत एव'** इति यतश्चिन्मया एव अर्थाः, ततः । **'अत्र'** इति अस्मद्दर्शने । **'नतु'** इति **'मुख्यः'** इति सम्बन्धः । सांख्यानां तु अयमेव मुख्यो मोह इति संमतः । ननु यदि संविन्मया एव अर्थास्तर्हि प्राणादिरात्मैव, नतु अनात्मा; तत् कथमुक्तं **'प्राणादावनात्मनि'** इति,—इत्याशङ्कामपोहति **'स तु'** इति । अनात्मन्यात्माभिमानस्तदा भवति, यदा घटादिभ्योऽहन्तोचितेभ्यो व्यावृत्त्य घटादितुल्यीकृत एव इदन्तास्पदे प्राणदेहादौ भवति । **'तदाच'** इति नियते प्राणादावेव आत्मभावे-

ऽहन्तासर्वस्वस्य समारोपणादुत्थापिते । **'तदपेक्षया'** इति अहन्तानुरागसमालम्भनलब्धप्रमातृतासौभाग्यमपि अनुज्झितेदन्तामलकलङ्कप्राणादिकमपेक्ष्येत्यर्थः । एतदेव आह **'सोऽपि'** इति **'ननु'** इति च । ईश्वरस्य येन प्रकारेण सर्वेऽर्था अहन्तास्पदं यतस्तेन किंचिदिवजायन्ते तदा प्राणादिर्न अहन्तास्पदमिति योजना । एतदेव उपपादयति **'यतः'** इति । **'असौ'** इति प्राणादिः । **'अहन्ता'** इति ईश्वरदशायाम् । एवं प्रसङ्गेन मायाप्रमातुः स्वरूपं निरूप्य तद्विषये निषेधव्यवहार इति यत् प्रस्तुतं प्रमेयं, तदेव अनुबध्नाति **'तत्र च'** इति देहप्राणादौ । **'क्रमेण'** इति भावनाभ्यासेन । **'पूर्वं हि'** इति भावनाक्रमस्य अभावे । अनिवृत्तौ हेतुः **'घटात् घटादीन् प्रति ग्राहकत्वात्'** इति । उभयत्र हि कारणमस्ति निवृत्तौ च । तत्र प्रवृत्तिकारणदृढसंस्कारसूत्रनिबद्धं च वर्तमानं चेति निवृत्तिकारणं सदपि उदास्ते, तत् वर्तमानत्वविगमे तत्संस्कारपरिक्षये च फलिष्यति । तदाह **'केवलम्'** इति **'शरीरपातात्'** इति प्रयाणशब्दवाच्यात् । **'ऊर्ध्वम्'** इति **'प्रयाणान्ते'** इति पुरानिरूपिते । **'तावतः'** इति यस्य तावत् देहेऽहम्भावो विगलितः, स देहसम्बन्धोपनतधर्माधर्मनिबद्धदेहान्तरारम्भाभावात् विगते देहे प्रसूतिलयादिभावेऽवतिष्ठते इति बुद्ध्यन्तादध्वन उत्तीर्णः । यथोक्तं

'.................कर्मतश्च शरीरिणः ।'

इत्यादि । एवं प्राणाद्युत्तरणमपि आगमाधिकारे वक्ष्यते । **'अद्यैव'** इति शरीरेऽपि अपतिते । अपिशब्देन स्तोकावशेषत्वेन प्राणशरीरादावहन्ताभिनिवेशस्य स्थितिरपि अस्तीति व्याचष्टे सर्वथानिवृत्तौ शरीरपातापत्त्यैव अद्येतिवाचोयुक्तेरयोगात् । ननु तदा अस्य योगिनः कुत्र अहन्तादार्ढ्यम् । आह **'तदाच'**

इति । **'प्राणादौ'** इति वेद्यीकृते । **'घटादिष्वपिवा'** इति समाधानसंस्कारदार्ढ्ये व्युत्थितोऽपि शरीरादि न ग्राहकत्वदार्ढ्येन अधिशेते इति यावत् । **'तथा'** इति पृथग्भावबलोदितेन परिमितत्वेन । एतत् प्रसिद्धेन शरीरादिना समीकरोति **'यथा'** इति । ननु शरीरादेर्ग्राहकत्वावसरेऽपि प्राणाद्यपेक्षया स्फुटमेव ग्राह्यत्वं, तत् कथमुक्तं योग्यत्वमिति । एतत् निषेधति **'ननु'** इति । **'वक्ष्यते'** इति आगमाधिकारे । इयता च इदमुक्तम्—ग्राह्यग्राहकभेदपरम्परायां अनिवृत्तौ मायापदे भूषणमियमनवस्था, प्रमातृतायां तु न प्रमेयताङ्गमिति न प्रमेयासिद्धिदूषणमिति । ननु यदि शून्ये शून्यान्तरं ग्राहकमिष्यते, तत्रापि शून्यान्तरं; काममनवस्था । शून्ये तु चित्तत्त्वं ग्राहकमिष्यताम्, ततश्च प्रकाशमिति का अनवस्था । एतदाशङ्क्य आह **'नच'** इति । अशक्यत्वे हेतुः **'तस्य ग्राहकत्वाभावात्'** इति । तत्रापि पूर्वे हेतुः, तत्रापि पूर्व इत्येवं नेयम् । **'तस्य च'** इति चित्तत्त्वस्य । **'निराभासम्'** इति शुद्धे शिवत्वे । **'विश्वाभासम्'** इति ईश्वरपर्यन्ते । **'शिवत्वम्'** इति भावप्रत्ययेन अवस्थारूपत्वमत्र वदता परिपूर्णे धर्मिणि अवस्थातरि अव्यपदेश्यतां पूर्णत्वेन आह यथोक्तं प्राक् **'पूर्णे तु सर्वमस्ति'** इत्यादि । अथ अयं देहादावहन्तानिषेधाभ्यासः किं सर्वथैव अत्र उपयुज्यते । ओमिति चेत्, तर्हि सूत्रे सोऽपि वक्तव्य एवेति । अत्र आह **'तच्च'** इति शिवत्वमीश्वरत्वं च प्रत्यभिज्ञाय सिद्ध्यन्ति शिवरूपा भवन्ति । प्रत्यभिज्ञानस्यैव स्वरूपमुक्तं **'भक्तिशालिनः'** हठग्रहगृहीतानपोहनीयतथाभिमाना इत्यर्थः । तत्र हेतुः **'उक्त'** इत्यादिना उक्तः, तत्रापि **'संप्रदाय'** इत्यादिना । देहस्य सुखादिशून्यस्य प्रमातृतया संवित् नास्ति, गौर

एव अहं सुखीति हि प्रमातृप्रतिपत्तिः; ततो देहावस्थायामिति न उक्तम् । एतदुक्तं भवति—केचन क्रमेण भूमिकासमारोहादभ्यासक्रमेण शून्यमपि यावत् प्रमात्रीकृतं स्फुटत्वेन वेद्यतया अधस्पदीकृत्य परमार्थप्रमातरि अभिमानं गृह्णीयुरिति प्रहतः पन्थाः । देहप्राणपुर्यष्टकबद्धास्था एवतु तत्त्यागमनभ्यस्यन्तोऽपि अनिषिद्धतदात्मभावा एव उल्लङ्घनक्रममनाद्रियमाणाः शरीरे चक्राधारादौ महाविदेहानन्दभूमिकादौ च बद्धपदाः प्रत्युत वेद्यान्तरतादात्म्यपरिपोषणेन विश्वात्मानः संपद्यन्ते इति तान्प्रति देहादावहन्तानिषेधाभ्यासे न किंचित् कृत्यम् । तथाविधसंप्रदायपात्रताविरहितानामेव स उपयोगी अभ्यस्तदेहाद्यात्मतात्यागाय । पर्यन्ते तु तैरपि अनवस्थाभयादिदमेव आलम्बनीयमिति । इदानीं प्रकृतमिदन्ताहन्तयोर्विरोधमुपसंहरति **'तदेवम्'** इति । ननु यथा वा गमनरूपगोव्यवहारोऽप्रयत्नसिद्धः पूर्वमूढस्य, तथा आत्मव्यवहारे सति ईश्वरव्यवहारः क सिद्धः । यदि तु तत्रापि असिद्धः, तर्हि अनवस्था । तां परिहरति **'दृष्टान्तत्वेन'** इति । पुनःशब्दो विशेषं दार्ष्टान्तिकात् द्योतयति । नहि अत्र आत्मा ईश्वरो भवतीति व्यवहारः पूर्वं प्रवर्तितः । एतदेवकारेण आह । आत्मैव हि विशिष्ट ईश्वर इति तद्वादिनः । तदाह **'पुर्यष्टक'** इत्यादि । पुर्यष्टकशरीरप्रभृति यत् मायीयं, तद्रूपशून्ये अपृथग्भूतत्वात् प्रकाशाव्यतिरेकात् ज्ञानादिशक्तियोगाच्च आत्मत्वेश्वरत्वव्यवहारोऽसिद्धः स्वात्मनि चैत्रमैत्रादिभेदिनि ताभ्यामेव निबन्धनाभ्यां साध्यते, नतु अपृथग्भावः प्रकाशाव्यतिरेकः, सच अहमिति व्यवहरणीयः; आत्मायमिति तु अनेन प्रकाशात् व्यतिरिक्तमिव व्यवह्रियते । ज्ञानादिशक्तिमत्त्वं च जानामि करोमीत्येवंरूपमहमित्येवव्यवहारस्य निबन्धनं, नतु ईश्वर इत्यस्य । एतत् स्वयमा-

शङ्क्य **'यद्यपि'** इत्यादिना परिहरति **'तथापि'** इत्यादिना प्रागुक्तमेव स्मारयन् । **'इह'** इति न केवलं पूर्वमिति भावः । ननु इह सूत्रे **'व्यवहारः प्रवर्त्यते'** इतिवचनेन व्यवहारसाधनं करणरूपं, तद्द्वारेण च क्रियात्मकमस्य शास्त्रस्य अभिधेयमिति उक्तम्, पूर्वं तु

'................प्रत्यभिज्ञोपदर्श्यते ।' (१।१।३)

इति प्रत्यभिज्ञानं, तत् कथं सङ्गमयितव्यमित्याशङ्क्य एकसंवेदनं वस्तुतत्त्वमित्युपपादयति **'प्रत्यभिज्ञा'** इत्यादिना । अत्र च करणस्य क्रियायामुपयोगात् क्रियाया एव अभिधेयत्वं शास्त्रं प्रति निरूपितम् । क्रिया च करणस्वरूपविवेचनद्वारेण वाच्येति प्रत्यभिज्ञानं प्रमाणमस्य शास्त्रस्य अभिधेयं लक्षणीयत्वेनेति तत्प्रतिपादनं प्रयोजनं प्रमाणस्वरूपप्रतिपत्तिः, तस्याः फलं तद्व्यापारणं, तस्य फलं प्रत्यभिज्ञोदयः, ततः पर्यन्तफलमपर्यनुयोज्य फलान्तरं पूर्णानन्दानन्तशक्तिपरमेश्वररूपतोन्मेष इति तात्पर्यम् । ननु 'अप्राप्ते शास्त्रमर्थवत्' इतिन्यायात् प्रसिद्धे स्वात्मनि किं शास्त्रव्यापारेणेत्याशङ्क्य आह **'शास्त्राणां हि'** इति **'लोक'** इति **'अर्थकामाद्युपयोगिनि प्रमाणे वा'** इति । यदुक्तं पूर्वं

'................शास्त्रं मोहनिवर्तनम् ।'

इति । **'असिद्ध इव'** इति न व्यवहार्यो भवतीति पूर्वेण सम्बन्धनीयम् । **'पुनः'** इति **'वृत्त्यन्तरेण'** इत्यर्थः । ननु प्रमेयादर्थक्रिया, प्रमाणाच्च प्रमेयसिद्धिरिति प्रमेयस्य प्रमाणस्य च उपयोगित्वात् तद्विषयविषमविमोहव्यपोहने हेतुव्यवहारसाधनप्रमाणान्वेषणं क्रियताम्, प्रमाता तु कुत्र उपयुज्यते येन तत्र विमोहापसरणं क्रियते । तस्य अनुपयोगादेवच दूरापास्ता सत्तेति । ततः एतदपि न वाच्यमपुनरावृत्तिफलं तत् भविष्यति व्यव-

-द्वारफलत्वाभावेऽपि 'आत्मा ज्ञातव्यो न स पुनरावर्तते' इत्यादिनयेनेति तत् किं प्रमातातरि मोहापसरणेनेत्याशङ्कामादिसिद्धसूत्रार्थप्रत्यावर्तनदिशा शमयति '**यद्यपिहि**' इति । सर्वत्र खलु स एव उपयुज्यते च भगवानवभासते च । उपपद्यते तद्यदि न रूप्यते तत्, प्रत्युत प्रमाणप्रमेयवर्गोऽयं न क्वचिदस्ति, न क्वचित् भाति, न क्वचिदुपयुज्यते स्वतन्त्रतयेति तात्पर्यम् । तथाहि प्रमातृप्रमेयवर्गस्य जगदन्तर्वर्तिनः प्रसुप्तप्रायतां दर्शयिष्यति स्वात्ममात्रनिष्ठत्वाशयेन । इहहि प्रमाणस्य तिस्रोऽवस्थाः—प्राक्कोटिः, वर्तमानता, फलपर्यन्तता च । तत्र प्राक्कोटौ प्रमातुरेव विजृम्भेति दर्शयति '**प्रमेयजिज्ञासायाम्**' इति । सर्वत्रैव तावदयं प्रमाता

'दुःखसंश्लेषविद्वेषी सुखास्वादरसादरः ।'

इत्यनेन नयेन प्रमेयजिज्ञासयैव व्याप्तः । मार्गगमनादावपि तत्र जिज्ञासोरपि अविवेकबलोपनत एव मध्ये संशय उपजायते यन्निर्धारणाय प्रेक्षापूर्वकारी व्याप्रियते । स्वशरीरमपिहि पश्यन्नयं तत्त्वमस्य जिज्ञासमानो विवेकबलादेव संशयमुत्थापयति—किं यथैव इदमहन्तास्पदं मे शरीरं, तथैव स्यात्; उत अन्यथेति । ततश्च संशयापाकरणाय प्रमाणमेवं प्रवर्तयितुमिच्छंस्तदनुस्मरति । यत्रापि वस्तुवृत्तादेव विवेकमन्तरेण अपि संशय उदेति यथा उच्चतादर्शनात् स्थाणुनरादौ, तत्रापि एषैव गतिः । तदयं प्रमाणस्य प्रवर्तनेच्छात्मकः संकल्पविशेषो धर्मिणां तद्धर्मद्वयं धर्मनियमनिर्णयं तन्निमित्तं च प्रमाणमेकीकुर्वन् विचार इति अभिधीयते विविधं कृत्वा चारणं संचारणं प्रमेयस्य विमर्शोत्थापनेन विवेकोपनतेन, विशेषे चारणं तस्य प्रमेयस्य विशेषावगमनिबन्धनप्रमाणान्वेषणलक्षणं च विशेषचरणे कर्तव्ये तत्समर्थाचरणमिति विचारः । परित आलोचनं सर्वतो विवेचना, अन्यपरिवर्जनेन च

आलोचनं प्रमाणपरिढौकनमिति पर्यालोचनं सम्भवतोऽर्थस्य संभाव्यमानतया उपपद्यमानस्य तदेव सम्भवसमर्थाचरणमुपपादनमित्युच्यते । एवमिच्छापूर्वकं प्रमाणस्य प्रवर्तनं संकल्पप्रयत्नरूपं विचार उच्यते । यस्तु आह—इदमित्थंभूतं यत्, तदेवमुत नैवमिति विमृश्य एवमेवेत्यनिष्टपराकरणेन स्थापनं विचार इति पञ्चपदो विचार इति, स प्रष्टव्यः—विचार इति किं वाक्यमभिप्रेतं, वाक्यार्थो वा; वाक्यार्थोऽपि जडाभिमतो, ज्ञानात्मा वा; ज्ञानमपि एकं वा, ज्ञानमाला वा। पदानि च किं सुप्तिङन्तानि, तदर्थरूपाणि वा; तान्यपि ज्ञानाज्ञानभेदेन विकल्पनीयानि। पदशब्देन वा भागा विषया वा, उत ज्ञानं वा, ज्ञानमाला वा विचार इति संभाव्यते तावदेतत्। तत्र च सुप्तिङन्तानामवसरः, संजल्पान्तरावसरेऽपि एकस्मिन् ज्ञाने संशयरूपे निर्णयरूपे वा विचारत्वेन संमते बहूनां पदानां कोऽवकाशः, कल्पनायां तु क इयत्तानियमः। ज्ञानमालायामपि एतेनैव कृतः पदनियमनिरासः। अथ एकस्य ज्ञानस्य पञ्च पदानि ज्ञेयरूपाणि, तदा पर्वतो धूमवानिति कामं ज्ञेयमस्तु पदद्वयं; ततः परं तु किमिदमेवमुत नैवमिति अग्निमत्त्वानग्निमत्त्वसंशयोऽयं बोधो, न विषयरूपं पदद्वयमेतत्। अग्नेर्भावाभावौ विषयाविति चेत्, अस्तु एवं; सङ्गतिस्तु का। एकत्रैव ज्ञाने पर्वतधूमाग्निभावाभावाग्निनियमाः पञ्च यदि विषयतां गता शिखरस्थस्यैव ज्ञाने घटपटादयः, तत् पर्वतोऽग्निमानेवेति कथं परस्परापेक्षासिद्धिर्भवेत्, अग्निनियमश्चाग्निभावाभावा इति सोऽयमग्निभाव एवेति न पञ्चमं पदमेतत् स्यात्; एकदेव एकत्रैवच ज्ञानं वह्नेर्भावमभावं च कथं विषययेदिति वाच्यम्। अथ पृथग्भूतैर्ज्ञानैर्विषयीकृतानि पञ्च वस्तूनि पदानि अनुसन्दधानं ज्ञानं पञ्चपदो विचार इति उच्यते,

तत्र धर्मिज्ञानं धूमज्ञानमिति ज्ञानद्वयस्य तावदस्तु विषयद्वयम्, ततः परं तु यत् संशयज्ञानं विमर्शाख्यं, तस्य एक एव ह्यात्मना कल्प्यमानो विषयः स्थाणुर्वेत्यत्रैव वाक्यानुप्रवेशेन पक्षान्तरदोलयोः प्रवेशितत्वादपरथा विषयद्वयमेकमनेकं वा ज्ञानमिति उभयथापि कः संशयार्थः । तदयं किमेवमितिशब्दभेदेऽपि एकस्वभाव एव संशय इति कथं पदद्वयात्मत्वमस्य । एवमेवेतिस्थापनं च निर्णय उच्यते । तस्य धर्मिधर्मसंवेदनं संशय इत्यादीनि कथं पदानि विकल्परूपाणि भवेयुः । उपयोगमात्रात् तानि तस्य पदानि,— इति चेदनिष्टपराकरणमपि पदान्तरत्वेन किमिति न गणितमिति पञ्चपदत्वं कथं स्यात् । कश्च अयमत्र अभिमानः—पञ्चपदो विचार इति न केनचित् ज्ञातमस्माभिरेव अन्धतमसमपसारितं लोकस्येति । बाला अपिहि प्रथमं व्याकरणसूत्रमधीत्य न्यायसूत्रमधीयते यत्र उक्तं

'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ।' (१।१।४०)

इति । विमर्शो हि संशयः । सच सति धर्मिदर्शने प्रतिपक्षोपालम्भ एवच अनिष्टपराकरणमिति कोऽयमपूर्वप्रदर्शनाभिमानः । एवंविधाभिमाननिर्माणमपिवा भगवत एव स्वातन्त्र्यमिति वन्द्यतेतमामस्माभिः । व्यवस्थापनं विचार इति च प्रतिज्ञा यया लक्षणपदप्रयोजननिरूपणावसरे यदुच्यते—इदमित्थमित्यनभिधाने भित्त्यभावात् विमर्शानङ्गत्वाच्च निरालम्बनो विचारो भवेदिति, तदस्तु; यत्तु उच्यते किमेवमित्यादिपदद्वयानभिधाने नीरूपो विचारः स्यादिति, तदतितमामनुसन्धानवन्ध्यत्वं हृदयस्य । अनेन हि वचसा विमर्श एव संशयात्मा विचारस्य लक्षणमुक्तं भवेत्, नतु स्थापनमिति । पुनश्च अभिहितं—यदि एवमेवेति ई न स्यात्, निष्फलो निरवधिश्च विचारो भवेदिति, तदने-

नापि स्थापनं विचार इति प्रक्रान्तपूर्वं सामानाधिकरण्यं विरुध्येत । नहि तदेव स्वात्मनि फलमवधिर्वा भवितुमर्हति । तदनेन विचारं विचारयता पूर्वापरं न विचारितम् । नच आनुमानिकनिर्णययोगादेव परीक्षकता विचारकता ख्याता लोके चरमे चेतसीतिनयेन रत्नतत्त्वविचारस्य प्रत्यक्षेण अपि संभवात् । आनुमानिकविचारोऽपि ज्ञानमालात्मा यदि उच्यते, तत् षोडशपद इति वाच्यं तावता तदुत्पादात् । नच निर्णयो विचारः प्रसिद्धो विचारितमेतत् सूरिभिः, नच अद्यापि निर्णीतमिति व्यवहारात् । तथाहि महाभाष्यकृत् सन्ध्यक्षरवार्तिके

'इदं विचार्यते……………………।' ( २।३।४ )

इतिसंशये सति प्रमाणान्वेषणमेव विवेकावतारणं प्रकल्पितं विचारत्वेन व्यवहृतवान् । आगमेऽपि

'तावद्विचारयेद्योगी यावत्तत्त्वं प्रपश्यति ।'

इति । तत्त्वदृष्टिलक्षणात् निर्णयात् पूर्वावस्थैव विचारयितृत्वं निरूपितम् । महागुरुणा अपि सविचारसमापत्त्यनन्तरं

'निर्विचारवैशारद्येऽध्यात्मप्रसादः ।' (यो०सू०१।४७)

इति उक्त्वा

'ऋतम्भरा तत्र प्रज्ञा ।' ( यो०सू०१।४८ )

इति निर्णयरूपायाः प्रज्ञायाः पश्चात्स्वरूपमभिदधता निर्णिनीषैव विचारत्वेन उक्ता । किंच वितर्क एव सूक्ष्मो विषयतां नीतो विचार इति दर्शितः । नच वितर्को निर्णय इति युक्तमुक्तम् । प्रमाणोपन्यासरूपा निर्णिनीषैव विचार इति अलमवान्तरेण । एवं प्राक्कोटौ प्रमाणस्य प्रमातुरेव उपयोगमुक्त्वा परकोटावपि दर्शयति **'परतोऽपि'** इति । **'प्रवृत्तेः'** इति दिग्योगे हेतौ च पञ्चमी पूर्वोत्तरसम्बन्धेन । मध्यकोटौ तु प्रमाणं प्रतपत् लक्ष्यमाणमपि

प्रमातारमेव वस्तुत उज्ज्वलयतीति दर्शयति । **'तं प्रति'** इति प्रमातारं प्रतीत्यर्थः । एवं मध्यकोटौ प्रमाणं प्रतपतु, तत्तु यथा कृतार्थं भवति, तथा पूर्वापरकोटिमेव अनुधावतीति निरूप्यते **'तथापि'** इति पूर्वकोटिरपरकोटिश्च तुल्यैव । दर्शितं प्राक् तावदर्थावलेहेनैवोत्तिष्ठतीत्यादिना । प्रतिष्ठां दृढनिश्चयरूपामर्थः प्रमातरि आसादयतीति संबन्धः । **'व्यवहर्तरि'** इति यदुक्तं, तदेव स्फुटयति **'सास्नादि'** इत्यादिना । व्यवहारश्च सार्वत्रिकत्वेन व्यवहारे उपयुज्यमानोऽनुमानं शरणीकरोति । तच्च मोहमात्रनिवर्तनफलमेव सर्वत्र । **'विचारयन्'** इति प्रमाणं प्रवर्तयितुमन्विच्छन् । एतदेव कोटिद्वयेन प्राधान्यं प्रमातुरुपसंहरति । मध्यकोटेश्च अप्राधान्यमपरकोट्या पर्यवसाने व्यवहार्यत्वाभावात् सौगतादिदर्शनेषु निरूपयति **'ततः'** इति विचारलक्षणा पूर्वकोटिर्भवन्ती अपि न सर्वत्र स्फुटसंवेद्येति पश्चादुपात्ता । **'प्रसुप्त इव जगदन्तर्वर्तिनि प्रमाणप्रमेयवर्गे'** इत्यादिना मध्यकोटिः सूचिता । मोहनिवर्तनमात्रफलत्वेऽपि यत्र प्रत्यक्षप्रमाणदृष्टत्वं वृक्षत्वस्य न पुरःसरीक्रियते हेतुतया, अपितु शिंशपात्वमेव, तत्र तद्वृक्षत्वमप्रमितमेव अभिप्रेतमिति अपूर्वप्रसाधकं तत्र स्वभावहेत्वनुमानम् । तत्रापि प्रमातैव प्रत्यक्षं सार्वत्रिकत्वेन व्यापारयन्नुपयोगीत्याह **'या या'** इति । ननु एवं यदि प्रमाणस्य सम्बन्धी स व्यापारः, कथं प्रमात्रा सार्वत्रिकत्वेन व्यापार्यते । अथ एवं न, तर्हि प्रमाणस्य स न सम्बन्धी स्यात्; अपितु प्रमातुरेव । सत्यमेवमिति आह **'व्यापारोऽपि'** इति । **करणस्य'** इति परशोरिव उद्यमननिपातनादिकया । **'इह'** इति अस्मद्दर्शने यत्र प्रमातृलग्नो नवाभासः प्रमाणं प्रत्यक्षम् । अनेनैव च ग्रन्थेन वर्तमानताकोटावपि प्रमाणस्य प्रमातृप्राधान्यशरण-

तैवेति दर्शितम्,—इति तिसृषु अपि प्रमाणावस्थासु प्रमातैव विजृम्भते इति युक्तो मूढं प्रति तद्व्यवहारसाधनव्युत्पादनसंरम्भः। स एवहि प्रमाता वस्तुसाधनं च प्रमाणं व्यापारयति व्यवहारसाधनं च। ततस्तदायत्तमेव प्रमाणस्य विचेष्टितमिति दर्शयति '**तेन**' इति तस्मादित्यर्थः। प्रमातृसमानाधिकरणं वापदमप्रवृत्तमस्मदादेः प्रत्यक्षानुमानाप्तोपदेशलक्षणं प्रमाणं यस्मिन् स्वर्गादौ तत्त्वसंख्यानियमे च षट्त्रिंशत्तत्वानीति, आदिग्रहणात् मन्त्रप्रभावदीक्षादिसामर्थ्ये च। '**शास्त्राकारेण**' इति वेदशैवादिरूपतया स्वविमर्शं प्रसिद्धिपर्यन्तं प्रसारयतीत्यर्थः। '**क्रियते**' इति तेनैव प्रमात्रा शास्त्रकाररूपेणेति सम्बन्धः। यावन्ति हि आत्मज्ञानशास्त्राणि श्रुत्यन्तसिद्धान्तरहस्यतन्त्ररूपाणि, तानि आत्मनि नैव सिद्धिमपूर्वरूपां रचयन्ति। तस्मात् व्यवहारमात्रसाधनफलानि एव तानीति भावः। '**अत एव**' इति यदेतत् तिसृष्वपि कोटिषु तस्यैव प्रतपनमुक्तम्, ततो हेतोर्यत्प्रमातुः प्राधान्यं, तस्मात् हेतोरिदमपि सिद्ध्यति यत् पूर्वमुक्तम्—एकेनैव प्रमाणेन अविशिष्टे वह्न्यादौ कार्यकारणतेत्यादि (२।३।८)। एकत्र हि प्रमातरि प्रधाने तद्व्यापारविमर्शबलात् प्रधानस्य भेदाभेदव्यवस्था। एक एवच असौ सार्वकालिकत्वेन विमर्श इति एकं प्रमाणम्। अन्यथाहि अस्मन्मते भिन्नसंवेद्योपरागात् परदर्शने स्वभावसंकोचबलात् कालभेदवत्यः संविदो भिन्नास्तदध्यवसाया अपि भिन्नाः क्षणिकस्वभावा इति कथमेकमेव प्रमाणं तात्कालिकवस्तुप्रकाशनपर्यवसितं स्वानुसारितया सत्यव्यवहारहेतुं विकल्पाध्यवसायं जनयत् सार्वत्रिकत्वे प्रमाणं भवेत्, भिन्नेषु संवेदनेषु सर्वस्यैव अपूर्वग्रहणरूपतेति का गृहीतग्राहिता प्रमात्रन्तरगृहीते इव। ततश्च कथमिदमुद्घोष्यते धारावाहिविज्ञानमालायामाद्यमेव संवे-

दनं प्रमाणमित्यादि । ननु इदानीं जन्मावसर एव अनेन वह्न्या-दिभावस्वभावग्राहिणा प्रमाणेन प्रामाण्यमासादितमिति उत्तर-कालं ज्ञानानामप्रमाणत्वमेव स्यात् । आभासमात्रे खलु एवमेव प्रतिपद्यतामायुष्मान्, नच अप्रमाणत्वमेकान्ततस्तेषामाभासान्त-रेषु अगृहीतपूर्वेषु योजनाभासे वा अनुल्लसितपूर्वस्य विमर्शलक्ष-णस्य प्रमातृव्यापारस्य उल्लासनात् । ननु प्रमातृव्यापारो विकल्पः, सोऽपिच ज्ञानस्वभावत्वात् क्षणिक इति कथं प्रमातृव्यापारस्य क्वचिदपि ऐक्यमुचितम् । एतदाशङ्कितं परिहरति **'तथापि'** इति । अन्तर्मुखताप्राधान्येन असौ वर्तमानः प्रमात्रा यावति स्वात-न्त्र्यात् न च्छिद्यते, तावदेक एवेति । ननु अन्तर्मुखस्वभावो न तेन किमङ्गीक्रियते । नेत्याशङ्क्य आह **'सच'** इति मायीयभेद-संस्कारात् विकल्पोऽसौ प्रगीयते शुद्धोऽपि विमर्शः । ननु अन्त-र्मुखेन अहमित्येतावन्मात्ररूपेण विकल्पताभाजा अपि विमर्शनेन न प्रमाणानां फलवत्ता, अपितु घटोऽयमिति बहिर्मुखेन । नच तेन बाह्योऽर्थः स्पृश्यते इति कथमुक्तं विमर्शप्राधान्येन अर्थव्यव-स्थेति । अत्र उत्तरं **'योऽपिच'** इति । **इन्द्रियव्यापारात्'** इति तज्जात् निर्विकल्पकज्ञानादितियावत् । सोऽपि न निर्वि-षयः, अपितु सार्वत्रिकत्वे सामान्यविषयः; अन्यथा तु स्वल-क्षणविषय इति । **'उक्तम्'** इति

'भ्रान्तित्वे चावसायस्य…………………… ।' (१।३।५)

इत्यादौ । ननु पुरोऽवभासमानं सामान्यं स्वलक्षणं वा स्पष्ट-प्रतिभासमस्पष्टप्रतिभासं च विकल्पे, तत् कथमुक्तं तद्विषय एवेति । अत्र आह **'नचापि'** इति

'भिन्नावभासच्छायानामपि मुख्यावभासतः ।
एकप्रत्यवमर्शाख्यादेकत्वमनिवारितम् ॥' (२।३।११)

इति उक्तम् । तावद्ग्रहणेन स्वमते तावत् न इदं दुरुपपादमिति दर्शितम्, परोऽपि न भेदमत्र वक्तुमुत्सहते इत्याह **'योऽपि'** इति बौद्धः । अनवधारणमेव दर्शति **'निर्विकल्पम्'** इति कर्त्तृपदमेतत् । **'स्व'** इति आत्मीयादवभासादन्यरूपम् । **'ततः'** इति परमतेऽपि यतः प्रतिभासभेदोऽशक्यावधारणोऽनेन । नच विमर्शबलादैक्यप्रसाधनेन प्रकृतेऽपि प्रमेये करावलम्बः कृत इति दर्शयति **'ततः'** इति शब्दविकल्पे ईश्वरः प्रमाता सर्वशक्तिरात्मैवेति उपदेशावसरे व्यवहारसाधनबलोपनते शब्दैः प्रमेयतां नीतस्य अपि परमार्थपरामर्शेऽहन्तात्मनि विश्रम इति । इदमिह तात्पर्यम्—भगवत इदमेव स्वातन्त्र्यं—यत् पशुलोकापेक्षया अतिदुष्करम्, तत्संपादनेऽपि अप्रतीघातः । इतश्च किमितरत् दुष्करम्—यत् प्रकाशात्मन्येव प्रकाशमाने एव प्रकाशनिषेधोऽप्रकाशमानताभिमान एव । एवंभूतं यत् स्वातन्त्र्यं, तदेव ग्राहकोल्लासनं तद्द्वारेणच ग्राह्योल्लासनमपि । सैषा मायाशक्तिर्विमोहनीति उक्ता । तत्कृतो यः स्वात्मनि स्वतन्त्रे नित्ये व्यापके च स्मृत्यादियोगात् कालायोगात् देशायोगाच्च प्रकाशमाने एव सति घनतमोऽप्रकाशमानताभिमानो मोहमलादिपर्यायनिरुक्त आभासविशेषस्तद्वशात् स्वात्मनि पूर्णमीश्वरव्यवहारं न प्रवर्तयति मूढः । सोऽनेन इच्छादिशक्तिप्रभावप्रख्यापकेन पूर्णपरार्थानुमानरूपेण व्यवहारसाधनेन प्रत्यभिज्ञाख्येन शास्त्रेण अवबोध्यते । यथाहि भीतः कश्चित् मोहादपहारितंमन्य एवं बोध्यते—कः खलु भवान् यस्य ईदृङ्मुखमीदृग्वस्त्रमिति चेत्, पश्य स्वात्मन्येतदिति पुनः पुनरभिदधता नच अपूर्वमस्य उत्पादितं किंचित्, तथैव पशुलोको भासमाने एव स्वात्मनि न अहमीश्वर इत्यादि मोहादभिमन्यमानो विबोध्यते । यत्र खलु ज्ञानादिशक्तयः, स ईश्वर इति व्यव-

ह्रियते तन्मात्रनिमित्तकत्वात् तद्व्यवहारस्य यथा पुराणादिप्रसिद्धः; त्वय्यपि च ताः सन्तीति। अथवा यत्र यदायत्तं, स तत्र ईश्वरो राजा इव निजे राज्ये; तथाच त्वयि विश्वम्। यल्लग्नं यत् भाति, तत् तेन पूर्णं निधानकुम्भ इव रत्नैः; त्वयि च लग्नं विश्वं भातीति। यस्य यदन्तर्वर्ति भाति, स तावति व्यापको रत्नेषु इव मणिभावः; शिंशपादिषु इव वृक्षत्वम्। त्वयि च संविद्रूपे धरादिसदाशिवान्तं शास्त्रप्रक्रियाद्यवगतं विश्वमन्तर्वर्ति भाति। यस्मिन्नसति यदुदेति लीयते च, तत् तत्पूर्वापरभागव्यापि भूमाविव अङ्कुरः; तथाच त्वयि प्रकाशरूपे विश्वमिति। एवमीश्वरत्वव्यापित्वनित्यत्वधर्मा व्यवहरणीयाः, अन्येऽपि आगमोक्ताः सहस्रशः शक्तिशब्दवाच्या धर्माः। तत्प्रकटनाय इदं पूर्णपरार्थानुमानरूपं प्रमाणादिनिग्रहस्थानपर्यन्तपदार्थषोडशकनिबन्धनेन सम्यक् परव्युत्पत्तिसंपादनसमर्थं शास्त्रम्। एवंहि सम्यक् परः प्रतिपादितो भवति हिताहितप्राप्तिपरिहारयोरित्यादिना च प्रत्यक्षादिपदार्थषोडशिका परव्युत्पादनप्रयोजनतया परार्थानुमानरूपेत्यन्यथा प्रामाण्यं प्रतिलभमाने स्वशास्त्रे मिथ्यैव न्यायतत्त्ववेदिमुनिमतविद्वेषोपात्ता कुशलदोषैः परैरपि प्रदर्शितैव। एतच्च मदीयादेव कथामुखतिलकात् विततमवधार्यम्। एवं व्यवहारसाधनेन प्रकाशमान एव यत् न प्रकाशते इत्यभिमननं संसारशब्दवाच्यम्, तदपसार्यते। तदपसारणमेव मुक्तिः। अभिमननाभासमात्रपरमार्थौ हि बन्धमोक्षौ भगवदिच्छाविजृम्भितमेव हेत्वंशेऽपि व्यामूढस्य। तत्रापि मोहापसरणमेव कर्तव्यमिति न अपूर्वं किंचिदप्रसिद्धं प्रसाध्यते। व्यवहारसाधनप्रमाणप्रभावसमाश्वस्तहृदयस्तु मोहसङ्करकलया परमेश्वरेणैव परोज्जिहीर्षादिकृत्यनिर्वाहणाय कंचित्कालं प्रयत्नसंधार्यमाणे देहादावहन्ता-

भिमाने प्रबुद्ध इति अभिधीयते विदितेन्द्रजालतत्त्व इव पश्य-न्नपि तद्भ्रान्त एव यतः, यस्य श्रुतचिन्ताभावनातद्दाढताभिर्भेद उक्तः । शिवशासनोपदिष्टविधिपूर्वकोपायेन भावनाभ्यासदार्ढ्येन तु तत्रैव देहे प्राणादौ घटादावपि वा संचारितपारमेश्वरधर्मप्रबन्धः सिद्धिभाजनं योगीति अभिधीयते यस्य आगमे संप्राप्तघटमान-सिद्धसिद्धतमभेदोऽन्वर्थरूपो निरूपितः । इयत्यपि तु सर्वथा मोहकलासंस्कारस्य प्रक्षयः । प्रक्षये तु अस्य देहाद्यहंभावनियम-विगलनात् परमेश्वरतैव । ईश्वरेच्छावशादेव तु कस्यचित् प्रयत्न-शतैरपि प्रत्यभिज्ञानं न उत्पद्यते । तस्य अपि श्रोत्रपथगमनमा-त्रादपि अवश्यं संस्कारपाकक्रमेण स्वरूपलाभः । यथोक्तमागमे

'निष्कम्प आत्मसंवित्तौ जीवन्मुक्तोऽभिधीयते ।
तत्त्वे विकल्पमानस्तु पिण्डपाताच्छिवं व्रजेत् ॥'

इति । मया अपि व्याख्यातमेतत्

संसारजीर्णतरुमूलकलापकल्प-
संकल्पसान्तरतया परमार्थवह्नेः ।
स्युर्विस्फुलिङ्गकणिका अपि चेत्तदन्त-
र्देदीप्यते विमलबोधहुताशराशिः ॥

इति । तदमुना न अपूर्वं किञ्चित्प्रसाध्यते स्वात्मनीति । तदधुना निर्व्यूढं परमार्थतो यदुक्तं शास्त्रादौ

'कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे······ ।' (१।१।२)

इत्यादीति शिवम् ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वर-प्रत्यभिज्ञाविवृतिविमर्शिन्यां क्रियाधिकारे प्रमाण-तत्फलप्रमेयपरमार्थविमर्शस्तृतीयः ॥ ३ ॥

## अथ चतुर्थो विमर्शः ।

ऐक्यपरमार्थकलया त्रिशक्तियुगघटितवैश्वरूप्यमहम् ।
अमृततनुमतनुबोधप्रसरमहाकारणं स्मरामि हरम् ॥

क्रियाशक्तिस्फार एव सम्बन्ध इति उक्तम् । स च ज्ञाप्य-ज्ञापकभावात्मा निर्णीतः, अधुना तु कार्यकारणतारूपो विमृश्यते श्लोकैकविंशत्या

'एष चानन्तशक्तित्वात्............... ।'

इत्यादिकया

'......................हेतुता कर्तृता क्रिया ।'

इत्यन्तया । तत्र कर्तृकर्मतैव तत्त्वं कार्यकारणताया इति स्वमते श्लोकेन उपक्षिप्य त्रयेण जडस्य कारणता निराक्रियते, षट्केन चेतनस्यैव सा कर्तृतात्मेति प्रसाध्यते, कारणविचारप्रसङ्गाच्च अनुमानेऽवश्यं नियतिशक्तिरुपजीवनीयेति त्रयेण दर्श्यते, शाक्योक्ता अपि कार्यकारणता अस्मन्नयमेव शरणमवलम्बतेऽन्यथा तु निस्तत्त्वैव सेति त्रयेण, कापिलोक्ता अपि एवमेवेति त्रयेण, इयता चेतनस्य कर्तृत्वमिति प्रसाध्य तस्य अपि अनीश्वरतायां तत् न निर्वहतीति द्वयेनेति संक्षेपः; प्रतिसूत्रं तु प्रयत्यते । एवं क्रिया-शक्तिमुखेन प्रमातृता परमेश्वरे प्रसाधितव्यवहारा, कर्तृरूपा तु तत एव अनायासघटितेति दर्शयति सूत्रेण

**एष चानन्तशक्तित्वादेवमाभासयत्यमून् ।**
**भावानिच्छावशादेषा क्रिया निर्मातृतास्य सा ॥ १ ॥**

एष एव पुराणः प्रमाता अमून् भावानाभासयति अविच्छेदेन । कथम् । ईशितुरव्यतिरेकेण अविकल्पा च अक्रमा च या निरूपिता इच्छा, तस्याः सामर्थ्यात् । क अस्य ते भावा

इति चेत्, आह अनन्तशक्तित्वादिति । अनन्ता विश्वे भावा हि तस्यैव शक्तयः इति उक्तं

'स्वामिन······································ ।' (१।५।१०)

इत्यत्र । यदित्थमाभासनमिच्छाप्राणितमेतदेव भगवतः करणं निर्मातृत्वं स्रष्टृत्वमुच्यते,—इति सूत्रार्थः । तमवतारयति '**इदानीम्**' इत्यादिना । '**निराकरिष्यन्**' इति

'जडस्य तु न सा······················· ।' (२।४।२)

इत्यादिना प्रबन्धेन । '**नित्यस्य**' इति परस्य एतत्संमतमिति भावः । स्वमतं तु आह '**नापि**' इति । '**तस्य तु**' इति अनेन क्रमयौगपद्ये एव स्त इति परस्य भ्रमं भनक्ति । इयता च तत्प्रत्युक्तं यदाहुः—सृष्ट्यादौ यदि नित्यमिच्छा, सहैव सृष्टिप्रलयौ स्याताम्; कादाचित्कत्वे तु अस्या हेत्वन्तरं वाच्यमित्यादि । एषणीयोपरागभेदाशयेन इच्छा इति बहुवचनपाठोऽपि अदुष्ट एव । निराभासे निष्क्रमे च भगवति न कालयोग इति प्राच्यमेव स्मारयति '**क्रमावभासन**' इत्यादिना । '**ईश्वरोऽपि**' इति कुम्भकारादिरपि एवमिति अपिशब्दः । तथाच वक्ष्यते 'संसारिप्रमातुरपीच्छैव' इत्यादि । '**यतः**' इति इदन्ताभागोपरागोपनतेन वेद्यत्वेन स्पर्शे भवेत् कालयोगो विकल्परूपतायाम्, नतु सा विकल्परूपा निर्मात्री तदभावेऽपि देशोपक्रमणादिकार्योदयात् त्वरितधावनादौ तत्सद्भावेऽपि तद्वेष्टितो भवेदेकः, द्वितीयश्च अपवेष्टित इति उरोमण्डलादिप्रायकरनर्तनासम्पत्तेः । तत्र हि प्रमातृसंवेदनसद्भावो विशिष्टसंरम्भलक्षणोऽप्रतिहतप्रयत्नतात्मकः—कृतमेव इदं मयेति निष्कम्पप्रतिभानलक्षणो न तस्य कर्तव्यस्य संपन्नस्त्वरितवाचनादौ संपन्न इति स एव अन्वयव्यतिरेकाभ्यां निर्माणरूपो विश्वस्य । तदेतदाह '**वाचन**' इत्या-

दिना । ननु तथाभूतप्रतिभायोगे विकल्पोऽपि क्वचित् निर्माणाय व्याप्रियमाणो दृष्टो मन्थरगमनवाचनादौ । तत् कथं तस्य अक्रमत्वम् । अत्र उच्यते **'योऽपि'** इति । एतच्च

'घटोऽयमित्यध्यवसा............ ।' (१।५।२०)

इत्यत्र उक्तम् । विकल्पस्य च निर्मातृत्वं मायीयपदे, नतु प्रकृतायामीश्वरसृष्टावित्याह **'ईश्वरस्य च'** इति । **'सैव'** इति इच्छामात्ररूपा । **'उपपादितम्'** इति कुम्भकारचैतन्यमीश्वर एव । तन्नियतिमहिम्ना तु चक्रदण्डादिवर्गपतित एव कुलालकार्यकारणतावभासः स्वप्नसंकल्पादिवदिति हि असकृत् निवेदितम् ॥ १ ॥

ननु बीजादुद्भवति अङ्कुरे चेतनानुप्रवेशो नैव अस्तीति चिद्रूप एव विश्वावभासक इति किमेतत् । अत्र उत्तरं सूत्रेण

जडस्य तु न सा शक्तिः सत्ता यदसतः सतः ।
कर्तृकर्मत्वतत्त्वैव कार्यकारणता ततः ॥ २ ॥

अङ्कुरस्य सतो वा असतो वा यत् परिदृश्यते सत्त्वं, तत्र न बीजस्य शक्तिर्न अङ्कुरस्य । अङ्कुरो जायते इति हि अङ्कुरवृत्तान्तोऽन्यस्य बीजस्य कथं शक्तिः, अङ्कुरश्च न कश्चन तदा । तस्मात् क्रियाशक्त्या भास्यमानं कर्मैव कार्यं, भासयिता च कर्तैव कारणम् । असद्रूपस्य सत इति वा अर्थः । पूर्वं तु वार्थगर्भीकारेण व्याख्यानम्—असतोऽङ्कुरस्य सतो वा बीजस्येति, यदिवा बीजस्यैव सतोऽसतो वा,—इति द्वन्द्वपदार्थयोरखण्डत्वात् सांख्यतानुदेशः प्रतिवर्ति पदार्थं वावतरतीति यथासम्भवं योजना ॥ १ ॥

जडस्य कथं न एषा शक्तिरिति चेत्, उच्यते

**यदसत्तदसद्युक्ता, नासतः सत्स्वरूपता ।**
**सतोऽपि न पुनः सत्तालाभेनार्थोऽथचोच्यते ॥ ३ ॥**

**कार्यकारणता लोके सान्तर्विपरिवर्तिनः ।**
**उभयेन्द्रियवेद्यत्वं तस्य कस्यापि शक्तितः ॥ ४ ॥**

सद्वा असद्वा कार्यं संभाव्यते द्व्यात्मकम्, अनुभयरूपमनिर्वाच्यमिति तु स्ववाचैव विरुध्यते । तत्र यदि असत्ता घटस्य रूपं, तर्हि स्वरूपविरुद्धां सत्तां कथङ्कारमङ्गीकुरुतां पादपतनैरपि राजोपरोधैरपिवा नीलमिव पीतताम् । अथ अस्य सत्तात्मकं रूपं, तदयं किमुपयाचतां दण्डादिभ्यः । व्यक्तिविषयत्वस्फुटत्वादयोऽपि सदसत्तया अनुयोज्याः । नच इयता तूष्णीमेव आसितुमुचितं प्रामाणिकस्य । लोके हि अप्रतिहता····प्रहतश्च व्यवहारः । स च इत्थं समर्थ्यते—कुलालहृदयान्तर्मनोगोचरतापत्तेरपि प्राच्यावस्थायामन्तःस्वसंविदि तादात्म्येन विचित्रतया विश्वस्य भेदाभेदमय्या परिवर्तमानस्य स्फुरतो यदन्तःकरणैकवेद्यत्वं सुखादेरन्तर्बहिष्करणद्वयवेद्यत्वं च घटादेराभास्यते यदयमेव स लोके कार्यकारणभावः । '**तस्य कस्यापि**' इति अस्मदाद्यचिन्त्यप्रभावस्येत्यर्थः । यथाहि दर्पणस्वप्नसंकल्पेषु कुम्भकारनिर्मीयमाणोऽयं घट इत्याभासेऽपि तत्त्वतो दर्पणादिकस्यैव महिमा, तथैव संविद एव घटाभासे महिमा कुम्भकारनिर्मीयमाणत्वाभिमानाभासनोत्थापनेऽपि । एवं संविन्महिम्ना घटे दण्डचक्रकुलालकायादौ सति भासमाने अनेन इदं निर्मितमिति भाति । तत्र च जडो दण्डादिर्न एवंविधाभिमानभाजनमिति चित्स्वभावे कर्तृत्वं व्यवतिष्ठते । उभयेन्द्रियवेद्यत्वेन स्फुटमर्थक्रियाकार्याभासरूपं लक्षितमिति सूत्रार्थः । असदिति असन्नङ्कुर इति न अङ्कुरस्य अनेन स्वरूपं किंचिदुक्तं यत् सत्तया विरुध्यते । असतश्च सत्ता नाम कार्यत्वमित्यनेन अङ्कुरस्य कंचित् धर्मं पूर्वमङ्गीकृतवतस्तद्विरुद्धधर्मोपगम उक्तः । ननु यदि उभयमपि इदं

वैकल्पिकं, वास्तवं तर्हि किम् । आह **'वस्तुतस्तु'** इति । **'अन्यथात्वस्य'** इति असत्त्वस्य । ननु तुच्छं तत्, सुतरां तर्हि पर्यनुयोज्यः स इत्याह **'तादवस्थ्यात्'** इति तुच्छेन अतुच्छस्य वपुषोऽतिरस्कारात् । ननु बीजे सति अङ्कुरोऽस्तीति अङ्कुरस्य रूपमुक्तम्, ततः पदद्वयमपास्य कथं पर्यनुयोग इति परस्य मोहमपहन्ति **'नच'** इति अन्तेनेतिना सम्बन्धः । इति यत्परस्य मतं तत्, न किं तत् परस्य मतम् । आह **'बीज'** इत्यादि प्रसङ्गपदान्तम् । **'पूर्वम्'** इति परावस्था अपि उपलक्ष्यते बीजे सति एव अङ्कुरोऽस्तीत्यनेन बीजानन्तरैकक्षणमात्रसत्ता-स्वभावस्य उक्तत्वात् । ननु कस्मादेतत् परमतं न अङ्गीक्रियते । आह **'यतः'** इति । **'यद्यपिच'** इति परमते । **'तथापि'** इति अस्मन्मते । वृत्तिं व्याचष्टे **'सिद्धा'** इत्यादिना । वृत्तौ सत्स्व-भावताया अपूर्वत्वं यदलब्धमसतः इत्येतत्सन्निधानात्, तेन सह विरोधः सिद्धायाः सत्ताया व्याख्यातः । ननु एवं सूत्रेऽपि विरोध एव वक्तव्यो, न निष्प्रयोजनत्वम् । सत्यमभ्युपगमवादे-न तु सूत्रं मा भूद्विरोधस्तथापि नैरर्थक्यमिति । अत एव सूत्रानु-सारेण व्याख्यान्तरं वृत्तेः करोति **'यद्वा'** इति । **'विरुद्धा'** इति पूर्वेण न अभिसम्बन्धोऽत्र कर्तव्य इति यावत् । **'तथापि च'** इति अनुचिते द्वैगुण्ये सति अपीत्यर्थः । ननु सा द्वितीया सत्ता पूर्वसत्ताया अविशिष्टा, तत् कथमसत्कार्यता । तर्हि तया अन्यया किम् । एतदाह **'पूर्वसत्तायास्तु'** इति । **'दूर'** इति । सत्कार्यवादो हि स्वदर्शने शक्यावतारणस्तावत् । **'अत एव'** इति । एतच्च

'भावाभावावभासानां बाह्यतोपाधिः······ ।' ( १।८।५ )

इत्याद्युद्देशेषु दर्शितमेव । नियतैकरूपतावलम्बनेन तु विरोध उप-

पादितः । '**इन्द्रियद्वयवेद्यता**' इति स्फुटपरिपूर्णाभिमतार्थ-क्रियाकार्याभासतेति यावत् ॥ ३—४ ॥

अमुना विचारेण प्रकृतमपि सिद्धमिति दर्शयति

**एवमेका क्रिया सैषा सक्रमान्तर्बहिःस्थितिः ।**
**एकस्यैवोभयाकारसहिष्णोरुपपादिता ॥ ५ ॥**

सैषेति या स्वरूपत आश्रयतश्च चिरमुपलब्धा परैः, सा अधुना विजयते साम्राज्येन । तथाहि संविद्रूपादान्तरात्प्रभृति बहिष्करणविषयत्वापत्तिपर्यन्तायां स्थितौ सक्रमत्वमुचितमेकाश्रयतादात्म्याच्च एकत्वमस्याः । एकश्च असावाश्रयः संविद्रूपो भगवान् स्वच्छन्दत्वस्वच्छत्वाभ्यां सहते एव उभयमन्तर्बहीरूपम् । '**एकस्य**' इति कर्तुः कर्मणश्च । कर्तृस्थकर्मस्थत्वेन हि प्रसिद्धा क्रिया, कर्मणोऽपि अन्तर्बहिरुभयाकारसहत्वं परामर्शाभेदात् । '**अन्यकर्तृक**' इति पूर्वमेव अस्माभिरेतत् व्याख्यातम्, ततो न पुनर्लिखितम् । '**अर्थसंवेदनस्य**' इति ज्ञानरूपस्य । '**स्वसंवेदने तु**' इति प्रमातृरूपे । ननु सुखादिनिर्माणेऽन्तरवस्थैव अस्ति, न बहिरवस्था; तत् क्रमिकत्वमस्य कुतः । तत्रापि तु अन्तर्बहीरूपता अस्त्येव, विपर्यस्ता तु परमिति निरूपयति '**सुखादीनाम्**' इति । आदिपदात् वैकल्पिकघटादीनामयमेव विधिः । '**प्राक्**' इति । एतच्च पूर्वमुक्तं शब्दादीनामेव सुखादितेति उपपादयता 'पञ्चब्रह्मन्यासेऽपि हि' इत्यत्र । शब्दाद्यनपेक्षतायामपि सक्रमत्वमुपपादयति '**सुखादि वा**' इति । अत्रैव स्वदर्शनसिद्धं दृष्टान्तमाह '**यथा**' इति । '**करिष्यते**' इति आगमाधिकारप्रारम्भे । नहि सुखस्य इष्यमाणतायां य एव आभासः, स एव लाभे लाभानुपयोगापत्तेरिति यावत् । '**तद्भेदात्**' इति आभासभेदादेकस्यैव कर्मणः । '**अनेक**' इति आभासभेदयोगे-

ऽपीत्यर्थः। सर्वैव तावत्क्रिया कर्तृस्था, काचित्तु कर्मण्यपि; विशेषदर्शनातिशयात् कर्मस्था उच्यते। 'साधारण्येन व्यपदेशा भवन्ति' इति तद्यथा पाकः। तथाच कर्मभेदात् तस्य भेदो वक्ष्यते, नतु गमनस्य कर्मणि विशेषानाधानात् कर्तृस्थस्य। निर्माणक्रिया तु कर्मणि विशेषमादधाना अपि कर्मणोऽपि प्रकाशमानस्य संविदात्मकप्रमातृसारत्वात् तुल्यकक्ष्यतयैव कर्तृस्था कर्मस्था च उक्ता। **'पाकक्रियायाः'** इति एकनरपतिमहानसगतायाः। ननु भिन्नाश्चेत्क्रियाः, कथमेकशब्दाभिधेया इत्याशङ्क्य आह **'केवलम्'** इति। अत एव उक्तं 'न तिङन्तान्येकशेषं प्रयोजयन्ति' इति। ननु आश्रयैक्येनैव किमस्याः समर्थितेन, स्वरूपत एव इयमेका अस्तु। आह **'क्रियाया हि'** इति। ननु कर्मलक्षणाश्रयैक्यादेकत्वे क्रियायाः कर्त्रैक्यं किमिति कार्यभारे समभिषिच्यते येन **'तस्य कस्यापि'** इति कर्तृस्वरूपनिरूपणप्रसङ्गेन इदमुक्तमेकानेका क्रियेति। अत्र उच्यते **'कर्मणोऽपि हि'** इति परामर्शबलात् हि कर्मण एव ऐक्यमुक्तं क्रियापूर्वापरभागयोगेन भिन्नाभासस्य अपि। परामर्शश्च कर्तुरेव अनुव्यवसाययोगेन भिन्नानामाभासानामनुसन्धानलक्षण इति कर्तैव भगवान् प्रधानत्वेन उक्तः॥ ५॥

ननु अचेतने बीजे क्रियाशून्यतया शुष्कैव कारणता युक्ता। नेत्याह

**बहिस्तस्यैव तत् कार्यं यदन्तर्यदपेक्षया।**
**प्रमात्रपेक्षया चोक्ता द्वयी बाह्यान्तरस्थितिः॥ ६॥**

बाह्यताभासनमेव निर्माणम्। यच्च वस्तु यमपेक्ष्य बहिष्करणीयमुच्यते, तत् वस्तु तस्यैव कार्यम्; प्रमातारं च अपेक्ष्य बाह्यान्तारूपतेति बीजादेर्नैव कारणता जडस्य। तथाहि वशनं

समर्थयितृत्वं प्रभावो बलं स्वातन्त्र्यमितीदमिच्छारूपं चित्सम्बन्धि एव । तत्तु नियतिशक्तिपुरःसरीकृते शरीरकल्पे इव चिद्रूपस्य जडे बीजादावौपचारिकं तद्वशात् तत्सामर्थ्यादित्यादि व्यवह्रियते, नतु जडस्य वशादि किंचित् । कल्प्यमानापिवा नैका भवेदिति सम्बन्धः । अपितु तत्तद्देशादिजाततेत्येवंरूपैव भवेदिति यावत् । कल्पनामाकारतो दर्शयति '**बीजम्**' इत्यादिना । एवकारं सौत्रं व्याकर्तुं पूर्वपक्षयति '**एवमपि**' इति । अत्र उत्तरम् '**एतत्**' इति बाह्यतायामपि आन्तरत्वमत्रुटितमिति नियमग्रहणम् । नच बीजापेक्षया आन्तरत्वं संभावनीयमित्याशयेन आह '**चिद्रूपमपेक्ष्य**' इति चिद्रूपाभेदसंक्रान्ततयैव तु बीजान्तर्गमनमपि सह्यमिहेति आशयः । '**कुलालादेरेव**' इति चिरगुणितात् जडकारणवादात् निवर्तित इयत् तावत्परोऽवबुध्यतामित्येव युक्तम् । कुलालस्यापितु परमेश्वरसंवेदने एव विश्रान्तिरिति तत्त्वम् ॥ ६ ॥

कार्यं चेत् न जडस्य, ततः कारणं न जडे इति सिद्धं संविद एव कारणत्वम्; तच्च क्रियात्मकमेवेति सूत्रं

**मातैव कारणं तेन स चाभासद्वयस्थितौ ।**
**कार्यस्य स्थित एवैकस्तदेकस्य क्रियोदिता ॥ ७ ॥**

आभासद्वयं बाह्यान्तरतया । '**अर्थतया**' इति पूर्वानुभूतबाह्यरूपपरामर्शैक्येनेति यावत् । तेन पूर्वानुभव एव अत्र प्रथमाभोगमात्रम् । यथोक्तं प्राक् 'सुखादीनां बहिराभासपूर्वोत्तराभास' इति । यदिवा अर्थतयेति स्फुटरूपया प्रमातृभागात् पृथक्त्वेन । यथोक्तं

'विकल्पे योऽयमुल्लेख................ ।' ( १।८।८ )

इत्यादि । तदा च बहिश्चिकीर्षामात्रं प्रथमाभोगः । एतच्च सुखादावपि योज्यम् ॥ ७ ॥

एतदेव द्रढयति

**अत एवाङ्कुरेऽपीष्टो निमित्तं परमेश्वरः ।**
**तदन्यस्यापि बीजादेर्हेतुता नोपपद्यते ॥ ८ ॥**

सत्यपि ईश्वरे कारणे ततोऽन्यस्य अपि ईश्वरादतिरिक्तस्य जडस्य या हेतुता तैरुपगता, सा न संभवति अप्रेक्षापूर्वकारिण इति । सन्निवेशो हि नाम सजातीयविजातीयताविभागोत्थापको घटशरावकुण्डादौ मृदुपादानसंभावी संभूयनिविष्टतारूपश्चिद्रूपकार्य इति एकवारमवलोकिते सर्वत्र सन्निवेशेन तथैव भाव्यमिति एकान्त एव अयम् । यत्तु उच्यते—तददर्शनेऽपि तत्कृतत्वप्रतिपत्तिरित्यादि, तत् स्वदृष्टिपक्षपातव्यामोहव्याहृतं धूमेऽपि समानत्वादस्येति अलमवान्तरेण । एतत् हि ग्रन्थकारेणैव वितानितमीश्वरसिद्धौ, इहतु एष परमार्थः—ईश्वर एव नियतिशक्तिं निजामनुरुन्धानो बीजभूमिजलाभासपुरःसरीकारेण अङ्कुरात्मानं स्वच्छे स्वप्रकाशे निर्भासयतीति ॥ ८ ॥

सर्वत्र चेतनेन विना न जडस्य कारणता, चेतनश्च कर्ता ईश्वर एव पर्यवस्यतीति सूत्रेण आह

**तथाहि कुम्भकारोऽसावैश्वर्यैव व्यवस्थया ।**
**तत्तन्मृदादिसंस्कारक्रमेण जनयेद् घटम् ॥ ९ ॥**

कुम्भेति निदर्शनं व्याप्तिघटनाय । चेतनमन्तरेण चेत् जडानामेव पूर्वोत्तररूपतामात्रं कार्यकारणभावः, शिविकस्तूपकादावपि किं कुम्भकारेण; ततश्च उपसर्पणप्रत्ययोऽपि चेतनो न क्वचिदपेक्ष्येत । सोऽपि हि देशात् देशान्तरनियमनाय व्याप्रियते । तदेवच सन्निवेश उच्यते । ततश्च अयं प्रयोगः—यदचेतनं कार्यकृत्, तत् चेतनापेक्षं मृदादि इव, तथाच बीजादीति स्वभावः । कादाचित्कं हि जडस्य कार्यकारित्वं, न अनिमित्तं, न अन्यनिमित्त-

मिति व्याप्तिसिद्धिः । ततश्च कुम्भकृदेव तत्र ईश्वरो यतस्तं तं मर्दनप्रगुणीकरणपरिवर्तनादिकं मृद्दण्डचक्रादिकस्य संस्कारं कुर्वंस्तत्क्रमेण शिविकस्तूपकादिना घटं जनयतीति नियोग एषः । ईश्वर एवच तथा नियतिशक्तिस्वीकृततथारूप्याभासः कुम्भकृद्वा कुविन्दो वा,—इति सर्वत्र स एव कर्ता, अन्यथा कुम्भकृतः इच्छां मृद्दण्डादयः कथमनुवर्तेरन्, तन्तवोऽपिवा पटकरणाय किं न अनुवर्तेरन् । कुम्भकृतस्तु यः कर्तृत्वाभिमानो नियतो धर्माधर्मादिस्थितिः, सोऽपि ईश्वरव्यवस्थयैव स्पष्टाभिमानोत्थापिकया प्रतिभुव इव अधमर्णभाव इति सर्वत्र भगवानेव कर्तेति सूत्रार्थः । चेतनसन्निधिमन्तरेण कार्यानुत्पाद इत्याशयेन यदि ईश्वरः कर्ता इष्यते, बीजादावस्ति एवम्; घटादौ तु कुलालादेर्बुद्धिमतः सन्निधिरस्त्येव, तत् कथं सर्वत्र ईश्वरः कर्तेति यो मोहस्तन्निवारणतात्पर्येण सूत्रमवतारयति **'बुद्धिमत्'** इति । **'उदाहृताम्'** इति **'तथाहि'** इति निदर्शनोपक्रमेण उक्तामित्यर्थः । **'विवृणोति'** इति सकलेन वृत्तिवाक्येन एकदेशसूचितेनेति मन्तव्यम् । बुद्धिमति स्थिते विशेषो वाच्य इत्यनेन आशयेन वाक्यस्य भागदेशेऽभिप्रायं व्याचष्टे **'अनेन हि'** इति कुम्भकाररूपाभिधायिना एकदेशेन । ननु एवं सति बुद्धिमति किमन्यदीश्वररूपात् विशेषान्तरादपेक्ष्यमिति भ्रमं ध्वंसयति **'बुद्धिमानपि'** इति । **'संस्कार'** इति मन्दरादिके स कुम्भकार उपयुज्यते। ननु संस्कृतात् मृदादेर्घट उत्पद्यते, किमीश्वरताविशेषेण । अत्र अपि आह **'संस्कारोऽपिच'** इति । **'संस्कृतेऽपि'** इति संस्कृतत्वेन इष्यमाणे मृदादौ सन्नपि कुम्भकारो न अनुसन्धातृत्वं चेतनधर्मतां मृदादेराधातुं समर्थः । नच अचेतनस्य कारणत्वमन्तर्बहिराभासक्रमपरामर्शपरमार्थकर्तृत्वसारसु-

चितमिति उक्तं **'पुनरपि'** इति अङ्गीकृतेऽपि कुम्भकृतीत्यर्थः । अनुपयोगित्वे पूर्वोक्तमेव प्रमेयं संक्षेपोक्त्या हेतूकरोति **'संस्कारेऽपि'** इति सोऽपिच न संभवतीति अपिः । **'ततश्च'** इति यदि चेतःपरिस्फुरणमात्रेण कुर्यादित्यर्थः । संस्कारोऽपि अभ्युपगमवादेन अङ्गीकृतः, सोऽपितु न उपपद्यते इत्याह **'नच'** इति । तदिच्छयैव यदि संस्कारस्तर्हि असावाकाशमेव स्वेच्छया संस्कृत्य संकल्पितं विश्वमुत्थापयेत् । ननु भवतु अयमसत्कार्यवादिनं प्रति उपालम्भः, सत्कार्यवादिमते तु किञ्चिदेव कचित्कारणमस्ति; न सर्वं सर्वत्र, ततश्च चेतनमपेक्ष्य सहकारिमात्रं वा चिञ्चिदेव कुतश्चिदुत्पत्स्यते, किमीश्वररूपतया अत्र कृत्यम् । तदपि न सहते **'नच'** इति । नहि चिद्रूपता बीजस्य कदाचित् येन तत्तदन्तर्वर्तिता अङ्कुरस्य भवेत् । **'वक्ष्यते'** इति अत्रैव विमर्शे । परपक्षं सदोषीकृत्य स्वपक्षमुपसंहरति **'तत्'** इति तस्मादुभयस्य अपि चेतनाचेतनरूपस्य उपयोगो यः, स ईश्वरेच्छयेति सम्बन्धः ॥ ९ ॥

चेतनस्य स्वातन्त्र्यं दृष्टमेव कार्यकारणे इति प्रसिद्धेन दृष्टान्तेन आह

**योगिनामपि मृद्बीजे विनैवेच्छावशेन तत् ।**
**घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरम् ॥ १० ॥**

मृद्बीजे विनापीति सम्बन्धः, व्यक्तिप्रधानतया कारणत्वात् जातिपरता उचिता अत्र, न एकवद्भावः । उभयोपादानं लोकप्रसिद्धं जडैकहेतुकं चेतनापेक्षं च उभयमपि कार्यं निदर्शयितुम् । ननु तत्र घटाङ्कुरादौ शब्दसाम्यमात्रं, वस्तुतस्तु अन्यदेव तदिति परमोहव्यपोहनहेतुं विशेषणमाह **'तत्तत्स्थिर'** इत्यादि । तत्तदिति विचित्ररूपम् । स्थिरं च अर्थ-

क्रियाकरं चेति योजना वृत्तिकृता कृता । तां तां विविधाकारां स्थिरामर्थक्रियान्तरानुबन्धिनीं स्वामर्थक्रियां हेतुतच्छीलानुलोमत्वयोगेन करोतीति समासेऽपि न कश्चित् दोषः । योगीच्छापि न उपादानं विना कार्यं कुर्यादिति परमतमनुवदति निषेद्धुं **'न चैतत्'** इति अनूद्य **'यतः'** इति निषेधहेतुं वक्ष्यमाणमुपक्षिप्य तत्प्राणितोपयोगि परमतं सतत्त्वमनुवदति **'यस्मात्'** इति स्वोपादानरूपात् । **'सजातीयम्'** इति ज्ञानं ज्ञानस्य । **'यत्तिरोधान'** इति बीजमङ्कुरस्य । एतच्च यथायोगं समस्तव्यस्ततया उपादानलक्षणं परेषां मतम् । आदिग्रहणादालम्बनं हेतुरधिपतिरित्यादेः परोक्तस्य भेदस्य संग्रहः । यदाहुः

'सतोऽन्ये कारणं हेतुः············· ।'

इत्यादि । परमतं सतत्त्वमनूद्य **'यतः'** इति यो निषेधहेतुरुपक्षिप्तस्तं दर्शयति **'अङ्कुरस्य'** इत्यादिना । मनागपि देशकालाकारसहायादिविशेषव्याप्तप्रसिद्धलोकस्थित्युल्लङ्घनं चेत् सह्यते, किमुपादानपरिग्रहदैन्येन योगिनः; अथ न सह्यते, कुम्भकारभेद एव योगी भवेदिति तात्पर्यम् । **'तेषाम्'** इति योगिनाम् । एतच्च पूर्वोत्तरयोर्योज्यम् । **'सूक्ष्म'** इति एतदभ्युपगममात्रमत्र । तदानींहि परमाणुप्रधानादिदर्शनमनुपकारमेव । तदपिच प्रसिद्धहेतुकमेव उपपाद्यते, नच प्रधानस्य असंवेद्यपर्वत्वेन परमाण्वादेरपि नेत्राद्यगोचरत्वेन प्रसिद्धस्य साक्षात्कारहेतुर्लोकसिद्धोऽस्ति,—इति । ननु सूक्ष्मदर्शित्वमेव योगित्वमस्तु, न अधिकम् । अत्र आह **'सर्व एव'** इति अभीष्टकर्तृतापर्यन्तः । **'सिद्धानाम्'** इति योगिविशेषणं संप्राप्तघटमानादीनां व्यवच्छेदाय । क्रमोन्मिषत्प्रभावातिशया हि योगिनोऽत्र भुवि समस्तनियत्युल्लङ्घनेनैव अभीष्टापादनाप्रतिहतप्रभावाः । **'यतः**

**कुतश्चित्'** कारणकारणात् व्यवहितादपीति यावत् । **'अथ'** इति तस्यां दशायां तदेव कारणम्, नतु तदा व्यवहितकारणं तदितिभावः । **'असतः'** इति शून्यादेव, असतो वा कार्यस्य । कादाचित्कत्वनियमो हि अहेतुकस्य स्वयंनिःस्वभावस्य कुतः । **'सहकारी'** इति दिक्कालाकाशादेः । अथ तत्र व्यतिरेको न उपलभ्यते नित्यस्य अव्यतिरेकत्वादितिन्यायेन, तर्हि योगीच्छैव उपादानमस्तु; योगिनिर्माणमपिच कुविन्दकृतिवत् मायाकृताभिमानमात्रसारमेव वस्तुतस्तदपि ईश्वरनिर्माणमेव यतः । एतत्प्रमेयं प्रकृते योजयति दृष्टान्तत्वेन **'तदेव यथा'** इति । लोकप्रसिद्धमपि दृष्टान्तमुपादाननियमाभावे ब्रूते **'केशादिकं च'** इति तत्परामर्शयोगाच्च न वस्त्वन्तरम् । परेणापिच क्वचित् देशे कानिचित् द्रव्याणीत्यादिषु विनिश्चयादिप्रदेशेषु क्षेत्रकालसंस्कारादिभेदादेकामामलकादिजातिमव्यतिक्रामत एव भावजातस्य रसवीर्यादिना उररीकृतमेव बहुप्रकारं वैचित्र्यं कथञ्चिदिति ह्लादतापादनेन अर्थक्रियाकारित्वं तु भवत्येवेति आशयः । **ततोऽपि'** इति दृष्टान्तात् । तत्र हि प्रसिद्धनिजकारणानादरेणैव स्रष्टृत्वमीश्वरस्य ॥ १० ॥

ननु अधुना विधूतं धैर्यमनुमानस्य । तथाहि अन्यस्य कल्पितस्य अकल्पितस्य च अन्यत्र नियमे निदानं तादात्म्यतदुत्पत्तिलक्षणमक्षुण्णमालक्ष्यते । नहि निःस्वभावो भावः, नापि भिन्नस्वभावः पर्यायशः, एकैकत्यागे हि निःस्वभावतैव । एवमहेतुकत्वे भिन्नहेतुकत्वे च वाच्यम् । उभयमपिच एतत् कारणनियमादेव शिंशपाया वृक्षस्वभावभाज एव कारणादुत्पत्तेर्हुतभुग्विशेषस्य च धूमजननस्वभावभाजः । व्याख्यातनीतिमार्गेण तु समस्तनीतिविप्लवः । योगीच्छया हि शिंशपा अपि अवृक्ष-

स्वभावा भवेत्, कार्यहेतौ तु द्विगुणोऽसौ धूमोऽपि अनग्निजः, अग्निविशेषोऽपि अधूमकृदिति कथं लौकिकमनुमानं स्यादिति । सत्यमेवम्, इत्थंतु एतत् घटते इति सूत्रं

योगिनिर्माणताभावे प्रमाणान्तरनिश्चिते ।
कार्यं हेतुः स्वभावो वात एवोत्पत्तिमूलजः ॥ ११ ॥

यत् कथितमप्रतिहता योगीच्छेति, अत एव हेतोर्योगिनिर्माणताभावे इति विशेषणं प्रमाणान्तरेण यदि निश्चितं भवति, तदा कार्यहेतुः स्वभावहेतुश्च कारणे स्वभावे च अनुमातव्ये हेतुर्भवति, न अन्यथा। ननु स्वभावहेतौ किमेतत् दैन्यम्। नहि तत्र कारणतानियमानियमाभ्यां किंचित्। कथं न किंचित्, यावता स्वभावोऽपि स्वभावान्तरनियतो यो जातस्तत्र उत्पत्तिरेव कार्यकारणभावात्मिका मूलम्। तथाहि

'एकसामग्र्यधीनस्य ··········· ।'

इतिन्यायेन यतो हेतोः शिंशपा अपि अजनि निजात्, तत एव अवृक्षत्वव्यावृत्ता असौ जातेति। ननु विशेषणग्राहि किं तत्र प्रमाणम्। उक्तमेव परैः

'यौक्तिकं मानसं वा प्रत्यक्षं लोकप्रसिद्धिरागमः प्रतिभाविशेषोऽनन्तजन्माभ्यासमूलस्तत्कालघटितो वार्थापत्तिर्वा ।'

इति किमस्माकमनेन संव्यवहारोपयोगिना प्रकृतानुपरोधात् । ईश्वरः स्वप्रकाशो विश्वात्मेति हि कोऽस्य प्रमेयस्य खण्डनावकाशोऽनुमानदौर्बल्ये इत्याहेति सूत्रार्थावतारणम्। '**उपपादित**' इत्यादिकम् '**अत एव**' इत्यस्य सूत्रांशस्य व्याख्यानम्। न एतत्प्रकृतं प्रमेयमस्माकमिति प्रसङ्गपदम्। '**प्रत्येति**' इत्यादिना स्वार्थपरार्थभेदोऽनुमानस्य दर्शितः। इह द्विविधः स्वभावहेतुः स्फुटगर्भितकार्यकारणभावो विपरीतो वा। तत्र आद्यमुदा-

हरति '**अग्निमान्**' इति। धूमवतो हि अग्निमत्त्वं स्वभाव एवं भवेत् यदि धूमोऽग्नेरेव सिद्ध्येत्। द्वितीयमुदाहरति '**शिंशपात्वादि**' इति। '**बौद्धानाम्**' इति काणादादयस्तु भिन्ने एते सामान्ये कथयन्तो न स्वभावतामनुमन्यन्ते। '**साध्यस्य**' इति साध्यं यत् वृक्षत्वं, तस्य या शिंशपामात्रं प्रति अनुबन्धिता तत्सद्भावे सद्भाव एवेत्येवंरूपा, सा कार्यकारणभावेनैव उपपाद्यते। कस्मादेवमिति चेत्, आह '**नहि**' इति। कारणं हि कार्येऽनुबन्धि कार्यसन्निधाववश्यंभाविसन्निधानं युक्तम्। ननु यथा कार्यहेतौ धूमस्य अग्निः कारणम्, तथा किं शिंशपात्वस्य वृक्षत्वं कारणम्। वृक्षत्वात्मकमेवहि शिंशपात्वम्, ततश्च स्वभावहेतावन्यत्वमेव नास्तीति कथमुक्तमन्यदत्रेति। अत्र आह '**अनन्यत्व**' इति। यदि तदात्मकमेव तत्, तदवश्यं शिंशपात्वसिद्धौ तदपि सिद्धमेव भवेत्। यत्किल यत्सिद्धौ न सिद्धं, तत् चेत् तेन तदात्म; तर्हि विश्वं विश्वेन तथा स्यात्। तस्मात् न सिद्धं चेत्, तत् तदवश्यमन्यत्। अन्यस्य च तन्मात्रानुबन्धित्वमन्यत्र न युक्तमृते कार्यकारणाभ्यामिति स्थितमेतत्। ननु अन्यदन्यत्र न स्वरूपद्वारेण अनुबद्धमुच्यते यदि कार्यकारणभाव आपात्येत, अपितु प्रतीतिद्वारेण। यतः शिंशपात्वप्रतीतौ वृक्षत्वं प्रतीयते, ततः शिंशपात्वमात्रानुबन्धि तदुच्यते। एतत् दूषयति '**नच**' इति। शिंशपात्वे हि प्रतिपन्ने वृक्षत्वं प्रतिपित्सुरेवं पर्यनुयोज्यः—किमिति अन्यस्मिन् प्रतिपन्नेऽन्यः प्रत्येतुमारब्धः। स चेदाह—ननु वृक्षत्वप्रतिपत्तिरवश्यं तत्प्रतिपत्तरि भवतीति, तदमुना प्रश्न एव उत्तरीकृतः स्यात्। अथ वस्तुस्वभाव एव अयमपर्यनुयोज्यः इति उत्तरस्य तत्त्वम्, तदा इत्थं पर्यनुयोज्यम्—ननु नालिकेरद्वीपनिवासी अपि कथं तथा न प्रतीयात्,

नहि वस्तुस्वभावः पक्षपातेन उत्तिष्ठति—इति । ननु तेन तन्मात्रानुबन्धित्वमस्य न विदितम् । ननु कस्मात् न विदितम् । प्रतीतिद्वारकं हि तत्, प्रतीतिश्च वस्तुस्वभावत एवेति उक्तम् । कथंच अन्यस्य अन्यत्र प्रतीतिहेतुत्वं प्रतिबन्धमन्तरेण वस्तुस्वभावो भवेत् । भवति चेत्, किमनुमानेन । एतदाह **'वैफल्यात्'** इत्यन्तेन । ननु यदा अयं प्रोन्नतां शिंशपां शाखादिमतीं प्रतिपन्नो वृक्षरूपामपि, तदा तन्मात्रानुबन्धिप्रतीतिकत्वं वृक्षत्वस्य कालान्तरे वामनां शिंशपां पश्यन् प्रोन्नतत्वमपश्यन् व्यामोहात् वृक्षत्वमत्र अनवबुध्यमानः स्वयं वा परप्रसादात् वा प्रबुद्धो वृक्षत्वं तन्मात्रानुबन्धिप्रतीतिकत्वेन अनुसरति, तदनुसरणेन व्यवहितवृक्षत्वावबोधोऽनुमानमुच्यते । एतदपि आशङ्क्य निरस्यति **'अथ'** इति प्रोन्नतायामपि शिंशपायां कथमयं वृक्षत्वं प्रतीयात् । तत्स्वभावत्वादिति चेत्, पक्षेऽपि तत्स्वभावत्वादेव प्रतीयादिति व्याहन्येत अनुमानम् । नहि सपक्षे दृष्टान्तेऽनुमानसंभवोऽनवस्थापातात् । तदेतदाह **'सपक्ष इव'** इति एवं तन्मात्रानुबन्धिप्रतीतित्वादन्यदन्यत्र तन्मात्रानुबन्धि भवतीति दूषितमङ्गीकृत्य अपि प्रतीतिद्वारेण तन्मात्रानुबन्धे दूषणान्तरमाह **'प्रतीत्यनुबन्धोऽपि'** इति । अन्यदन्यत्र नियमेन प्रतीतिं करोतीति हि प्रतीत्यनुबन्ध उच्यते । तत्र एष नियमः कथं प्रतिबन्धमन्तरेण । ननु सति एव प्रतिबन्धे प्रतीत्यनुबन्धो भविष्यति, को दोषः । आह **'अनुमेयतामात्रं च'** इति । तन्मात्रानुबन्धी प्रतीतिद्वारेणेति कोऽर्थः, हेतुना अनुमातव्य इति यावत् । एतच्च रूपं कार्यहेत्वनुमेयस्य अपि अस्तीति

'तद्भावमात्रान्वयिनिःस्वभावो हेतुरात्मना ।'

इति

'हेतुः स्वभावो भावे वा भावमात्रानुबन्धिनि ।'

इति च स्वभावहेतोरेव यो विषयद्वारेण विशेष उच्यते, स न स्यात् । तस्मादाभासपृथक्तया तथैव वस्तुत्वात् वृक्षत्वशिंशपात्वयोरन्यत्वमेव परमार्थतः, परमेश्वरनियतिशक्त्यपेक्षेण तु कारणेन शिंशपाभासो वृक्षत्वाभासेन सह मिलितः सृष्ट इति यत् पूर्वमुक्तं

'पृथग्दीप.............................. ।' ( २।३।७ )

इत्यत्र, तदवलम्बनेन स्वभावहेतुरुच्यतां नामेति इयतो ग्रन्थस्य आशयः । ननु सर्वोऽयमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेनेति उक्तम्, ततश्च यद्यपि स्वलक्षणमनंशं, तथापि

'यावन्तोऽर्थसमारोपा................ ।' (प्र०वा०१।५१)

इत्यनेन न्यायेन अशिंशपात्वात् या व्यावृत्तिर्या च अवृक्षत्वात् तयोर्व्यावृत्तिमूलतया व्यावृत्तस्य च ऐक्यात् तादात्म्यमुच्यते, काल्पनिकस्तु भेद इति को दोषः । एतत् न क्षमते **'काल्पनिकोऽपि'** इति । इह व्यावृत्ती यदि वस्तु, यदि अवस्तु, तयोस्तर्हि कथं परस्परं व्यावृत्तेन वा सह तादात्म्यं भवेत् घटपटवत् शशशृङ्गखरशृङ्गशकटवच्चेति; भेदोऽपिच नानात्वलक्षणः कथमवस्तुनोर्व्यावृत्त्योश्च ययोर्गम्यगमकता तयोरेव तादात्म्यं वक्तव्यं तदुत्पत्तिवत्, नतु वस्त्वन्तरेण सह तयोः । नहि घटपटयोर्वस्त्वन्तरेण सह कार्यकारणभावोऽस्तीति कृत्वा गम्यगमकभावो युक्तः । अतः कल्पनया यदेकमेव विश्वसितं वस्तु, तस्य भेदाभावात् न गम्यगमकता । अथ सा कल्पना वस्तुनि न पर्यवसाय्यते, व्यवसायबलेन तदा वस्तुनः सिद्धिः; अवस्तु च न किञ्चिदिति वस्तुनो न सिद्धिर्न काचन असिद्धिरिति उक्तं स्यात् । एतत्स्ववचनेनैव परं बोधयति **'वस्तुनः'** इति । इयत्तु स्वभावहेतुं प्रति यदस्माभिरुक्तं प्रमेयं, तत्परैरपि अनक्षरमुपगतमेवेति

दर्शयति **'अत एव'** इति उक्तात् प्रमेयात् । अयं हि स्वभावहेतुः परेषां संमतः । तत्र गोत्वमेव साध्यं युक्तं यत् स्वभावो हेतुर्नतु व्यवहारः । स हि अस्वभावभूतोऽन्यत्वात् । व्यवहारविषयता नाम स्वभाव इति चेत्, एतत् विकल्पितं नच उपपद्यते । तस्मात् व्यवहारः साध्यते इतिवदतां स्वभावस्य सिद्धत्वे तत्स्वभावभित्तौ वस्त्वन्तरमेव साध्यं, नतु स्वभाव एवेति हृदये परिस्फुरितमेव । ननु कार्यहेतावपि सर्वत्र व्यावृत्त्योरेव विशिष्टयोर्गम्यगमकभावो धूमधूमध्वजादाविव, तत्कोऽयं स्वभावहेतौ दूषणसंरम्भः । अत्र आह **'व्यावृत्ति'** इति अनग्निव्यावृत्तिमुखेन बाह्य एव वह्निः सिद्ध इति अध्यवसायः । यदाह

'प्रामाण्यं वस्तुविषयम्············ ।'

इति । स्वभावहेतौ तु किं सिद्धमनुमानेनेति न विद्मः । न वस्तु तस्य साधनाध्यवसायेनैव अध्यवसायात्, न व्यावृत्तिस्तस्या अवस्तुत्वात् । एवं परमतं दूषयित्वा स्वमतमेव परमभ्युपगमयति **'तदेवम्'** इति । **'कल्पनाविषयोऽपि'** इति विकल्पस्य न निर्विषयत्वमेषितव्यम् । ततश्च आभासौ द्वौ विकल्पितौ, तौ भिन्नावेव; एकस्वलक्षणतापन्नौ तु कथितनयेन । तत्र च नियत्युपजीवी कार्यकारणभाव एव मूलमिति आभासनिकुरुम्बात्मकस्वलक्षणवादेन स्वमतेन स्वभावहेतुः समर्थितः । अधुना निरंशस्वलक्षणवादेऽपि अभ्युपगमवादेन अङ्गीकृते स्वभावहेतावश्यं कार्यकारणभाव उपजीवितव्य इत्यस्य प्रमेयस्य अतिदार्ढ्यं निरूपयति **'तथास्वभावत्वात्'** इति भिन्नमपि अन्ये कथयन्ति । एकमपि भेदयन्ति, तमेव भेदितमध्यवसायेन एकयन्ति हि विकल्पानां स्वभावाः । ततस्तथाविधविकल्पाध्यवसायबलेन गम्यगमकभावश्च तादात्म्यं च भविष्यति सर्वव्यवहाराणाम-

ध्यवसायमुखप्रेक्षित्वात् । अत्रापि उच्यते **'तथापि'** इति । **'भिन्न इव'** इति अध्यवसायबलेन शक्यभेदने इति यावत् । इयता गम्यगमकभाव उक्तः । **'निरंशमेव'** इति स्वभावहेतुत्वमुक्तम् । एतत् परकीयमनूद्य स्वाभिमतं तदुत्पत्तिमूलमेतत्प्रमेयपृष्ठे योजयति **'तथाच'** इति । स्वोक्तिमेव स्फुटयति **'हेतुः'** इत्यादिना । स्वभावहेतौ समव्याप्तिके तन्मात्रानुबन्धवैचित्र्यं नास्ति, विषमव्याप्तिके तु अस्तीत्याशयेन आह **'नतु'** इति । **'हेतोः'** इति जनकस्य हेतोर्या कृतकं प्रति कारणता, सैव क्षणिकत्वं तत्र निवेशयति । शिंशपाबीजस्य विशिष्टस्य या शिंशपां प्रति बीजता शिंशपाकारणता, सैव वृक्षत्वं तत्र निवेशयतीति गमकं स्वभावं प्रति गम्यस्य तन्मात्रानुबन्धित्वं सिद्धं भवतीति यत्कार्यहेत्वनुमेये नास्ति । नहि धूमकारणमेव अग्निं साध्यं निवेशयतीति । धूमकारणता हि अग्नेरेव, अग्निलक्षणकारणबलादेवच शिखरिणो धूमवत्त्वम्, नतु तत एव अग्निमत्त्वम्; तद्धि इन्धनादिहेत्वन्तरबलादिति न अत्र तन्मात्रानुबन्धः । तद्यदेव तदेव तदवश्यमेवेत्येवंभूतो हि तन्मात्रानुबन्धो विवक्षित आचार्यस्य, नतु तस्मिन्सति सोऽपीति कथं कार्यहेतौ तादात्म्यमूलत्वं स्यादिति । तेन यत् भट्टेन प्रतिबन्धसिद्धौ स्वभावप्रतिबन्धस्य प्रधानत्वं समर्थितं, न तत् न्यायमनुयातीति दर्शितम् । अतश्च तन्मात्रानुसारेण यो ब्रूते धूमवतोऽग्निमत्त्वमसाधारण आत्मभूतः स्वभावो लक्षणमिति, स प्रत्युक्तो वेदितव्यः । तान्त्रिकहेतुलक्षणसमर्थनाय प्रयोगबलावभासितसामानाधिकरण्याध्यवसायवशादयं स्वभावत्वाभिमानो, नतु वास्तवमत्र स्वभावत्वम् । तथाहि वस्तुतो धूमे दृष्टे अग्निः प्रतीयते । नच धूमस्य अग्निर्लक्षणम् । अग्निजन्यता लक्षणमिति चेदस्तु तावदेवमग्नेस्तु

इयता का लक्षणता । नच अग्निजन्यता अनुमेया, अपितु अग्निरेव शीतापनोदपाकाद्यर्थिनां परमार्थतोऽनुमेयः । तदर्थितापूरणं हि न धूमस्वभावादग्निजन्यात्, अपितु अग्नेः, नच धूमवतोऽग्निमत्त्वं लक्षणमिति युक्तम् । धूमवानिति हि किमुच्यते, धूमः पर्वतश्चेति हि सौगतमते, काणादे तु संयोगसमवायादृष्टादिकमधिकम् । एवमग्निमत्त्वमिति चिन्त्यम् । तदा अनयोरुभयोः पक्षयोर्भागशो द्विशः त्रिशः सर्वशश्च विकल्प्यमानं स्वभावत्वं कथं संगच्छेत अन्यस्य अन्यं प्रति स्वभावत्वाभावात् । समवायैकतया पार्यन्तिक्या तथाभिमाने न किंचित् कस्यचित् स्वभावो भवेत् । लक्षणं च स्वभाव एव उच्यते यो विजातीयेभ्यो व्यावृत्तिमस्य ज्ञापयति लक्ष्यतेऽनेनेति कृत्वा, नतु उत्पत्त्युपयोगिनि लक्षणव्यवहारः; तथात्वे वा निमित्तमेव लक्षणमिति परकीयं तन्मात्रनिमित्तत्वं दूषयित्वा यत् तन्मात्रलक्षणत्वमङ्गीक्रियते, तेन किमधिकं कृतं स्यात् पर्यायेण अभिधाने वस्तुनि अभेदात् । नच स्वभावमात्रस्य अपि लक्षणता, अपितु ज्ञापकस्य । ज्ञापकश्च प्रमाणसामग्रीमध्यनिवेशी युक्तो, न प्रमेयः । ततश्च

'ज्ञाप्यस्य लक्षणं च················ ।'

इति दुरधिगतधर्मोत्तरमतानुसारेण यदुच्यते, तदसदेव । तथाहि प्रत्यक्षस्य ज्ञानविशेषस्य ज्ञानान्तरादनुमानादेर्यत् व्यावृत्तरूपज्ञापकं लक्षणं निर्विकल्पाभ्रमरूपम्, तत्र विप्रतिपत्तिनिराकरणाय उच्यते लक्षणं विधीयते लक्ष्यमनूद्येति । यदेवंभूतं लक्षणमस्य प्रसिद्धं लोके, तत् हि मूढानां न विदितं विप्रतिपत्तिस्थानमिति शास्त्रेण व्युत्पद्यमानत्वात् विधेयमुच्यते । यथोक्तं प्राक्

'प्रसिद्धानि प्रमाणानि················ ।'

इति

'.................शास्त्रं मोहनिवर्तनम् ।'

इति च । नच एवमनुमानकाले धूमवत्तावलोकन एव वह्निमत्त्वं प्रसिद्धं येन अत्रापि मोहनिवर्तनमात्रफलत्वेन लक्षणं व्याप्यं भवेत् । तन्मात्रशब्दान्तरप्रयुक्तेन च निमित्तशब्देन किं दुष्यति, किंच पुष्यति लक्षणशब्देनेति न विद्मः पर्यनुयोगस्य परिहारस्य साम्यात् । तथाहि एतन्मात्रमस्य निमित्तमिति कुतः । यत एतन्मात्रमस्य लक्षणम्, तत्र यदि कश्चिदाह एतन्मात्रमस्य लक्षणमिति कुत इति, तदसौ यदि एवमुच्यते—एतल्लक्षणाभिमतराशिव्यतिरिक्तो यो द्वितीयो राशिः, स यतोऽस्य लक्षणं न भवति असंभवाव्याप्त्यतिव्याप्तिदोषयोगादिति; तर्हि एतावन्मात्रमस्य निमित्तं यतो निमित्तान्तरमस्य न भवति असम्भवादियोगादित्युच्यमाने किं वदनं वक्रिम्णा विक्रियेत । लक्षणत्वनिराकरणेऽमी दोषाः प्रसिद्धा इति चेत्, किं निमित्तत्वनिराकरणे न प्रसिद्धा असंभवादिदोषेषु निमित्तत्वानुपपत्तेर्लोकप्रसिद्धत्वात् । यद्यत्किल दुष्यते किंचित्, तत् दोषप्रसंजनेन, दोषाश्च अमी सर्वत्र असंभवादय इति किमेतदपूर्वम् । तथाहि न शब्दस्य पृथिवी समवायिनी तस्यां सत्यामपि असंभवादसत्यामपिच संभवात् तस्येति असम्भवाव्याप्त्यादय एव प्रसङ्गसाधनत्वेन दोषतया उद्भाव्यन्ते । लक्षणं च भावस्य न एकः स्वभाव एव कार्यकारणसहचारिप्रभृतेरव्यभिचारिणो लक्षणत्वात् । तत्कारणत्वादिस्वभाव एव लक्षणमिति चेत्, न तस्य लक्षणीयत्वात् । किंच धूमवत्त्वस्य अनग्निमत्त्वं लक्षणं न भवति असंभवादिप्रसङ्गादिति तावल्लक्षणत्वाभावस्तद्व्यवहारो वा साध्यः । तत्र कचित् तस्यैव साध्यता यथा अनुपलब्ध्यन्तरेषु । तत्र न तावदत्र प्रत्यक्षत्वं लक्षणत्वाभावस्य तथात्वेऽसम्भवाद्युपन्यासायोगात् । तदयमानुमानिको

भावनिश्चयो वक्तव्य इति पुनरपि तदेव आयातं यत् चिरन्तना मन्यन्ते—बाधकप्रमाणेन अनिष्टराशेरपाकरणमिति । ननु अनुमानेऽनवस्था, किं नु खलु नामधेये परिवर्तिते वस्तुदोषाः शाम्यन्ति असंभवादयो, युक्तिरित्युक्तावपि हि किंवाऽनवस्था । तथाहि असंभवोऽनग्नौ धूमस्येति संभवस्य अभावः, संभवश्च नाम धूम एवोच्यते धूमस्य स्वकारणं सत्ता, समवायो वा । तस्य च अभावो यदि संवेदनस्वभाव आन्तरोऽनुपलब्धिरूपस्तर्हि स्वसंवेदनप्रत्यक्षत्वमदः, बाह्यस्तु यः, स वस्त्वन्तरात्मा प्रमाणान्तरेण स्वेनैव प्रत्यक्षादिना ग्राह्यः । तत्र च यत् निमित्तत्वे सार्वत्रिकत्वादि चोद्यते, तदत्रापि शक्यचोदनं यदि नाम कुड्येऽनग्नौ न संभवो धूमस्य दृष्टोऽनग्न्यन्तरेऽपितु पिशाचस्थानीयस्य संभवो न भविष्यतीति कुत एतत् । ननु यदि तत्रापि असंभवः स्यादिहैव तदभावे न धूमस्य संभवः स्यात् । अत्र एतदेव तावत् चिन्त्यम्—स कश्चिददृश्यः पिशाचस्थानीयोऽत्र नास्ति यो धूमस्य इह जनक इति कुतो गतिः । अथ उच्यते तादृशात् चेत् कुतोऽपि धूमः स्यादग्निरपेक्षणीयोऽस्य न भवेदित्यग्न्यभावेऽपि स्यात्, नच एवमिति हन्त तर्हि व्यतिरेकग्राहि इदमनुपलम्भलक्षणं प्रमाणमिति प्रत्यक्षानुपलम्भपञ्चकादेव अस्मद्दर्शनोचितान्तर्मुखस्वसंवेदलक्षणस्वतन्त्रात्मतत्त्वविश्रमादेव कार्यकारणभावसिद्धिः । तत्रापिच सार्वत्रिकतानिश्चये व्यवहारतो व्युत्पत्तितो वा आगमाद्वा स्वप्रतिभाया वा जन्मान्तराभ्यासोदितायाः समवधारिता भगवन्नियतिशक्तिरेव प्रभवन्ती निरूपणीया, नतु असंभवादयः । तेऽपिच उद्भाव्यमानाः प्रसङ्गसाधनरूपाः स्वपर्यायेण अभिमतं साधयन्तोऽनुमानतां न अतिवर्तन्ते । नहि साधनदूषणे कदाचिदप्रमाणात्, साधुतां दुष्टतां च सम्यगवबोधयत् साधनं दूषणं च, अवबोधकतैवच प्रमा-

णता। यच्च उच्यते—व्यक्तिद्वयदर्शनादेव कारणांशानां कार्यांशेषु व्यापारोऽवधार्यते, पलालप्रभवाणि हि वह्निसहस्राण्यपि एकैव व्यक्तिरिति; तत्र इदमपि शक्यं वक्तुं पलालकाष्ठसंभवगोमयोद्गत-वह्निसहस्रदर्शनेऽपि एकैव सा वह्निव्यक्तिरिन्धनोद्भवा नाम दृष्टा भवति शक्रमूर्धसूर्यकान्तप्रभवाणां व्यक्तीनामदर्शनात्, ततश्च इन्धनमपि वह्नेः कथंकारं कारणतामियात् तासामपि दर्शनेऽनि-न्धनानामन्यासामदर्शनमपि संभाव्येतेति अनग्निस्वभावः शक्रस्य मूर्धा चेति अव्युत्पत्तिविजृम्भितमेव। एवमसंभवादीनामपि न सार्वत्रिकत्वेन निश्चयोपायोऽस्ति। अथ समस्तलोकप्रसिद्ध्या यो व्युत्पन्नः, स एव प्रामाणिकोऽनुमानेऽधिकारीति उच्यते; तर्हि सा नियतिशक्तिरेव। किंच असंभवादिभिरलक्षणत्वमित्थं व्याप्यते यदि सम्भवेन व्याप्त्यानतिव्याप्त्या च लक्षणत्वं व्याप्यते। तथाच सति व्यापकानुपलम्भादेव लक्षणनिश्चय इति अनुमानात् न उत्ती-र्यते। ननु अनुमानमवस्थापादकं ततः किमसम्भवादयो निह्नु-तानुमानशब्दाभिधेयभावाः प्रतिपत्तयेऽङ्गं भवन्तोऽप्रमाणभूता एव, अप्रमाणाच्च का वस्तुसिद्धिः, प्रमाणं वा ते कतमदिति। ननु भवान् ब्रूताम्—यथा एतत् सिद्ध्यतीति, न चेत् वक्तुं शक्नोति, तर्हि असम्भवादय एव अस्मदुक्ताः स्थिरीभूताः। तदनेन वचसा सत्यं प्रथमश्रावकाः प्रत्याख्यन्ते, न चिरन्तनाः। तथाहि ब्रह्म-णोऽहमौरसः पुत्र इति रथ्यापुरुषेण उक्ते कश्चित्पर्यनुयुङ्क्ते—किमत्र प्रमाणमिति। स आह ननु उत्पन्नस्तावदहं, नच अहेतुकः। यदिच भवान्पितरमन्यं मे प्रदर्शयति, तत् तमेव अङ्गीकुर्वे; न चेत्, मदुक्तिरेव इयमोमिति प्रतिपूजनीया च अमृतरसवदाद-रणीया चेतिवचःसब्रह्मचारिवचनमिदम्। असम्भवादीनां च लक्षणत्वेन सह विरोधो ग्रहीतव्यः। सच इत्थं भवति—यदि

असंभवादयो लक्षणत्वस्य व्यापकास्तेषां च व्यापकत्वमसम्भवान्तरादिभिर्ग्रहीतव्यमिति सैव अनवस्था । अनवस्थेतरेतराश्रयसाङ्कर्यप्रभृतयश्च ये दोषा उच्यन्ते प्रमाणपरिदृष्टमन्योऽन्याश्रयमवस्थितमसंकीर्णं च भावस्वभावमपेक्ष्य अत्यन्ताभावरूपाः सन्तोऽपि बुद्ध्या उल्लिख्यमाना अभूतं भूतस्य, अभूतस्य वा भूतमभूतस्य भूतस्य वा गमकमितिन्यायेन हेतुतां गच्छन्तो व्याप्तिसिद्धये प्रत्यक्षादिप्रमाणान्तरच्छायातः कथमिव मुच्यन्ते । तथाहि भगवाननन्तनाथः

'इतरेतराश्रयाणि च न कल्पन्ते ।'

इत्युक्त्वा दृष्टान्तं प्रत्यक्षप्रमाणोपजीवनाय अवोचत्

'नहि नौर्नावि बद्धा................ ।'

इति । ननु प्रत्यक्षे कथमाश्वसिमः सार्वत्रिकतानिश्चयं कर्तुम् । हन्त प्रत्यक्षेऽनाश्वस्ताः संभावनामात्रे तत्रभवन्तः समाश्वसन्तीति महत् प्रामाणिकत्वम् । संभावनालक्षणोत्प्रेक्षोत्थापिता हि अमी भवदभिहिता असंभवादयः । उत्प्रेक्षा च विकल्परूपा । सर्वश्च विकल्पो मूले प्रत्यक्षमेव अपेक्षते । अनुभववासनोत्थापिता हि विकल्पा इति प्रत्यक्षमेव तत्रापि प्रतपति, न अन्यत् । तत एव तर्कतन्त्रनिर्माणप्रथममुनिः

'तत्पूर्वकं च त्रिविधमनुमानम् ।' ( न्या०सू० १।१।५ )

इति प्रत्यक्षपूर्वकतामेव अनुमानस्य अवादीत् । ननु प्रत्यक्षं कथं सार्वत्रिकतायां व्याप्रियते । ननु संभावना अपि कथं व्याप्रियते । नहि दृष्टेऽनुप........तूत्तरं प्रत्यक्षेऽपि न भक्षिते श्वभिः । तदेवहि यौक्तिकं प्रत्यक्षमिति केचित् वदन्ति । किंच संभावना चेदेवंभूता व्यभिचारविरहिता, तर्हि तदेव मानसं प्रत्यक्षं व्याप्तिग्रहणनिपुणमिति अङ्गीकृतं भवेत् । अथ असम्भवादि स्वीकुर्वाणा सा वि-

चित्रीभवति संभावनेति, तर्हि अर्थापत्तिरेव इयं स्यात् । तथाहि प्रत्यक्षानुपलम्भैर्दृष्टस्तावदग्नौ धूमः, सच अन्यथेति अनग्नौ संभवे सति न उपपद्यते इति अनग्नावभावस्तस्य कल्प्यते इति स्फुटमेव एतत् । अर्थापत्तिश्च तार्किकमतेऽनुमानमेवेति सैव अनवस्था । तत्प्रशान्तये च प्रत्यक्षमेव अनुमन्तव्यं मूले । तथापि कापिलैरावीतहेतुप्रयोगेन विपक्षबाधने निरूपिते दर्शनमेव पर्यन्ते शरणीक्रियते । नहि असतः कारणं दृष्टम् । नच सर्वस्य सर्वस्मादुद्भवो दृष्टः । नच अशक्तेन अशक्यं क्रियते इति दृष्टमिति असंभवादयो निरूप्यमाणाः प्रत्यक्ष एव विश्रमयितव्याः । अतिव्याप्तिश्च साध्यस्य नास्तीति यदुच्यते, तत् सकलमतविपरीतमभिधीयमानं कमर्थं पुष्णाति । सपक्षैकदेशवृत्तयो गमका हेतव इति हि षट्तर्क्यां प्रसिद्धिः । तदनेन विपर्यासितेन किं सिद्ध्यति । लक्षणत्वमित्थं निर्दोषं भवतीति चेत्, न तस्य दूषितत्वात् । नहि वह्निर्लक्षणं धूमस्य येन धूमवत्त्वस्य वह्निमत्त्वं लक्षणं भवेत् । नहि यथा भ्रमविकल्परूपताविरहितविज्ञानरूपता एव साक्षात्काररूपत्वम्, तां मुक्त्वा न अन्यत् तस्य वपुराभाति, निर्दिश्यते वा; तथा धूमवत्त्वस्य अग्निमत्त्वम् । पृथगेवहि धूमेन लब्धप्रतिष्ठेन वह्नेर्वार्तामपि अस्पृशता पर्वतो धूमवान्कृतः, अन्यथाहि वह्निरूपतास्वीकारे वह्निना अपि स्वकारणस्वीकारे विश्वमत्र स्वीकृतं स्यादिति तावति अनाभासमाने न किञ्चित् भातं भवेदिति अन्धतैव स्यात् । यत् चोद्यते—परैस्तावल्लक्षणत्वमङ्गीकृतं केवलव्यतिरेकिरूपानुमानविषयमस्माभिस्तु सर्वानुमानविषयमिति, तदपि मृषा । चिरन्तनैर्हि हेतोर्लक्षणत्वमङ्गीकृतम्, भवद्भिः पुनः साध्यस्येति महान्भेदः । तस्मात्प्रमाणैव सा साधनदूषणे कर्तव्ये । ततश्च वस्तुनिर्णयः । यदाह मुनिः

'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः।'

(न्या० सू० १।१।४१)

इति पक्षशब्देन तद्गतं साधनं, प्रतिपक्षशब्देनच तन्निष्ठं दूषणमिति तत्र का युक्तिर्नाम अन्या भवेत्। प्रमाणस्य सा परिकर इति तु अनया भाषया शब्दप्रयोजन आवर्ज्यते, न वस्तुप्रियः। परिकरो हि कारणं वा कार्यं वा सहकारि वा सहकार्यं वा, न पुनरपरः परिकरः कश्चित्। तस्मात् युक्तिरिति तावदनुमानमेवेति सांख्यादयः। आवीतहेतुभ्यो हि विपक्षव्यावृत्तिं ते इच्छन्ति। 'समाधाननैर्मल्यात्मिका प्रतिभा' इति तु तत्रभवद्भर्तृहरिप्रभृतयः। तदनुसार एवच अयममन्दत्वं प्रज्ञाया इति अर्थापत्तिरिति मीमांसकाः। बाधकप्रमाणरूपमेव अनुमानं प्रत्यक्षविकल्पपर्यन्तीभवदेकोपलम्भानुभवादितिन्यायेन स्वसंविदि परिनिष्ठितमिति बौद्धाः। प्रमाणयोजनात्मकं प्रमातृस्वातन्त्र्यमेव युक्तिरिति प्रत्यभिज्ञातत्त्ववित्। यत्किञ्चिदपिच अङ्गीकुर्वता अवश्यमेव पर्यन्ते प्रमातृस्वातन्त्र्यमेव ज्ञानक्रियाशक्तियोजनात्मकमङ्गीकर्तव्यमिति असकृदुक्तम्। लोकेऽपिच उपाययोजनमेव स्वातन्त्र्योत्थापितं युक्तिरिति प्रसिद्धम्—युक्त्या कुरु, युक्त्या संकटादुत्तीर्णोऽस्मीति। तत् तत्रैव अवधेयं सुमतिभिरिति अत्र अस्माभिर्निर्बन्धः कृतः, नतु आहोपुरुषिकयेति अलम्। एवं तन्मात्रानुबन्धित्वं यत्स्वभावहेतुविषयस्य जीवितं, तत्रापि कार्यकारणभाव एव मूलमिति उपपाद्य, आचार्यस्य एतदेव संमतमिति उपपादयति '**अत एव तैः**' इति। ननु किमनेन उक्तेन भवदभिमतमुक्तं भवति। भवतीत्याह '**तेन**' इति इतिशब्दावमृष्टेन पठितेन ग्रन्थेन निरंशेऽपि वस्तुनि तैरिदमुक्तं भवति—यत् गमकस्येत्यादि इतिशब्दपरामृष्टम्। ननु इयता किं सिध्यति। आह '**एवंच**' इति।

**'अस्यापि'** इति यस्य आपाते कार्यकारणगर्भता न आभाति मन्दमतीनाम्, तस्यापि; न केवलं धूमवत्त्वादग्निमत्त्वमित्यादेः। **'ततोऽपि'** इति पूर्वमेष ग्रन्थः स्वभावहेतोर्विशेषणाय उपात्तः स्वभावहेतुं कंचिदेव गमयतीत्येवं व्याख्यातम्। अधुना तु सर्व एव स्वभावहेतुरेवंभूतो वेदितव्य इति परं बोधयितुं विशेषणं प्रयुक्तमिति व्याख्याभेदः। एवंचाभिधानस्य फलं कृपया अस्मन्नये सोपानक्रमेणैव परोऽधिरोहणीयो मोहमहान्धकूपात् येन अयं विश्राम्येदिति व्युत्पादनम्। एतमेव स्वपक्षं परिघटयति **'स्वभावो हि'** इत्यादिना। **'मुख्य'** इति सर्वतो व्यावर्तकः, सच गमक इति यावत्। **'अन्यस्तु'** इति यः कुतश्चिदेव व्यावर्तकः, सच गम्यः। **'सिद्धम्'** इति सर्वतो व्यावर्तकेनैव स्वीकृतत्वात्। **'अपर'** इति उत्पत्तिमत्त्वादेर्गमकस्य स्वभावस्य गम्यो यः स्वभावस्तद्यथा क्षणिकत्वमनित्यत्वं मतान्तरे आश्रितत्वादि, स स्वभावो गमकग्राहिणा प्रमाणेन न सिद्धः; उत्पद्यमाने क्रियमाणे प्रयत्नजन्ये दीपाद्यभिव्यज्यमाने च भावक्षणे दृश्यमाने हि क्षणान्तरे भविष्यत्ययं नवेत्यादिका चिन्ता न कृतैव, शिंशपात्वं तु शाखादिमत्त्वविशेषरूपं गृह्णता प्रमाणेन शाखादिमत्त्वमात्रं स्वीकृतमेवेति न तत्र वस्तुसाधनता। तेन गमकग्राहिणा प्रमाणेन क्षणिकत्वं यत् न स्वीकृतं, तत् गमकादुत्पत्तिमत्त्वादेरित्थमनुमातुं शक्यं यदि गमकस्य उत्पत्तिमत्त्वादेर्यो हेतुर्निजं कारणं तेनैव कारणेन स उत्पत्तिमानिव क्षणिकोऽपि कृत इति। ननु एवं तन्मात्रानुबन्धित्वं क्षणिकस्यैव उक्तं भवेत् वस्तुनः साध्यं, नतु वृक्षत्वस्येत्याशङ्क्य तत्रापि तत् व्युत्पादयति **'शिंशपात्व'** इति। **'तथाभावात्'** इति वृक्षत्वात्। **'शिंशपानिष्ठम्'** इति शिंशपारूपनिगीर्णम्। **'यदि परम्'** इति एतच्च पर्यायव्यवहारसाधनं,

नतु वस्तुव्यवहारसाधनम्। '**व्यावृत्त्यन्तर**' इति अध्यवसायः प्रत्यक्षफलं; नच शिंशपां शुद्धां विलोक्य धवतुल्येयमिति अवसा, अपितु धवसहिताम्। एवमिह अध्यवसायान्यत्वात् व्यावृत्त्यन्तरापेक्षा अशिंशपा न भवतीति, एतावता हि न वृक्षः। एवंहि धवो न वृक्षः स्यात्, सहि अशिंशपा भवति ततस्तस्या व्यावृत्तेरन्या व्यावृत्तिरवृक्षो न भवतीत्येवमात्माभासमपेक्षमाणं तद्वृक्षत्वं प्रत्याभासं प्रत्यध्यवसायं वा विश्रान्तत्वात् प्रमाणानां पूर्वप्रमाणेन अस्वीकृतं प्रत्यक्षान्तरेणैव तथाध्यवसायपर्यन्तेन स्वीकर्तव्यम्, स्वीकृतमपितु यदि मोहात् न निश्चितम्, तदा वस्तुव्यवहारसाधनमनुमानम्। तत्रापिच कारणमहिमैव अनुमन्तव्यः। क्षणिकत्वाद्यनुमानं तु वस्तुसाधनमिति त्रिधा स्वभावहेतुराख्यातः। '**कृतकत्वकारणम्**' इति कर्तृपदम्, '**शिंशपात्वमपि**' इति कर्मपदम् '**शिंशपात्वकारणम्**' इति च, अर्थात् कर्तृलाभः। '**तत्**' इति पूर्वत आकृष्य एतदर्थत्वेन नेयम्। '**न्यायः**' इति प्रमाणतत्त्वम्। तं दर्शयति '**नहि**' इति। '**तेन**' इति हेतुना चेत् नित्यो जन्यते स्वभावापरित्यागात्, न अस्य अन्यदेशकालवस्तुसम्बन्धो भवेत्। ननु अनश्वरोऽपि उत्पन्नो देशादिकृतनाशे तं विरुद्धमवलम्बिष्यते। एतत् दूषयति '**देशादीनाम्**' इति स्वभावान्तरापादकत्वेन संमतानामित्यर्थः। '**नीलरूपत्वेन**' इति ततश्च भावं न करोतीति करणत्वमपाकृतं भवेत्, नतु नाशकरणत्वमुक्तं भवेदिति व्यतिरेकपक्षीभावस्य एतदुक्तम्, पक्षान्तरे तु आह '**विनश्वर**' इति। ननु कालान्तरेऽस्य नाशहेतवो विनश्वरं विश्राणयन्तु स्वभावं भावस्य। आह '**विनश्वर**' इति। '**तेषाम्**' इति नाशहेत्वभिमतानाम्, कर्तुः शेषविवक्षायामियं षष्ठी। '**उक्तन्यायेन**' इति अभावस्य वस्तुत्वावस्तुत्वव्यतिरे-

काभिधानलक्षणेन । **'तथाच'** इति अनश्वरत्वे सतीत्यर्थः । दृश्यते च असौ । अनश्वरो हि अवश्यं कालान्तरावस्थायित्वेन उपगम्यस्तदेवच नश्वरत्वं पूर्वस्वभावत्यागात्मकत्वात् । एतत्परिहरति **'तत्'** इति यत् वक्तव्यं तदुक्तमेवेति, तदिति वा उत्तरस्य उपक्रमे हृदयाकर्षणेन स्मरणं द्योतयति । न्यायागतत्वमेव नियत्युपजीवनेन विना न नियन्तुं शक्यम् । यदिहि एवं बधिरग्रामे श्रूयते क्वचन देशेऽपररात्रे निद्रायमाणे राजनि तन्निद्राच्छेदभयात् भेरीताडनं तत्प्रयत्नेन न क्रियत इति, तदा बधिरैरपि संभूय न्यायोऽवस्थाप्यते शतशोऽपि तत्र क्रियमाणे न अस्माकं निद्राच्छेदः कस्यापि दृष्ट इति किमन्यत्र भावस्वभावा विपरिवर्तेन्त इति । तस्मात् न्यायो नाम भावानां प्रसाधकं प्रमाणमुच्यते । ते चेदवभाससाराः, किंवा रूपं न सहेरन् । नीलमपि पीततां सहेत चित्रज्ञाने इव । यथोक्तम्

'अनन्यभागशक्यदर्शने नीलादिचित्रविज्ञाने ।'

इति । संकल्पस्वप्नादौ च अवभासानां संयोजनवियोजनवैचित्र्यसहस्राणि दृश्यन्ते । तत्र क आभासः किमाभासैकनियत इति कः प्रतीयात् । एनमाशयं व्यनक्ति **'अवभाससार'** इत्यादिना । ननु मा भूत् धवादीनामभावे तत्साधारणो वृक्षत्वावभासः, असाधारणस्तु केन निवार्यते । तत्र आह **'धवादिसद्भाव'** इति, तद्धि असाधारणं भवत् शिंशपात्वमेव, नतु तेन गम्यमपरं किंचित् । ननु धवाद्यसृष्टे वृक्षत्वरहितशिंशपाभाससृष्टिः संभाव्या, अनित्यत्वरहितकृतकसृष्टिस्तु कथम् । किं खलु कथमित्याह कृतकत्वेत्यादि दिष्ट्या वसनमिदं कारणव्यापारादुत्पन्नमिति य आभासो ह्लादजनको वसनादेः, स एव तावत् न विनङ्क्ष्यतीत्याभासः, अपितु अन्य एव हृद्गङ्गमिव

मितधनस्य विदधानः। तत् पूर्वाभासैकरसे प्रमातृवर्गे द्वितीय आभासो न सृष्ट एव तं प्रति रूपमिव अन्धान् तत्प्रमातृवर्गान्तरैकीभावेन भगवता तेषामसृष्टेः। किंच कापिलाः कार्यं सदेव आचक्षाणाः पूर्वापरदशासु अनपायित्वं नित्यत्वमेव कृतकस्य आचक्षते इति। ननु यस्य असौ भावः कृतक इति आभातोऽपि, अनित्य इति न भातः; स देशान्तरे तं भावं पश्यन् कथं स्वभावान्यत्वेन प्रतीयात्। इत्थमित्याह '**तदेतत्**' इति। भिन्नदेशतया हि तदानीं पूर्वस्वभावत्यागादनित्यत्वमनेन विदितम्, नतु कृतकतया। ननु स तर्हि स्वभावत्यागो नाम हेतुर्नियतशक्त्यपेक्षः सुसाध्यो व्यभिचारसंभावनाविरहादित्याशङ्क्य आह '**भिन्नदेशता यद्यपि**' इति। न इदं वस्तुनो, नापि वस्तुव्यवहारस्य साधनमपितु शब्दव्यवहारस्य; तदर्थं मात्रपदं, शब्दव्यवहारश्च नियत्यपेक्ष इति किमत्र चित्रं साङ्केतिकत्वेन अस्य प्रसिद्धेः। एतदुपसंहरति '**तदेवम्**' इति। यदि गम्यगमकाभिमतयोर्व्यावृत्त्योः पर्यायमात्ररूपता, तदा व्यवहारमात्रं साध्यम्; अथ भिन्नाभासत्वेन अपर्यायता यावस्तु तदा एक आभास आभासान्तरपरिहारेण अपि आसीत योगीश्वरादिप्रभावबलादित्याशङ्का अवश्यं शमयितव्येति तात्पर्यम्। एतदुदाहरणेन स्फुटीकरोति '**सत्त्वं हि**' इति हि यस्मादेवंभूतं स्फुटं निदर्शनमस्ति, तस्मात् युक्तमेतदित्यर्थः। '**अत एव**' इति क्रमयौगपद्याभासात्। तदा च तदेव क्षणिकत्वं स्वभावत्यागलक्षणं क्रमं हि अकृत्वा करणम्, यौगपद्यं तु अकरणं कृत्वा; तदा च शब्दव्यवहार एव साध्यः। '**अन्यथा**' इति। यदि क्रमयौगपद्याभासपरमार्थत्वमेव अर्थक्रियाकारित्वाभासस्येति न उच्यते, तदा ताभ्यां स

व्याप्तः इति कुतः । ननु यदि तत एव अनित्यत्वं सिध्यति, तर्हि प्रकृते किम् । आह '**क्रमिक**' इत्यादि । प्रकारान्तरेण अपि गमके गम्यानुप्रवेशमाह '**क्रम**' इत्यादिना । व्यतिरेकतत्त्वे विचार्यमाणे अन्वय आगच्छन् साध्याभासानुप्रवेशं गमकाभासे स्फुटयतीति तात्पर्यम् । '**विपक्ष**' इति नित्ये । '**तत्स्वभाव**' इति क्रमयौगपद्याभासस्वभावः । '**स्वपक्ष**' इति अनित्यः । '**तत्**' इति तस्मात् । ननु एवमर्थक्रियाकारित्वं यदि यदेव क्रमयोगपद्याभासात्मकं क्षणिकतामयं, तदेवच सत्त्वं; तदा सत्त्वक्षणिकत्वव्यवहारसाधने नैव नियतिशक्तिरपेक्ष्यते । भवेदेतदेवं, यदि तदेव सत्त्वं स्यात्, नतु एवमिति दर्शयन्

'अर्थक्रियापि सहजा नार्थानाम्········· ।' (२।३।१२)

इति पूर्वोक्तं स्मारयति '**अर्थक्रिया**' इत्यादिना । '**तदपि**' इति अर्थक्रियाकारित्वम् । ईश्वरो यत् करोति, तत्र को नियमः—एवंभूतमेव करोतीति । तदाह '**अनियमकरणात्**' इति । '**नित्यापेक्षया**' इति व्यवहारकाले । ननु एवं व्यवहारे किं क्षणिकतैव परमार्थः । नेत्याह '**विनश्वरता तु**' इति न भावस्य किञ्चित् निजं नित्यमनित्यं वा वपुः । ईश्वरस्तु स्वसंविन्मुकुरे विश्वमाभासयन् क्षणिकतामपि आभासयेदिति नः पक्षः ॥ ११ ॥

ननु आभासवस्तुवादे आभासयोरेव कार्यकारणभाव इति अनाभातोऽग्निरकिञ्चिद्रूपः । तेन कथं धूमाभासो जनित इति शक्यं वक्तुम् । घटाभासात् धूमाभासः, धूमाभासाच्च अनन्तरमग्न्याभास इति आभासानां नियतमानन्तर्यमिति कथं नियत्यवलम्बनेऽपि धूमादग्न्यनुमानमित्याशङ्कां शमयति

**भूयस्तत्तत्प्रमात्रेकवह्न्याभासादितो भवेत् ।**
**परोक्षादप्यधिपतेर्धूमाभासादि नूतनम् ॥ १२ ॥**

कार्यमव्यभिचार्यस्य लिङ्गमन्यप्रमातृगात् ।
तदाभासस्तदाभासादेव त्वधिपतेः परः ॥ १३ ॥

विज्ञानवादी प्रतिसन्तानं भिन्नमाभासमिच्छन् स्वगतयोरेव धूमाग्न्याभासयोः कार्यकारणभावमग्रहीत् सन्तानान्तरगताभासवृत्तान्तमात्रासंवेदनात् । तदिदानीं धूमाभास एव अस्य, कुतस्ततोऽग्न्याभासानुमानम्; अस्मद्दर्शने तु तावत्याभासे भगवता प्रमातॄणामैक्येन सृष्टिरिति बाह्यनये इव व्याप्तिग्रहणकाले तावत्प्रमातृभेदवर्ती धूमाभास एक एव अग्न्याभासश्च । ततश्च प्रमातृभेदत्यागेन प्रत्यक्षानुपलम्भबलेन धूमाभासोऽग्न्याभासात् जायते इति व्याप्तिरेकवारं शक्या ग्रहीतुम् । भूयश्च पुनरपि भूयसां वा अन्वयव्यतिरेकपर्यायेण अनियतानां तेषां क्रिमिसर्वज्ञपर्यन्तानां प्रमातॄणामेक एव यो वह्न्याभासो, नतु सन्तानभेदेन भिन्नः आदिग्रहणात् बीजाभासादि; तत एव धूमाभासाङ्कुराभासादि भवेत् जनितुं शक्नोति, न अन्यतः । तच्च वह्न्याभासादि यतोऽनुमातुः परोक्षं, ततोऽधिपतिप्रत्यय इति उच्यते । तच्च नूतनं, नतु धूमजधूमतुल्यम् । तच्च तस्य वह्न्याभासादेर्नियतिशक्त्यपेक्षया अव्यभिचारि कार्यरूपं लिङ्गमिति तदनुमितौ व्याप्रियते एव । वह्न्याभाससामान्यांशे तैः प्रमातृभिः सह ऐक्येन स भगवता सृष्टोऽनुमाता उच्यते इति परमार्थः । परस्तु नूतनादन्यो यो धूमाभासादिः, स धूमाभासादेरेव प्रमात्रन्तरगतादनुमात्रपेक्षया परोक्षत्वेन अधिपतिप्रत्ययरूपादुत्पन्न इति तस्यैव स्वकारणस्य अनुमानाय स कार्यलिङ्गं भवेत्, नतु कारणभूतस्य वह्न्याभासादेरिति सर्वं स्वस्थमिति सूत्रार्थः । धूमाभासोऽग्न्याभासादेव जायमानस्तस्यैव गमकः, जातरूढस्तु धूमाभासादेव जायमानस्तस्यैव गमक इति पूर्वेण सम्बन्ध इति वृत्तियोजना । विवृति-

कार आशङ्कां विधाय संक्षेपेण सूत्रार्थं प्रतीकयति **'तदेतदेवम्'** इत्यादिना। सा च आशङ्का **'न स्यात्'** इत्यन्तेन दर्शिता। विज्ञानवादिना च प्रतिप्रमातृसन्तानं भिन्नमाभासरूपमर्थमिच्छता दुःसमर्थमेतदिति आशयशेषोऽत्र। **'अन्यतोऽपि'** इति घटाद्याभासात्। **'विपर्ययस्य वा'** इति धूमाभासानन्तरमग्न्याभासः पर्वतमारूढस्येत्यपि हि दृश्यते एव। **'पर्वतपृष्ठगतोऽपि'** इत्यादिना भूयःशब्दस्य अर्थं व्याख्यास्यन् व्याप्तिग्रहणसमयवृत्तान्तं तावत् घटयति **'सन्निकृष्टदेशवर्तिनि'** इत्यादिना। **'तदा'** इति तत उक्तादन्वयव्यतिरेकरूपात् हेतोरित्यर्थः। **'तावत्'** इति तच्छून्यसामग्री नैव कारणमिति यावत्। **'आगमसिद्ध'** इति अनेन प्रमाणसमूहयोजनात्मिकां युक्तिं व्यापारयता प्रामाणिकेन भवितव्यमित्याह। आगमिको हि कार्यकारणभावादिरितिनियमो नियतेर्वशादिति। मात्रपदं व्याचष्टे **'अन्यत्र'** इत्यादिना। मायाशक्तेरवस्थानमुपपादयति **'तम्'** इति। **'तावन्मात्रम्'** इति मात्रशब्दार्थं स्पष्टयति। **'विषयावभासस्तु'** इति सामान्यरूपा आभासा एव तत्त्वशब्दवाच्या वस्तूनि। ते च प्राक्सृष्टिसृष्टा एवेति उक्तमसकृत्। **'तत्'** इति सौत्रं व्याचष्टे **'क्रिमिकीटादयोऽपि'** इति। सूक्ष्मासूक्ष्मत्वेन अनयोर्भेद आगमेषु। आभासोऽपि परोक्षो भवतीत्यादि यदनन्तरोक्तं वस्तु, तत् न उत्सूत्रमिति दर्शयति **'एतच्च'** इति। बहुतरशब्देन भूयःशब्दस्य व्याख्यान्तरं दर्शयति **'अन्यथा'** इति। यदि विज्ञानवादिमते इव प्रतिप्रमातृनियतयोरेव आभासयोः कार्यकारणभावोऽभ्युपेयते, तदा शङ्केतेति पर्वते; अतश्च न तत्र अग्निरनुमीयते। पर्वतवर्तिप्रमातृवर्ती हि अन्यो धूमाभासो यस्तेन प्रमात्रा अग्न्याभासकार्यः संविदितः, अन्यश्च अनुमातृ-

संमतप्रमातृवर्ती । स च शरीराभासादेरेव जात इति शङ्केत । **'अत्र'** इति पर्वते । ततश्च साधारण्येन एक एव धूमाभासः इत्याशयः । **'आगमसिद्ध'** इति प्रमाणयोजनामुपजीव्यत्वेन स्मारयति । अविगीता च प्रसिद्धिरागम एवेति उक्तम् । ततश्च अशेषव्यवहारव्युत्पत्तिः । आगमतत्त्ववेदित्वमेव विद्यास्थानफलम् । वेदायुर्वेददण्डनीतिकामसूत्रप्रयोगमालाप्रभृतिग्रन्थज्ञानमेव हि परो विदग्धभावः । एवमसाधारणाभासवादे दूषिते परस्तं प्रत्युज्जीवयितुमिच्छन्नाशङ्कते **'अथ'** इति । एतत् समीकरणेन तिरस्करोति **'तर्हि'** इति । अत्र हेतुः **'अन्तर'** इति । पुनः परोक्तिमाशङ्कते **'अथ'** इति महानसे तावदेव दृष्टम् । यतः शरीराभासादुद्गच्छन्तं न धूमाभासं पश्यति, किन्तु वह्न्याभासादेव; अन्यत्रापिच तज्जातीयत्वात् धूमाभासस्य तत्कारणकत्वमेव युक्तमिति न भित्त्याभासात् तदुद्गम इति । वह्न्याभासो न व्यभिचारी धूमाभासं प्रतीति आकूतशेषः । **'तर्हि'** इति प्रोद्गते धूमे महानसं प्रविष्टवतो यदा ऊर्ध्वादधः प्रसर्पन्ती दृष्टिर्व्याप्रियते, तदा धूमाभासादेव ऊर्ध्वगमनलक्षणप्रवृत्त्याभाससहकृतादग्न्याभासोद्गम इति विपर्ययेण अपि कार्यकारणता स्यात् । ननु तदापि प्रमात्रन्तराणां वह्न्याभासादेव धूमाभासोद्गम इति प्रतिपत्तिः । ततः किम् । वह्न्याभासस्यैव कारणत्वं ततः, ततोऽपिच इदम्—यत्परोक्षोऽपि वह्न्याभासो धूमस्य कारणमिति । भवेदेवं सर्वप्रमातृसाधारणमेकमाभासमिच्छतां, ननु सौगतानामिति दर्शयति **'प्रतिप्रमात्रा'** इति । **'ततः'** इति व्यवहितत्वात् हेतोरदृश्योऽपि अन्यैरेकेन प्रमात्रा उपलभ्यत इति । अतो हेतोः स पूर्वोत्पन्न एवेति सम्बन्धः । **'अत्रैव'** इति महानसाभासस्य अपि साधारण्यमुपयोगीति दर्शयति । **'अविवृतमपि'**

इति सौगतादिभिः । **'कस्यचित्'** इति कार्यस्य । **'तस्य'** इति कार्यस्य । कुत इदमधिपतेर्लक्षणमिति चेदाह **'तथाच'** इति लक्ष्यात् लक्षणं कल्पितमिति यावत् । **'समीहां च'** इति व्यापारादिविषयाम् । **'सन्तानान्तर'** इति प्रमात्रन्तरे । सूत्रे यदादिग्रहणं, तत् वृत्तौ त्यक्तमिति यस्य मोहस्तं प्रत्याह **'वृत्तौ'** इति यत् सूत्रे सङ्गृहीतं, तत् वृत्तौ न न विवृतमुपलक्षकत्वाशयेन, नतु नियमाशयेन । धूमाग्न्योरुपादानं यत एवमव्यभिचारि अस्य लिङ्गमित्यन्तं सूत्रार्थमुपसंहरति **'तदेवं सति'** इत्यादिना । **'अन्यप्रमातृगात्'** इत्यादि विवृणोति **'गोपाल'** इत्यादिना । लेखापदेन वह्निजधूमवैलक्षण्यदिशं दर्शयति । **'ततः'** इति । वह्न्याभासात् । **'देवदत्तस्य'** इति अनुमातृभूमिकापन्नस्येत्यर्थः ॥ १२–१३ ॥

ननु अग्न्याभासात् धूमाभास इति चेद्दूरीकृतं, तद्वदेव बीजाभासादङ्कुराभास इत्यादि युज्यते एवेति किमेतदुक्तं

'तदन्यस्यापि बीजादेर्हेतुता नैव युज्यते ।' (२।४।८)

इति चेतन एव कर्तेति । एतत् प्रतिसमाधत्ते सूत्रेण

**अस्मिन् सतीदमस्तीति कार्यकारणतापि या ।**
**साप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥ १४ ॥**

जडत्वात् न अपेक्षा । तदभावात् न नियमः । तदभावात् नियमविशिष्टं न पौर्वापर्यं कार्यकारणभाव इति व्यापकविरुद्धोपलब्धिव्यापकानुपलब्धयः । परस्य यः परत्र नियमः, स न स्वभावभूतः स्वनिष्ठत्वात्सर्वभावानाम् । ततोऽनुसन्धानरूपा अपेक्षा तस्य व्यापिका । सा च जडेषु नास्तीति सूत्रार्थः । अत्रैवच सूत्रे पूर्वसामर्थ्ये परस्य सत्तेति पूर्वसामर्थ्यं परस्य सत्तेति पक्षावपि सूचितावेव । सत्तामात्रे घटपटयोर्नियमवती सत्ता

सहभूतयोरेकसामग्र्यधीनयोर्न च कार्यकारणत्वम् । ततोऽत्र प्रयोज्यप्रयोजकतापर्यवसितं यत् नियतापरपूर्वभावं सत्त्वं, सा कार्यकारणता परेण अभ्युपेतेति दर्शयति **'द्वयोः'** इत्यादिना **'प्रसङ्ग'** इत्यन्तेन सन्दर्भेण । **'प्रदेशस्य च'** इति प्रदेशोऽत्र समानकालं भूतलम् । **'भवतिशब्देन'** इति **'अस्ति'** इत्येतस्य व्याख्यानेन वृत्तिगतेन । **'एवमपि'** इति । तत्र हि भवद्भूत-प्रादुर्भावः । **'तदापि'** इति भाविकालविशिष्टस्य अपि स्यादनुमानमिति यावत् । **'सहभावेन'** इति अग्निधूमसन्तानौ हि प्रबन्धप्रवृत्ती । तत्र समानकालौ यौ धूमाग्निक्षणौ, तयोः सहसत्तया अस्ति सम्बन्धोऽवश्यंभावविशिष्टो, नतु बीजमङ्कुरे जातेऽस्तीति सम्बन्धस्यैव अभावादवश्यम्भावलक्षणो नियमः कस्य विशेषणं भवेत् । **'अभूतपूर्व'** इति प्रकरणात् सत्ता लभ्यते । इयत् सूत्रे सप्तम्या कथं स्वीकृतमिति चेदाह **'तथाहि'** इति । **'यस्य च भावेन'** इति ।

'यस्य च भावेन भावलक्षणम् ।' ( ३।२।३७ )

इत्येतत्सूत्रनिर्दिष्टा या सप्तमी, सा विशेषणमेनमाहेति दर्शयति **'सह'** इति । **'आदौ'** इति अग्न्यभावे सता अपि प्रदेशेन तस्य धूमस्य लक्षणं यतो न भवति, तत इत्यर्थः । सहभावं निराकृत्य उत्तरकालभावितामपि निराकरोति **'उत्तर'** इत्यादिना । **'तस्य'** इति अग्नेः । ननु उत्तरकालमपि भवतोऽग्नेः किं न सिद्धतेत्याशङ्क्य आह **'स्वकाल'** इति । अस्य रूपस्य व्यापकतां दर्शयति **'बीजेन'** इति अथवा पूर्वं सहकारिलक्षणं वह्निर्धूमस्येति व्याख्यातम्, एतेन तु उपादानलक्षणमिति विशेषः । एतत् तात्पर्यतो निगमयति **'तेन'** इति । **'तयोः'** इति निर्धारणविभक्तिः । एषच नियमार्थः सिध्यतीति सम्बन्धः । **'तदपि'** इति अभा-

वस्य उपक्रमेऽपि नपुंसकं प्रसज्यनिषेधरूपस्य वाक्यार्थस्य असत्स्वभावत्वेन प्राधान्यं दर्शयितुं तस्य न वह्नेरभावेऽन्यतोऽपि अनग्नेर्धूमो भवतीति यदाशङ्क्यते, तत् नेत्ययं हि वाक्यार्थः। ननु सप्तमी कथं नियममाक्षिपेत्। आह **'अन्यस्मिन्'** इत्यादि। अघटेऽपि हि सति यः पटो भवति, स घटसन्निधौ विलोक्यमानोऽपि पटो नैवं व्यपदिश्यते—घटे सति भवतीति। **'अत एव'** इति यत इति सप्तम्यर्थो विश्रान्तस्ततो व्यतिरेकोऽपि गम्यत एवेत्यर्थः। **'वृत्तौ तु'** इति वृत्तिर्हि सूत्रं व्याचक्षाणा वृत्तिर्भवतीति तस्यां व्यतिरेको दर्शितः। ननु पौर्वापर्यस्य विशेषणं नियतमिति। पौर्वापर्यं च भावद्वयम्। तस्मिन् नियमविशिष्टे निरूपिते व्यतिरेकः कथं दर्शितो भवेत्। स हि अभावात्मा भावविशेषणेन उच्यते इति किमेतत्। एतत् दूषयति **'नियत'** इत्यादिना। इहहि व्यतिरेको नाम अन्वयसचिवः कार्यकारणभावात्मा प्रस्तुतः। कार्यकारणभावश्च वस्तुनी एवेति व्यतिरेकोऽपि अन्वयवत् नियतवस्तुद्वयपरमार्थ एव। ननु तथात्वेऽसावद्वयात् कथं भिद्यते, कथंच असावनुपलम्भेन अभावविशेषेण अवगम्यः स्यात्, घोष्यते च प्रत्यक्षसाधनोऽन्वयः, अनुपलम्भसाधनश्च व्यतिरेक इत्येवं प्रत्यक्षानुपलम्भाभ्यां तैर्वा भावनिष्ठोऽन्वयव्यतिरेकात्मा कार्यकारणभावः साध्यते इति। तदेतत् चोद्यद्वयं व्युदस्यति **'अनुपलम्भेन'** इति। भावस्वभावो हि नियत इत्थं व्यवहृतो भवति यदि विधिनिषेधाभ्यां व्यवह्रियते। एवंहि स्वरूपमस्य अन्यतो व्यावृत्तं व्यवहृतं स्यात्, ततः स्वरूपमित्यत्र विधिभागेऽन्वयरूपता उच्यते प्रत्यक्षसाधनता च। **'नियतं व्यावृत्तम्'** इत्यत्र नियततां कारणस्य तावत् दर्शयति **'नियता धूमेऽग्न्या-**

**दिसामग्री'** इति । सामग्रीग्रहणेन कारणतामन्त्यदशाप्रतिपन्नत्वेन वह्नेराचष्टे । अत्र अनुपलम्भं साधनत्वेन आह **'तदा'** इति धूमव्याप्ताभिमते क्षणे धूमप्रतिषेधमयो घटादिर्नास्ति, भवन्नपिहि घटादिः सधूम एव । घटादिरपिच न वह्नेरनन्तरक्षणभावी अन्यदापि अस्य भावात् । एवं कारणस्य कार्ये नियततां प्रदर्श्य कार्यस्य कारणे प्रदर्शयति **'धूमोऽपि'** इति । एतत्साधनाय अनुपलम्भं दर्शयति **'अग्नि'** इति अग्न्यभावप्राणितात् हि न प्रदेशात् मृदादेर्वा धूमः, अपितु विद्यमानवह्निकादेव, नच प्रदेशमृदादिकात् धूमस्तद्भावेऽपि अग्न्यभावेऽभावात् । एवं द्वयोरपि नियमे दर्शिते समव्याप्तिकत्वं गम्यगमकयोरिति दर्शयता गम्येऽपि गमकनियमो भवतीति संमतं बौद्धस्यैवेति दर्शितं भवति । यत् वार्तिकं

'धूमहेतुस्वभावो हि वह्निस्तच्छक्तिभेदवान् ।'

इति । ततोऽस्मदुपज्ञमेव इदमिति व्याप्तिशून्यत्वं गम्यस्येति योऽभिमानः, सोऽभिमान एवेति अलम् । ननु किमनेन गम्यस्य नियतत्वेन उक्तेन । वस्तुवृत्त्या हि भवदपि तत् न अनुमानस्य अङ्गम् । अनुमानं हि हेतुबलात्, हेतोश्च कार्यमिति तस्यैव प्रतिबन्धरूपत्वं वक्तव्यमनग्नौ न भवतीति । एतदागूर्य आह **'कार्यस्यैवच'** इति । अत्रापि पक्षे प्रतिक्षिप्त एव पूर्वोक्तो दोष इति दर्शयति **'निषेधमात्रं तु'** इति । **'अत एव'** इति विधिनिषेधरूपतया वस्तुन्येव व्यवहार इति यदुक्तं, ततो हेतोः । ननु वस्तुद्वयमात्रं न कार्यकारणभावः, अपितु नियमविशिष्टं तत्, स नियमश्च परापेक्षामपि आपादयति । उच्यते **'नियमोऽपि'** इति । **'नियमविशेषम्'** इति यत्र नियतमिति व्यवह्नियते वस्तु, तत् । कस्तर्हि नियमो नामेत्याह **'तथा'** इति निजनिजेन

रूपेण । '**कथं न**' इति इयदेवहि नियमस्य वपुर्यत्परस्परं भावात्मानो यथा दृष्टास्तदन्येन रूपेण न भवन्तीति । अन्येन प्रकारेण अभवनं स्फुटयति '**अयं हि**' इति । '**अनयोः**' इति अग्निधूमयोः । '**कोऽसौ**' इति भावद्वयं मुक्त्वा न अत्र काचिद्पेक्षा स्फुरतीति यावत् । एवं पूर्वस्मिन्सति परो भवतीति बौद्धीयं मतं वितत्य अनुभाषितम् । एतत् दूषयति '**स्यादेतत्**' इति अभ्युपगम्यते । '**अस्त्येतदतिप्रसङ्गावहं तु**' इति यदिवा एतदिति उचितोचितं वाचोयुक्तिवैदग्ध्येन भवेदेतत्, यत् त्वया उक्तं, तत्तु वैदग्ध्येन निर्वहतीति । अतिप्रसङ्गापादनादि दर्शयति '**एवमपि**' इति । '**तथाभावः**' इति कार्यकारणभावः । '**पूर्वदृष्टत्वावगतैः**' इति ज्योतिःशास्त्रादेरेतदवगम्यते—न रोहिण्यः कृत्तिकाभ्यो जायन्ते इति । ततः पूर्वदृष्टत्वं कृत्तिकाभ्योऽनुद्भवत्वमासामवगम्यते इत्यर्थः । '**रोहिण्युद्गम**' इति विशिष्टदेशको रोहिणीक्षण इति यावत् । एतदेव स्फुटयति '**उद्गमश्च**' इत्यादिना '**जायते एव**' इत्यन्तेन । अत्रैव दृष्टान्तमाह '**गोपाल**' इति विशिष्टधूमलक्षणस्य सा कारणमेवेति यावत् । ननु अस्तु एवं क्षणाभिप्रायेण कृत्तिकाः प्रति रोहिणीनां कार्यत्वम् । नेत्याह '**नच**' इति । '**एवम्**' इति धूमन्यायेन । '**तथाभूता अपि**' इति उद्गच्छद्विशिष्टरूपा इति अपिः । रोहिण्यः कृत्तिकाभ्यः कारणभूताभ्यः कार्यरूपतया भवन्त्यो भूताः प्रादुर्भावयोगिन्य इति न लोकस्य प्रतिपत्तिरिति । '**एतच्च**' इति अतिप्रसङ्गावहत्वं यदुक्तं पौर्वापर्यस्य कार्यकारणभावलक्षणत्वे तत्सम्भवत्वात् तामुपगम्य, सैव तु नास्तीत्याह '**पुनः**' इति । यदि नाम पुरुषो दैवयोगात् घटानन्तरं पटं पश्येत् त्रिचतुरानपि वारान्किमियता भावयोः परस्परनिरपेक्षयोः किमपि ज्ञातेयं

नेयामकमुदियात्। निरपेक्षतामेव दर्शयति **'नहि'** इति। **'अग्रे'** इति तत्र हि पूर्वस्य सामर्थ्यं नाम स्वभावः स परस्य सत्तारूपो नेति वक्ष्यते । यथाच सामर्थ्यं स्वभावस्तथा स्वरूपमपीति, तदपि न पूर्वस्य सम्बन्धि परस्येति युक्तम्। ननु अस्तु भावयोरेव अपेक्षा। सा तर्हि परस्परस्वभावतामानयति । तदाह **'तथात्वे वा'** इति सापेक्षत्वेऽभिधेयमाने, सा सापेक्षता अन्योन्यस्वभावतादात्म्यपर्यवसिता आपद्येत प्रसज्येतेत्यर्थः। ननु तादात्म्येन किमत्र अङ्गीकृतेन। अपेक्षा नाम स्वभावविशेषः कार्यकारणस्वस्वरूपमात्रविश्रान्तो भविष्यति । एतत् दूषयति **'न च'** इति। ननु उपगम्यतामेवं, को दोषः। अयमित्याह **'एवं हि'** इति। यो हि यस्य विशेषः, स तं विशेषं विहाय अपि आस्ते वृक्ष इव शिंशपात्वम्, तथाच तथाभूतापेक्षात्मकविशेषशून्यावपि धूमाग्नी भवेताम्, धूम एववेति स स्यादिति सम्बन्धः। एवकारेण स्वरूपस्य अन्यथाभावमाह। वाग्रहणेन इदमाह—अग्न्यादिसामग्री यद्यपि अन्त्यदशाप्रतिपन्ना धूमजनिकेव अङ्गीकृता क्षणस्य अविवेकादप्रतिबन्धनीयत्वात्, अकिञ्चित्करस्य च अप्रतिबन्धकत्वादिति नयेन; तथापि लौकिकप्रत्यवमर्शबलेन अनन्त्या अपि वह्न्यादिसामग्री सैवेतिदृष्ट्या 'नावश्यं कारणानि कार्यवन्ति' इति भवेदपि वचनावकाशो, धूमस्य तु स्वप्नेऽपि अनग्निजत्वं न सह्यते। तदाह **'तथाच'** इति । तदेव दर्शयति **'अर्थ'** इति अर्थस्य यत् स्वरूपमात्रं, तत्रैव तैरिदं कारणमेव, इदं कार्यमेवेति व्यवस्था उपगता। ननु तयैव व्यवस्थया सर्वं सिद्धं; विशेषणपक्षे च तत्त्यागशङ्का या उक्ता, सा अपि पराकृतेत्याशयं परकीयमाशङ्कते **'अथ'** इत्यादिना **'सर्वसिद्धिव्यवहारश्च'** इत्यन्तेन। विशेषणत्यागशङ्का **'ननु'** इत्यादिना

पराकृता । निषिध्यमानाया अन्यापेक्षायाः स्वरूपं सप्तम्या दर्शयति **'अनग्नौ'** इत्यादिना । **'व्यवहारमात्रे तु'** इति सप्तमी । कार्यकारणभावादिव्यपदेशलक्षणं साङ्केतिकम् । अत्रैव दिक्संख्यासन्निवेशदृष्टान्तत्रयं निरूपयति **'यथा'** इत्यादिना । भावस्य यत् विशिष्टं रूपमन्यतोऽव्यावृत्तं, तदेव साङ्केतिकेन शब्देन अभिधीयमानमपेक्षाध्यवसायं वैकल्पिकमुत्थापयति पञ्चसङ्ख्यारूपस्य विशेषस्य अभावेऽपि । **'वस्तून्येव'** इति परमाणुरूपाणि घटादिरूपाणि वा । एतत् दार्ष्टान्तिके योजयति **'तथैव'** इति अन्यस्य अर्थस्य सम्बन्धरूपस्य अभावात् व्यतिरेकेण अपि सप्तम्यादिसङ्केतविकल्पाध्यवसितेन उपलक्षितः कार्यकारणभावः । स वस्तुद्वयस्य यत् स्वरूपं, तत एव मूलभूतादुत्थितः । निर्मूलत्वे हि तथा विकल्पो न नियमेन उल्लसेदिति निरूपयति **'न'** इति स्वरूपानीतत्वेन । एतत् परमतं दृष्टान्तदूषणोपक्रमं दूषयति **'एतत्'** इति अनियतावस्थानां घटपटादीनां येषां न नियतं पौर्वापर्यं, तेषामपि पौर्वापर्यं दिक्कालकृतं निर्मूलत्वेन विकल्पोत्थापितमिति संभाव्यं यत्, तदपि न उपपद्यते इति पूर्वं दर्शितं

'क्रियासंबन्ध·················।' (२।२।१)

इतिप्रकरणे । **'कार्यकारणता'** इति नियतावस्थानां पौर्वापर्यरूपेत्यर्थः । नियततामेव स्पष्टयति **'यावत्'** इति नियतो योऽन्योन्यमवियोगस्तदेव रूपं यस्या अपेक्षायास्तच्छरीरसाररूपं यस्याः कार्यकारणतायाः । दिगादिसत्ताभावे नियतमपि पौर्वापर्यं न उपपद्यते, दिगादिच सम्बन्धप्राणितं, सम्बन्धश्च तादात्म्यपर्यवसान इति अपेक्षा अपि तादात्म्यरूपैव धूमाग्न्योरिति आशयशेषः । एतदेव स्पष्टयति **'तथाहि'** इति । **'तथैवच'** इति आत्ममात्रनिष्ठतया अन्यासंपृक्तः प्रत्यक्षेणैव सिद्धः । **'एवम्'** इति वक्ष्य-

माणेन प्रकारेण । '**एतौ**' इति अग्निधूमौ । '**एवम्**' इति उपादेयगमकरूपौ । '**अपेक्षाविरहेऽपि**' इति व्यतिरिक्तायामसंभवन्त्यामपि अपेक्षायामित्यर्थः । परेण अपि एतदुपगतप्रायमित्याह '**तथाच**' इति हेतुरन्त्यदशापन्न आकृष्टकार्यरूप एव, कार्यमपि आकृष्टहेतुरूपमेवेत्यर्थः । अर्वाग्दर्शिभिस्तु तद्रूपं द्रष्टुं समर्थनापेक्ष इवशब्दः प्रयुक्तः । अत एव '**तत्कार्यं हेतुव्याप्यव्यतिरेकात् तत्स्वभावाविशिष्टमिति तदनुपलम्भः स्वभावानुपलम्भ एव उक्तः**' इत्यादिप्रदेशेषु उपचार आश्रितः, वस्तुतस्तु तावत्स्वभावतैव तस्य । एतदर्थमेव आर्यः 'स्वभावप्रतिबन्धे सति' इत्यादौ स्वभावपदमवादीत् । भट्टेन अपि स्वभावप्रतिबन्ध एव प्रतिबन्धसिद्धौ समर्थितः । '**तत्**' इति हेतुरूपम् । परेण पुनरसमर्थनीयमेतदिति दर्शयिष्यति '**तेन**' इत्यादिना । एतत् संक्षिपति '**सर्वथा**' इति । आभासविमर्शभेदेन उपलक्षितं यदर्थान्तरम्, तस्य बहिरैक्याभावेऽन्तःसमन्वयलक्षणमैक्यमस्ति एव, इतरथा न अपेक्षार्थः कश्चित् । '**तद्भवति**' इति अपेक्षणीयरूपं न भवतीत्यर्थः । '**पूर्वादि**' इति '**अपेक्ष्यम्**' इति वाक्यत्रये सङ्गमयितव्यम् । बाह्यदर्शने च बहिर्भेदः, प्रमातरि ऐक्यमित्येवंभूतभावस्वरूपानङ्गीकरणादेतदापद्यते इति निरूपयति '**तेन**' इति । '**स्याताम्**' इति नच एवं बहिर्दृश्यते इति आशयः । '**घट**' इति अनियते परस्परमित्यर्थः । '**साध्यतर**' इति नियमेन सहितोपलम्भेऽपि परस्परमकिञ्चिद्रूप एवेति यावत् । अग्निमात्रतैव धूमकारणतेत्यादि यदुक्तं, तदनुवदति दूषयितुं '**तस्मात्**' इति । '**किमपरम्**' इति अग्न्यादिरूपत्वादधिकं तत् न किञ्चिदिति शब्दगतमात्रमिदं भवेत् धूमकारण·········य इति च । '**परस्पर**' इति दण्डी

विषाणीतिन्यायेन अन्योऽन्यरूपलग्नरूपतैव आपतति । सापिच न युक्ता स्वस्वरूपव्यवस्थितेः सर्वार्थानामिति ख्यापयति **'नच'** इति । **'तथा'** इति अन्योन्यलग्नतया न अग्निधूमयोरुपलम्भो निर्विकल्पकोऽनुभवः । ततश्च सर्वासु गतिषु क्षीणासु इदमापततीति कथयति **'अभिप्रायवशात्'** इति । तृषितो हि जललग्नतया न उपलभ्यते, जले च सापेक्षः । तत् हि तस्य संविदि अभिमुखीभावं प्रतिगतमिति । तथैव धूमस्य अग्नौ, तस्य अपि धूमेऽपेक्षा भवेत् । **'सा'** इति अभिप्रायकृता अपेक्षा । एवं यत् पूर्वमुपक्रान्तमेतच्च अभ्युपगम्य उक्तमिति, तत् निर्वाहितम् । ननु किमनेन अभ्युपगमेन, दूषणमेव सौत्रं वृत्तौ कस्मात् न दर्शितम् । दर्शितमेव तदिदं तु अतिप्रसङ्गापादनमधिकं दूषणमुक्तमिति दर्शयति **'इति'** इत्यादि । एतत् वस्तु वृत्तौ विवरीष्यते । कथं पूर्वस्य सामर्थ्यं परस्य सत्तेति । यस्मात् सामर्थ्यपक्षो भविष्यति तेन सह यदैकध्यमेकप्रकारत्वं तुल्ययोगक्षेमत्वं तेन हेतुना । एतदुक्तं भवति **'अस्मिन्'** इति यत् सूत्रे भावं सामर्थ्यं च परामृशति, तदेव इत्थं वृत्तौ दर्शितम्; केवलं पूर्वस्य रूपस्य अतिप्रसङ्गावहत्वोद्भावनया सामर्थ्यपक्ष उपक्षिप्तः प्रतिक्षेप्तुमिति । इत्थमेवच पूर्वमुपसंहरन्नुत्तरं पक्षमवतारयति **'एवम्'** इत्यादिना **'एतदाह'** इत्यन्तेन महावाक्येन । इमां कार्यकारणतां दोषद्वययुक्तां प्रतिपाद्य एतत् वस्तु आह । किं तत् । इयमपि कार्यकारणता न युक्ता उक्तहेतोरित्येतत् । नच सा उत्सूत्रा, अपितु सूत्रेण निर्दिष्टा,—इत्यतो हेतोर्वृत्तौ वर्तनीयत्वेन आश्रीयमाणा । अस्मिंश्च पक्षेऽतिप्रसङ्गो नास्तीत्यमुना हेतुना शङ्क्योऽयं पक्ष इति हिशब्देन सह आह **'कृत्तिका'** इत्यादि । नाभिव्यवस्थितध्रुवावबद्धमिदं नक्षत्रचक्रं युगपदवस्थितमपि नित्यमेव प्रवहदित्थं

क्रमेण घटीयन्त्रमिव परिवर्तमानं दृश्यते परं, नतु क्रमेण उदेति। दर्शनस्य इव नियते पौर्वापर्ये भावस्वभावस्य किमायातमिति दर्शयति **'ननु'** इत्यादिना। अयमपि पक्षोऽतिप्रसङ्गावहः सामर्थ्यस्य दर्शनादर्शनगम्यत्वेन तुल्यकल्पनाकत्वादित्याशयेन आह **'यद्यपिच'** इति। कारणत्वं सामर्थ्यं कृत्तिकानां यद्यपि शक्यं रोहिणीनां तु न कार्यत्वं धूमवत्, तत उद्गच्छत्स्वभावतालक्षणं शक्यमिति चेत्; तत्र अपि उच्यते **'कार्यरूपतापि'** इति। नहि अङ्कुरो धूमवत् प्रसरणस्वभावोऽथच बीजात् क्रमेण प्रसृत उच्यते, तथा रोहिण्योऽपीतिभावः। **'प्रमाणान्तर'** इति प्रत्यक्षेण तत्सन्ताननिश्चयस्य उत्थापितत्वात् कृत्तिकाभ्य उदयरहितं दर्शनमेव क्रमिकमिति यो विशेष उक्तः, सोऽयुक्त इत्येतदाह **'न दर्शनमात्रम्'** इति। ननु पूर्वपूर्वदिनेषु अपि रोहिण्यो दृष्टाः। अथ धूमः किं पूर्वदिनेषु न दृष्टः। दृष्टो वह्न्यन्तरस्तु सन्निति चेत्, रोहिण्योऽपि दृष्टाः, ननु सामर्थ्यमस्ति, वह्न्यादौ तदस्तीति निर्निबन्धनो विभागः कथं श्रद्धीयेत। तदाह **'तथात्व'** इत्यादि। ननु एवं तुल्यत्वे कोऽस्य पूर्वस्मात् पक्षात् विशेषः। न कश्चिदेवेत्याह **'तथापि'** इति ज्योतिःशास्त्रप्रामाण्योपगममात्रमत्र पक्षेऽभ्युपगमबीजमिति आशयः। **'कारणादिमत्त्वम्'** इति आदिपदात्कार्यत्वम्, तथा पूर्वत्वपरत्वनियमादि अपि। ननु वृत्तौ स इति वक्तव्ये कथं **'तत्'** इति निर्देशः। आह **'परस्य'** इत्यादि। न अत्र कार्यकारणभावः परामृश्यते, अपितु तल्लक्षणत्वेन संमतो विशिष्टः सत्त्वभूतो वाक्यार्थ इतिभावः। **'तदपि'** इति उभयमपि यद्विशेषेण सर्वत्र उचितं पौर्वापर्यम्। **'नियममात्रात्'** इति भावमात्रपौर्वापर्यरूपात्। **'स्वभावव्यापिनी'**

इति सार्वत्रिकी । तथाहि स्वनिष्ठतालक्षणं स्वभावमौष्ण्यमिव शीतता परनिष्ठता विरुद्धा सती अपेक्षा कथं व्याप्नुयादिति एका तावदपेक्षा न युक्ता, द्वितीया अपि नतरामित्याह '**अभिप्राय**' इत्यादि । '**अन्यानुषङ्गिता**' इति परनिष्ठारूपा अनुसन्धानरूपा वा सप्तम्युत्थापिता । '**प्रतीतिमात्र**' इति धवश्च खदिरश्चेति धवो वा खदिरो वेत्यादौ हि प्रमातुरभिमानस्थितं परस्परं छिदादावपेक्ष्यमाणत्वं विकल्प्यमानत्वं वा स्फुरति, नतु वस्तुनो रूपं तत् किञ्चित् । तत एव अन्तःसंवेदनधर्मत्वात् चाद्यर्थो बाह्यप्रातिपदिकार्थवदुपचयादिधर्मा सङ्ख्यानधर्मा वा न युक्त इति अलिङ्गसंख्यानमस्य । एवं सामर्थ्यपक्षे सप्तम्यर्थो विघटित इति गत्यन्तराभावात् परस्य यदुचितोपगममत्र, तत् '**अथ**' इत्यादिना '**इति**' इत्यन्तेन आशङ्कते । '**तस्य**' इति पूर्वस्य । ननु परस्य सत्ता कार्यत्वरूपा, सा ततोऽन्यस्य पूर्वस्य सामर्थ्यमिति कथमेतदुन्मीलति । इत्थमित्याह '**तस्य**' इति । यदा तावत् परो नास्ति, तदैव कार्यं उच्यते; तदा च पूर्व एव अस्तीति तद्गतमेव सामर्थ्यं कार्यकारणभाव इति आपतति । असतो हि निःस्वरूपस्य स्वरूपोपरिवर्ती कथं कार्यतालक्षणोऽतिशयो भवेत् । जातस्य तर्हि भविष्यति । आह '**उत्पन्नस्य**' इति सत इति यावत् । उत्पत्तिरेवहि विमतिपदपतिता असतस्तावत्कार्यत्वमनुचितमिति अपिशब्दः । तस्य सतोऽपि स्वरूपेऽतिशयः कार्यतालक्षणः कारणसामर्थ्यादधिको न लभ्यते, तथा वह्नेः कार्योऽयं धूम इत्यत्रापि । अयमर्थः—वह्नेः सामर्थ्यं तत् यदयं धूमो भवतीति । तत्र भवतीति धूमस्वरूपं तस्य कार्यस्य च, वह्नेः सामर्थ्यं तच्च; तदेव पूर्णः कार्यकारणभावः । ननु धूमनिष्ठतैव अग्निकार्यता नाम युक्ता··· '**नहि**' इति धूममात्रता या, सा एकाग्निकार्यता न युक्ता ।

सा हि अग्निनिष्ठा भवति । ततश्च अग्निनिष्ठता अपि धूमे प्रतिपन्ने प्रतिपन्नैव स्यात् । ततश्च प्रमाणान्तरोपयाञ्चा स्यात् व्यामोहस्य अपसृत्यै क्षणिकत्व इव सेति चेदसिद्धमसिद्धेन साध्यते इति आयातम् । नहि भावस्वरूपे प्रतिपन्ने तदनतिरिक्तमप्रतिपन्नमिति युक्तम् । प्रतिपत्तौ कुतो व्यामोहः । धूमरूपतायामपि कुतो व्यामोहो भवेत् । ननु धूमस्य वह्निकार्यता स्वरूपं, ततश्च तामजहत् निःस्वभावोऽयं कथं भवेत् । मैवम् । सा तस्य स्वरूपमित्येतदेवहि विवेक्तुमुपक्रान्तं, नच निर्वहति । तदाह **'ततः'** इति । ननु यदि वह्नेरेव सामर्थ्यमुभयमपि, तर्हि कथं धूमो हि अत्र प्रतीतौ प्रविशति । क एवमाह प्रविशतीति । व्यवहारमात्रेण हि विकल्परूपेण अपेक्षात्मा सम्बन्धः परनिष्ठतालक्षणं वा परस्य रूपमध्यवसीयते । तदाह **'व्यवहारमात्रम्'** इति । इदमपि दूष्यते **'एतदपि'** इति । पूर्वा सत्ता यदि अवास्तवी धूमस्य, तदा तत्प्रयोजकत्वं नाम वह्नेरपि यत् सामर्थ्यं, तदवास्तवमेव स्यादिति कार्यकारणे नाम न केचन स्याताम्; अथ सा वास्तवी, तदा धूमस्य सत्ता या पूर्वा; सा अग्निसामर्थ्यादिति वचो घटोऽयं लोहितः, एतत्पटस्य शौक्ल्यमित्येतत्तुल्यं भवेत् । तदाह **'अन्यस्य'** इति ॥ १४ ॥

प्रतिज्ञामात्रं पूर्वसूत्रेण कृतं हेतुविषयम् **'अपेक्षाविहीनानाम्'** इति । तत्साधनाय हेतुस्तु सूत्रान्तरेण अभिधीयते

**नहि स्वात्मैकनिष्ठानामनुसन्धानवर्जिनाम् ।**
**सदसत्तापदेऽप्येष सप्तम्यर्थः प्रकल्प्यते ॥ १५ ॥**

वृत्तिविवृत्योस्तु एतदर्थोपजीवनं पूर्वसूत्रे कृतमेकवाक्यतादर्शनाय । तत्र प्रथमपादेन अन्योन्यलग्नतात्मिका अपेक्षा निवारिता, द्वितीयेन अभिप्रायकृता कार्यकारणयोरुभयोरन्यतरस्य वा

सत्तायामसत्तायां चेति पक्षचतुष्टयेऽपि संभाव्यमानेऽपेक्षा न युक्तेति हेतुः पूर्वो न युज्यते इति अवान्तरेण उक्तं निगमयति पूर्वप्रतिज्ञाया हेत्वपदेशात् पुनर्वचनमेतदित्यर्थः । वाग्रहणमुत्तरापेक्षम् । **'सत्तायाम्'** इति बाह्ये रूपे, ननु द्वितीये वापेक्षा वैकल्पिके । द्वय्यामपिच अपेक्षायां विकल्पो जीवितम् । वह्न्यौष्ण्ययोर्हि व्यावृत्तिमात्रकल्पितो वैकल्पिको भेदः । यदिहि वह्निरिति भास्वररूपं स्वलक्षणमुच्यते, तदा तस्य स्पर्शस्वलक्षणं तुल्यहेतुकं भवदपि कथं स्वरूपं भवेत् । अत एव वस्तुतः एकधा इयमपेक्षा अनुसन्धानजीवितेत्याशयेन पूर्वसूत्रे जडानामित्येव उक्तम् । अनेनैव आशयेन अस्माभिः सूत्रविमर्शिन्यामेकरसत्वेनैव इदं सूत्रं व्याख्यातम्, इहतु यावद्गति विचारयितुमित्थं विभागेन अपेक्षा व्याख्याता । उभयी अपि नास्तीति प्रतिज्ञाय पूर्वस्यास्तावदसंभवमुपपादयति **'यदि'** इत्यादिना **'नास्ति'** इत्यन्तेन । **'कार्यता'** इति बीजमेवहि तावदङ्कुर इति न ईदृगवभासः क्रमविचित्रो भाव इत्यपि उक्तम् । देशक्रमचित्रे चित्रपटे यथा भागशः कार्यकारणताकल्पनं कल्पनमेव, तथा कालक्रमचित्रेऽपि भवेदिति कार्यमेव न किञ्चिदिति कथं सत्कार्यसिद्धिः । तथाहि एकमेव देशकालक्रमचित्रं यत्, तदेव विश्वं स्यात् । **'भवतु'** इति प्राप्तकालातिसर्गलोटा भवदपि तत्कार्यमित्यर्थ उक्तः । **'एवम्'** इति कालभेदादेवेत्यर्थः । **'अन्यथा'** इति कारणस्य यदि कार्यनिष्ठमेव स्वरूपं, कार्यस्य च कारणनिष्ठम्, एवं यदि भवनस्वभावता अनयोस्तदा तदेवेति धूमासंपृक्तेन वपुषा यत् वह्निरवलोक्यते धूमोऽपि वह्न्यसंपृक्तेनेति, तदेतत् नियतरूपं न स्यात् । नहि शुद्धं तस्य रूपमस्ति वह्नेरिव औष्ण्यशून्यम् । **'तच्च'** इति अन्योन्यरूपतया भवनं यत् संभावितम् । ननु द्विप्रकारा अपि यदि

अपेक्षा नास्ति, किमियता सप्तम्यर्थो न कल्पते इति शङ्कित्वा आह **'एवंच'** इति सप्तमी किमनर्थिका, ततः प्रातिपदिकार्थमात्रेणैव अर्थवती, किंवा प्रातिपदिकार्थातिरिक्तेन वैकल्पिकेन अर्थेन, आहोस्वित्प्रातिपदिकार्थातिरिक्तेन वस्तुभूतेन । तत्र त्रिषु पक्षेषु अनुक्तसमता वस्तुतः । चतुर्थं पक्षमाह **'उतस्वित्'** इति **'किञ्चिद्भूतम्'** इति वास्तवमकल्पितमित्यर्थः । तत्र नैरर्थक्यं निराकरोति **'तत्र'** इति । तावद्ग्रहणेन सर्वप्रसिद्धिविरोधोऽत्र हेतुः सिद्ध एवेत्याह । चतुर्थपक्षम् **'अथ'** इति संभाव्य दूषयति । **'तदेतत्'** इत्यादिना तद्विशिष्टं रूपं निर्दिशति **'विद्यमानम्'** इत्यन्तेन । प्रथमान्तादीतिपाठे आदिशब्दस्तिङां संग्रहाय । **'तदेतत्'** इति उक्तविशेषणविशिष्टम् । **'तावत्'** इति यत् किञ्चित् कर्मादिकारकशक्तिसम्बन्धतद्भेदरूपं तावदिति, तत् सर्वमपाकृतमुक्ताभिर्युक्तिभिः । ननु सर्वं कस्मादपाकृतम् । आह अर्थान्तरं प्रधानसंमतमभिलष्यति अनुधावति न स्वात्मनि विश्राम्यति यदेतदेव रूपमन्योन्मुखत्वस्य । ननु द्वितीयादयो गुणविभक्तय उच्यन्ते, तत् प्रातिपदिकार्थस्य ताभिर्गुणभाव आधेयः, ननु अन्योन्मुखत्वमुच्यते, तदेवहि गुणभाव उच्यते । तदाह आसादितः प्रापित एतावन्मात्रलक्षणः स्वात्माविश्रान्त्यात्मको गुणभावो येन प्रातिपदिकार्थस्तत् । आसादिः प्रापणार्थो द्विकर्मकः । अनेन **'प्रधान'** इति **'गुणविभक्ति'** इति च वृत्तिर्विवृता । बीजे सति अङ्कुरो, बीजादङ्कुरो, बीजेन अङ्कुरोऽङ्कुरस्य बीजमित्येवंप्रायः कार्यकारणभावो न युज्यते एवेति उपसंहरति **'सप्तमी'** इत्यादिना ॥ १५ ॥

एवं सौगतादिदृशि कार्यकारणभावो न उपपद्यते इति उपपाद्य स्वदर्शने तमुपपादयति

**अत एव विभक्त्यर्थः प्रमात्रेकसमाश्रयः ।**
**क्रियाकारकभावाख्यो युक्तो भावसमन्वयः ॥ १६ ॥**

यतो जडानां न अपेक्षा, अत एव हेतोर्भावानां विभक्तिभिः सप्तमीपञ्चम्यादिभिरभिधेयो यः समन्वयः, स सति प्रमातरि तद्विश्रान्तिद्वारेण भवन् क्रियाकारकभावरूप एव प्रमाणोपपन्न इति सूत्रार्थः । तं संक्षिप्य अवतारयन् **'अत एव'** इति सौत्रं व्याचिख्यासुः पूर्वोक्तं सर्वं हेतुतया उपजीवति **'यतश्च'** इति । **'वस्तुस्थिति'** इति धूमार्थी वह्निमादत्ते, धूमात्स प्रतीयते इति हि उक्तम् । भेदाभेदमयतां व्याचष्टे **'अन्योन्य'** इति **'अनुसन्धात्रेक'** इति हेतुद्वयेन । **'अन्येषाम्'** इति अकार्यकारणात्मनां स्वस्वाम्यादीनाम् । **'व्यपदेश्य'** इति व्यपदेशार्हः । **'कृषीवल'** इति चिद्रूपः । शृङ्गादित्यादावीश्वरश्चिद्रूपः कृषीवलस्य अपिच ईश्वरः इति विशेषणम् ॥ १६ ॥

ननु बीजाङ्कुरादीनां स्वात्मैकनिष्ठत्वे मा भूदपेक्षा, साङ्ख्यसंमते तु परस्परात्मकत्वे को दोष इत्याशङ्क्य

**परस्परस्वभावत्वे कार्यकारणयोरपि ।**
**एकत्वमेव भेदे हि नैवान्योन्यस्वरूपता ॥ १७ ॥**

सूत्रेण एतत् प्रत्यक्षबाधितं तावत् प्रकृतं च कार्यादिवादं बाधते इत्याह । स्पष्टमन्यत् ॥ १७ ॥

एकमेव क्रमविचित्रस्वभावं वस्तु । तस्य स्वभाववर्गस्य मध्ये पूर्वः स्वभावः कारणमुत्तरः कार्यमिति साङ्ख्यदृशि शुष्क एव कार्यकारणभावः । न शुष्कस्तत्रापि क्रियाकारकभावस्यैव प्रथनादित्याह सूत्रेण

**एकात्मनो विभेदश्च क्रिया कालक्रमानुगा ।**
**तथा स्यात्कर्तृता चैवं तथापरिणमत्तया ॥ १८ ॥**

तत एव अमी सुखाद्या विचित्रवैषम्यभाजस्तदेव इदं बीजमा-

त्मातिशयाद्यङ्कुरावस्थापर्यन्तीभूतमिति प्रत्यक्षानुमानागमाद्यन्यतममानप्रत्यभिज्ञानबलेन यदेकात्म संकुचितदृशा बीजं, विततदृष्ट्या वा प्रधानम्, तस्य एकाश्रयस्य य आभासानाभासोत्थापितक्रमात्मककालविभागानुगृहीतः स्वभावभेदः; इयमेव सा परिणमनलक्षणा क्रिया पूर्वस्य स्वभावस्य परित्यागेन अनुविवृत्सितस्य परिवर्जनेन अपहानेन उत्तरे स्वभावान्तरे नमनं प्रह्वता औत्सुक्यमिति । ततश्च तद्वतस्तस्य प्रधानबीजादेः शुष्करूपसंमतस्य अपि हानादानादौ न अनुवर्तनलक्षणपरिणमनक्रियावेशस्वातन्त्र्यात् कर्तृत्वमेव भवेदिति सूत्रार्थः। एनमवतारयति **'त्रिगुणात्मनः'** इति सुखदुःखमोहरूपस्य समन्वयबलेन प्रत्यभिज्ञायमानत्वादवस्थितस्य नित्यस्य अभिन्नस्वावस्थाकस्य निःशेषोत्तरदशोपादानभूतस्य वा। **'महत्'** इति बुद्धिः। **'पृथिवीपर्यन्ता'** इति समस्तसुसूक्ष्मव्यूहविभवपर्यन्तेति यावत् । **'बीजस्य वा'** इति लोकदृष्ट्या । **'अङ्कुरपर्यन्ता'** इति सजातीयपरिणामाद्यतिशयप्रमुखेति आशयः। परिणमने क्रियालक्षणे पूर्वोक्तं योजयति **'क्रिया हि'** इति **'गुणस्वाभाव्यात्'** इति च। **'गुणवृत्तम्'** इति विविधवैषम्यात्मकविश्वरूपतासहत्वात् केवलं नहि चित्रीभवति नीलमिव, सत्त्वतमसी तु परस्परविभिन्ने रजसा चञ्चलेन विचित्रेण चित्रतया अन्योन्याभिभवादिविचित्रभावेन परिणामसहस्राणि नीयेते । तत उचितं वैश्वरूप्यम् । तदुच्यते **'नामिश्रं परिणमति'** इति व्यतिरेकेण। **'पुरुषार्थत्वेन'** इति भोग्यरूपत्वेन। दृश्यं प्रधानमविवेकेन दर्शनं भोग्यापरपर्यायं, विवेकेन च दर्शनं कैवल्यकारणतया मोक्षव्यपदेश्यं पुरुषस्य द्रष्टृशक्तिं कृतार्थां विदधत् पुरुषार्थमिति उच्यते, **'तथापरिणमत्'** इतीयता परमतानुवादः । शिष्टं स्वदर्शने पातनमस्य उपगम्यम् । **'अस्य व्यक्तस्य'** इति महदादेः ॥ १८ ॥

ननु इयता उक्तेन प्रधानस्य कर्तृत्वं समर्थितं भवेत्, न चिद्रूपस्य; तच्च न अनिष्टं परस्येत्याशङ्क्य सूत्रं

**नच युक्तं जडस्यैवं भेदाभेदविरोधतः ।**
**आभासभेदादेकत्र चिदात्मनि तु युज्यते ॥ १९ ॥**

'**एवम्**' इति अभिन्नरूपस्य धर्मिणः प्रवहद्धर्मभेदसंभेदनस्वातन्त्र्यात्मकं परिणमनक्रियाकर्तृत्वं यत् निरूपितम्, तत् प्रधानादेर्न युक्तं जडत्वात् । जडो हि परिनिष्ठितनिजरूपः प्रमेयत्वात् तदसावित्यपेक्षया भिन्न इव व्यवस्थाप्यो नील इव अनीलापेक्षया, स्वापेक्षया तु अभिन्न एव, नतु स एव स्वभावो भिन्नश्च अभिन्नश्च विरोधात् । स्वभावान्तरत्वे कथमेकत्वं

'भेदाभेदव्यवस्थैवमुत्सन्ना............।'

इतिन्यायात् । तस्मात् जडमनेकरूपं न भवति प्रमेयत्वात् नीलादिवदिति अनेकविरुद्धमेकत्वं, तेन व्याप्तं प्रमेयत्वं, परिनिष्ठितरूपतया व्यवस्थापनीयत्वं प्रमेयत्वमिति विरुद्धव्याप्तोपलब्धिः । चिदात्मनः पुनः प्रमेयदशानापन्नस्य दर्पणस्य इव स्वच्छस्य स्वतन्त्रस्य च चित्रसंवेदनस्य इव प्रतिबिम्बभूत आभासवर्गो भिन्न एकस्य अपि न्यायेन घटते इति सूत्रार्थः । एनमवतारयति प्राक्तनमुपसंहरन् '**एवम्**' इत्यादिना । शुष्कः कर्तृतात्मस्वातन्त्र्यलक्षणोभयमेलनात्मकरसशून्यः । एषा तावदुपपद्यते हेतुता, सापितु परदृशि न युज्यते इति अपिः । '**अत एव**' इति यतो जडत्वानुपपत्तौ हेतुस्ततस्तद्विरुद्धमजडत्वमुपपत्तौ हेतुरिति अयत्नसिद्धम् । ननु हस्तिपर्वतादीनि किमिति तत्र एकतां न विरुन्ध्युः । विरुन्ध्युर्यदि तानि कानिचित् स्वरूपेण भवेयुः । नच एवम् । दर्पण एवहि तानि । तदाह '**नहि**' इति । स्वातन्त्र्यविहीनेऽपि स्वच्छतामात्रस्य अयं महिमेति अपिः । '**नच**' इति भवदपि एतत्

न अस्माकं पक्षं बाधते । मूलत एवच इदं न उपपद्यते इति उभयथा यदुपक्रान्तं '**नच भेदेऽपि**' इति, तत् क्रमेण विभजति '**भ्रान्त्यापि**' इत्यादिना '**नच भ्रान्तिः**' इत्यादिना च । '**तावन्मात्रम्**' इति तथाप्रथनम् । तदेव स्पष्टयति '**एकम्**' इत्यादिना । ननु आदर्श इव मृत्पिण्डोऽपि अनेकतया भासताम् । अत्र आह '**नच**' इति । अस्वच्छे हि प्रतिबिम्बानेकता विचित्रप्रतिबिम्बधारित्वरूपा हीयते प्रमाणेन न उपपद्यते । अस्वच्छश्च घटशरावाद्यपेक्षया मृत्पिण्ड इति एकः सन्नसौ न अनेको भवति । अथ स्वच्छमेव किञ्चित् घटादि प्रतिबिम्बानेकयोगि भण्येत, तर्हि परिणामवादोऽयं न भवति परिणामवादे परिणामानां पृथगेव वस्तुतोपगमात् । नचापि स्वच्छमिति तु पाठेऽयमर्थः—स्वच्छमपि वस्तु प्रतिबिम्बानेकत्वं हित्वा प्रकारान्तरेण एकं सदनेकं न युज्यते, प्रकृते तु प्रकारे परिणामवादो हीयते '**बाधकाभावात्**' इति सर्वसंवादित्वेन विमर्शानुन्मूलनादिति यावत् । ननु सामान्यावयव्यादौ सर्वानुभवसंवादेऽपि यौक्तिको बाधः, तद्वत् प्रकृतेऽपि स्यादित्याशङ्कां शमयति '**एकस्य**' इत्यादिना । सामान्यादेरपिहि सर्वसाधारणाभासविषयस्य विमर्शस्य उन्मूलनं न किञ्चिदिति विचारितचरमेव । '**तथानुभवेनैव**' इति सार्वत्रिकेन सदातनेन चेति यावत् । ननु एवं प्रधानस्य परिपेलवतमगुणगणरूपस्य स्वच्छस्य जडस्य अपि आदर्शस्य इव न प्रतिबिम्बरूपं भविष्यति महदादि । सत्यम्, दर्शनक्षतिस्तु साङ्ख्यस्येत्याशयेन तद्दर्शनमाह '**जडस्य तु**' इति । '**वस्तुसत्ताः**' इति ननु प्रधानमात्रैकपरमार्थतया अन्योन्यमकिञ्चिद्रूपाः । एतदेव आह '**ननु**' इति । परिणामवादे अविद्याकृता सत्ता न इष्यते यथा ब्रह्मदर्शने । ननु अविद्या तुच्छरूपा, सा कथं सत्तां कुर्यात् । आह

उपप्लवरूपा सा सत्ता तुच्छैवेति यावत्, यदिवा अविद्याकृत-सत्तायामपि वास्तव्यामुपप्लवात्मकं तुच्छं रूपं येषां, ते तादृशा न इष्यन्ते साङ्ख्यैरिति समस्तपदं पूर्वेण संबन्धनीयम् । तस्मात् यदुच्यते

'गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथप्राप्तं तन्मायेव सुतुच्छकम् ॥'

इति, तत् प्रधानब्रह्मवादे, नतु प्रधानपरिणामवादे इति मन्तव्यम् । एतदेव घटयति **'अयमेव'** इति । **'हि'** इति यत एवं, ततो युक्तमस्माभिर्विभक्तम् । नच एतत् स्वबुद्धिकल्पनामात्रं यस्मात् परिणामवादे धर्मिणां धर्मरूपता, धर्माणां धर्मिरूपता अङ्गीकृतैव । **'तथाच'** इति धर्मधर्मिरूपतया । एवं परिणामवृत्तान्तं प्रदर्श्य विवर्तवृत्तान्तं परोपगतमाह **'ब्रह्मणस्तु'** इति । **'एकस्य'** इति **'तत्त्वादप्रच्युतस्य'** इत्यपि एकत्वेनैव आक्षिप्तमिति पृथङ् लिखितम् । **'भेदानुकारेण'** इति तु असत्यविभक्तताभिधानेनैव स्वीकृतम् । एकस्य विभक्तरूपग्राहिता मृत्कूटस्य शरावादिरूपग्रहणेन कूटरूपतत्त्वे च्यावस्तु असत्यरूपग्रहणेन परिणामवादात् भेद उक्तः । असत्यविभक्तरूपतेति उक्ते अविभक्तरूपतैव शङ्क्येत रज्जोरिव स्रक्सर्पाद्यवभास इति अन्यपदम् । ननु तानि चेद्-सत्यानि रूपाणि, कथं ब्रह्मणोऽन्यानीति का विभक्तता; अथ ब्रह्मणोऽनन्यानि, तर्हि भवति विभक्तत्वमसत्यता तु कुतः । अत्र आह **'चिदात्मनो ब्रह्मतत्त्वात्'** इति विशेषणेन अनपह्नवनीयतां प्रकाशस्य दर्शयति **'अस्य'** इति ब्रह्मणः । सर्वप्रवादेषु अविचारितचारुत्वमेव अविद्यायास्तत्त्वं विचारस्य विद्यारूपस्य प्रकाशस्य इव तमस्तत्त्वेऽविद्यासतत्त्वे निरूप्येऽवकाशायोगात् । इयता परिणामवादे तावत् न सत्यत्वमिति उपपादि-

तम् । ननु मा भूदसौ, प्रधानब्रह्मवादस्तु भविष्यति यथा उच्यते श्रुत्यन्तेषु । एतत् न सहते '**तत्र**' इति जडस्य प्रमेयरूपस्य विरुद्धधर्मयोगेन ऐक्यानुपपत्तिर्हि वितत्य उक्ता

'भेदाभेदव्यवस्थैवमुत्सन्ना·················· ।'

इति । ततो जडब्रह्मवादो न युक्तः, संविद्ब्रह्मवादस्तु उपपन्नः स्वदर्शन इति आवर्तयति '**चिदात्मनि**' इति । अपरिच्छिन्नप्रकाशस्वातन्त्र्यमेव चिल्लक्षणम् । '**एषाम्**' इति भावानाम् । ननु च अविद्यारूपत्वं चिद्ब्रह्मणि इव जडब्रह्मणि अपि समस्तोपालम्भसंभारभञ्जनब्रह्मास्त्रं भविष्यति । मैवम् । संविदो हि स्वातन्त्र्यादतिदुर्घटकारित्वं नाम या शक्तिरपूर्णख्यातिपरमार्थामख्यातिं प्रकाशधामनि खण्डनारूपनञर्थोल्लेखनावेदनस्वभावामुल्लासयन्ती, सैव मायाभिधाना अविद्यासमुत्थापकत्वादविद्येति उच्यताम्; नतु जडस्य इयमस्ति । तत्सद्भावे हि किं जाड्यं नाम। पूर्णमेवहि अजाड्यमदः। '**अत्र**' इति ब्रह्माद्वये। आदिशब्देन भगवति शक्तिसञ्चयगणनमशक्यमिति दर्शयन्नेतदाह अस्मद्दर्शनानभ्युपगमे ब्रह्मविवर्तवादो जडविवर्तवाद एव । तत्र च अविद्या अपि विवर्ततत्त्वोपपादिका न समर्थयितुं शक्येति वितानितं श्रीशिवदृष्टौ । तदेतदुक्तं '**यदि**' इत्यादिना '**स्यात्**' इत्यन्तेन। परमशिवरूपत्वादि परापरमध्यमपरपर्यन्तं यत् संविदः सतत्त्वं, न तत् वेदान्तवादिनां स्पष्टेन पथा दृश्यते पारमेश्वराद्वयसंवलने तु स्यादिति आशयः । अथ यदुक्तं, '**चिदात्मनोऽत्यन्तनिर्मलत्वात्प्रतिबिम्बन्यायेन**' इति तत्र पराशङ्कां व्यपोहति '**नच**' इति। इति च न शक्यं वक्तमिति सम्बन्धः । हेतुमाह '**अस्ति तावत्**' इति स्वच्छस्य वस्तुनः स्वविलक्षणं रूपमादर्शयतोऽपि स्वच्छरूपस्य अनुपाधिकत्वमिति हि आ-

वेदिते स्वच्छत्वस्य अयं प्रभाव उक्तो भवति, नतु प्रति-बिम्बतायाः प्रतिबिम्बादिरूपस्य स्वयमसारत्वात्; असारस्य च का प्रभावचर्चेति सारस्वच्छप्रभाव एव अयं वर्णनीयः । तत्तु स्वविलक्षणं रूपं यदन्यत्, तत्सादृश्यमपेक्ष्य आदर्शनीयम्; तदा प्रतिबिम्बव्यवहारः, समर्पकान्तराभावे तु निर्मेयव्यवहारः । अत एव प्रतिबिम्बत्वेनेति न उक्तमपितु प्रतिबिम्बन्यायेनेति । तदाह **'तत्र तु'** इति आदर्शे सप्तम्यर्थोपक्रमेऽपि च । **'चित्तत्त्वस्य'** इति षष्ठ्या यदाकृतिभेदनं, तदैश्वर्यशक्तिसम्बन्धितां प्रकृतप्रमेय-रूपां निर्वाहयितुम् । ननु एवं प्रधानमपि आदर्शकल्पं भवत् मह-दादिप्रतिबिम्बचित्रितं भविष्यति । न एतदित्याह **'एकस्य'** इति अत्यक्तस्वभावस्येत्यर्थः । **'एष्टव्य'** इति अन्यथाहि न परिणाम-वादो भवेत् । विवर्त एवहि तदा स्यात्, सोऽपिवा अयुक्तः सम-र्पकान्तराभावे प्रतिबिम्बत्वायोगात् जाड्येन च निर्माणसामर्थ्ये निर्मेयत्वायोगात् । ननु स्वच्छ आदर्शः किं पर्वतादिरूपो भवति, उत तथा भासते । उभयथा अपि अदोष इत्याह **'स्वच्छस्य तु'** इति । ननु स्वनिष्ठता कथं युक्ता विरुद्धधर्माध्यासापत्तेरपरिहारात् । विरुद्धता एव न काचिदित्याह **'तथादृष्टत्वादेव'** इति । ननु एवम् **'आभासभेदात्'** इति सूत्रे **'चिदात्मनि'** इति च किमर्थमुक्तं स्वनिष्ठोऽपि हि स्वच्छस्य जडस्य अपि च संभवत्येव भेद इत्याशङ्क्य आह **'स च यथा'** इति येन प्रकारेण तथादृष्टत्वलक्षणेन सोऽविरुद्धीक्रियते भेदस्तेन प्रकारेण फलत आभासनिष्ठतायां विश्राम्यति दर्शनस्य प्रमातृव्यापारत्वेन आभासविश्रान्तत्वात् । अगृहीतपुरपर्वतादिप्रतिबिम्बसहस्रसंभेदिनोऽपि हि आदर्शस्य आभाससारमेव तत्त्वतो वपुः । आभासो दृश्यते हि अत्रेति हि आदर्शः । ननु एवं प्रतिबिम्बग्रहणे जडस्य विरोधात् चिदात्मन

एव एकस्य भेदेन स्थितिरित्येतत् युज्यते, जडस्य तु एवमयुक्तम्; अभिन्नस्य भेदस्थितिर्हि विरुद्धेति वृत्तौ किमिति प्रतिबिम्बधारणं दर्शितम् । किञ्च निर्मेयता चिदपेक्षया भावानां, न प्रतिबिम्बतेति । अत्र आह '**प्रतिबिम्ब**' इति । दृष्टान्ताशयेन एतदुक्तमिति यावत्, अथवा यद्विना यत् नीरूपमपृथग्भूतमपि पृथग्भूततया इव निर्भासते, तत् तत्र प्रतिबिम्बमिति प्रतिबिम्बसामान्यलक्षणं चिदपेक्षया अस्ति भावानाम् । नच आदर्शोऽपि नाम स्वतन्त्रः कश्चित् जडः । सोऽपिहि तथाभासनपरमार्थ एवेति जडस्य असंभव एव प्रतिबिम्बादिति आशयोऽत्र टीकायां वर्णनीयः। अथ बाह्यार्थवादिनो मतं निराकरोति आशङ्कमानः '**नच**' इति इतिशब्दान्तमेतत् यदाचार्यधर्मोत्तरादिभिरुक्तम्, तत् न वचनार्हं यत एवमित्यत्र ग्रन्थेन सम्बन्धः । किं तैरुक्तम् । आह '**यद्यपि**' इत्यादि '**अर्थस्य**' इत्यन्तम् । '**यद्यपि**' इत्यादिना '**अनुपपत्तेः**' इत्यन्तेन विज्ञानमात्रवादिसंमतं यदनुमानं—यत् प्रकाशते, तत् प्रकाशादभिन्नमिति, तदनुभाषते । अत्रैव प्रयोगे हेतुसाम्ययोर्विरोधं दर्शयितुं तमाह '**तथापि**' इत्यादिना । प्रकाशते हि नीलं, नीलतैवच संविद्रूपादहन्तालक्षणात् प्रकाशात् भिन्नता स्वप्रकाशरूपता च । ततश्च अहंप्रकाशादभिन्नं नीलमिति नीलं न किञ्चित् भवेत् । ननु एवमेतत्, नीलस्य हि संविदेव परमार्थः । एतत् परिहरति '**चिन्मात्र**' इत्यादिना । यत् न भाति यस्य रूपं, तत् तस्य परमार्थ इति महती इयं माया । ननु यथा पर्वतस्य दर्पण एव तत्त्वतो रूपं, तथा नीलस्य अपि संविदिति परमतं पराकर्तुं दृष्टान्तमेव अपनुदति '**दर्पण**' इत्यादिना। स्वदेशगत एव हस्ती दर्पणे रूपसन्निवेशमात्रेण संक्रान्तः, स्वदेशगतात् वा हस्तिनोऽन्यरूप एव संनिवेशमात्रात् स हस्ती तथाभूत

एव जातः इति न अस्य दर्पणरूपता सत्त्वम् । ननु रूपम······
कथं मिश्रीभवेत् सप्रतिघधर्मत्वात् तस्य । अत्र आह **'नहि'** इति ।
तत्र तद्दर्शनमिति हि यदि निष्प्रतिघत्वं, तदालोकरूपेऽपि
तदन्तर्गतघटादिसहस्रे समस्ति; एकतापत्तिस्तु न हस्तिदर्पणरूप-
योरपि अत्र घटरूपयोरिवेति समानम् । ननु आदर्श एव अय-
मित्थंभूत इत्यस्ति प्रतिपत्तिः । अत्र आह **'भ्रान्तिरेवहि'** इति ।
एषेति घटस्य दर्पणात्मता भ्रमज्ञानोपकल्पिता, नतु तत्त्वम् ।
ननु एवं नीलस्य कथं प्रकाशमानता ज्ञानस्यैव प्रकाशधर्मत्वादि-
त्याशङ्कां व्यपोहति **'ज्ञानस्य चैवम्'** इति । न खलु नीलं
प्रकाशते, ज्ञानमेवतु आत्मना प्रकाशमानमनात्मना अपि प्रकाशते
इति नीलप्रकाशरूपज्ञानप्रकाश एव नीलप्रकाश इत्येतदायातमङ्गी-
कार्यमेव । कुत आयातम् । आह अर्थादर्थावभासनस्य अनिह्नव-
नीलमयत्वात् ज्ञानलक्षणस्य च अर्थस्य अनादिसिद्धैवंभूतस्वभाव-
त्वात् । ननु आत्मानात्मनोर्विरोधात् कथं तदुभयप्रकाशनमेकस्य
रूपं भवेत्, अर्थश्च अणुस्थूलात्मा षट्कयोगरक्तारक्तादिदोषदुष्ट
इति । अत्र आह **'अत्रैव'** इति उभयरूपत्वसमर्थने संवेदनस्य
अवसायग्रहणेन इदमाह—वस्तुतोऽत्र बाधोऽसम्भवत्वादेव परि-
हृतो वस्तुनः संकुचितात्मनो देशतः कालतश्च अणुरूपस्य क्षणिकस्य
विरोधाभावात् ज्ञानस्य च अनादिसिद्धतया स्वभावत्वात्, केवलं
तथा निश्चेतुमशक्ताः परैः शुष्कतर्ककर्कशैरसन्न्यायैर्जीयन्ते इति ।
**'अस्य'** इति ज्ञानस्वभावस्य प्रतिभासमानस्य च बाह्यस्य अबाधि-
तसंवेदनसाक्षिकस्य उल्लङ्घने स्वच्छन्दवादित्वमापद्येतेति वितान-
नार्थिना बाह्यार्थसिद्धिग्रन्थोऽत्र स्मर्तव्यः । एतत् नेति यदुक्तं, तत्र
हेतुमाह **'यतः'** इति । अनेन च दृष्टान्तसमर्थनेन स्वच्छस्य विल-
क्षणरूपान्तरावभाससामर्थ्येन व्याप्तिरुक्ता । **'तथैव'** इति दर्पणा-

न्तरावस्थानेन । '**भवतैव**' इति प्रतीतिसिद्धं न अपह्नवनीयमिति वदतेति अयमाशयः । '**ततः**' इति एवमभिधानात् । '**देशान्तरस्थ**' इति यः सत्यसंमतो हस्ती, स एव तावदसौ न ततो देशभेदेन अवभासात्, तत एव स प्रतिसंक्रान्त इति निस्तत्त्वं भाषामात्रमदः, नापि हस्त्यन्तरवत् तज्जातीयो दर्पणपारतन्त्र्याव-भासननियमाभावप्रसङ्गात् । तदाह '**तथाप्रकाशनाभावात्**' इति । यदपि उक्तमन्य एवायमिति, तदपि अपनुदति '**आदर्शाभ्यन्तरे**' इति । रूपैकतत्त्वो हस्ती स्वतन्त्रस्तावत् न भवति दर्पणदेशत्यागेन अनवभासात् । गृहाभ्यन्तर इव दर्पणाभ्यन्तरे भातीति चेत्, आह '**आदर्शरूपेण**' इति । निबिडं हि रूप-मादर्शस्य, तत्र कथमस्य प्रवेशो भवेत्, तत्परमाणूनां वा सान्त-रव्यन्तरतायां दर्पणपर्वतसन्निवेशद्वयमेव न भायात्, आलोक-रूपापसारणेनैवच घटादिरूपाणि दृश्यन्ते, नतु तद्देशमात्ररूपाणि । एतच्च पिशाचटीकायां (१।७।११) वितत्य विचारितमेव । प्रतीत्यन-पह्नववादिनश्च इदमापततीत्याह '**तच्च**' इति । '**दृश्यते**' इति । नच तथेतिभावार्थः । तमेव हेतुत्वेन निर्दिशति '**तत्**' इति । '**अन्यत्र**' इति आदर्शस्य मध्ये पृष्ठे पश्चाद्भागे स्वतन्त्रे देशान्तरे वा । ननु अभ्रान्तिप्रतीतिसिद्धं न अपह्नवनीयं, भ्रान्ता च इयमादर्शेऽद्रिप्रतीतिरित्याशङ्क्य भ्रान्ततां निराकर्तुं ताद्रूप्यं तावत् परिघटयति '**पीतमेव**' इति । वैधर्म्येण दृष्टान्तो-ऽयमतिरोधानापेक्षया, यदिवा प्रमात्रन्तराणां शुक्लरूपमपि स्फुर-त्येवेति साधर्म्येणैव कथं न आदर्शरूपं स्यादितित्येतदपेक्षया तु मुख्यत्वेन साधर्म्यदृष्टान्तः । पीतरूपस्य हि यथा शुक्लरूपपर-मार्थत्वमेव इष्यते शुक्लरूपेणैव ज्ञानजनकत्वात्, तथैव पर्वतरू-पस्य आदर्शरूपपरमार्थतैव युक्तेति पीतरूपस्य तु असत्यतेति

अन्यदेतत्। नेत्याह **'तत्रैवच'** इति पीतशङ्खादौ, नतु दर्पणपर्वतादावितरस्य शुक्लरूपस्य परमार्थसतोऽपि अप्रख्यानात्। अख्यातिरेवच अपूर्णख्यातिमयी भ्रान्तेस्तत्त्वमिति उपपादितमेव, प्रकृते तु न अख्यातिः काचिदिति दर्शयति **'उभयोरपि'** इति दर्पणपर्वतयोः। **'तेनैव'** इति द्वयप्रकाशेन एवमवस्थाप्यते दर्पणरूपं पर्वतरूपानाक्रमणेन अपि, पर्वतरूपं दर्पणरूपानाक्रमणेनेति, पीतशङ्खादौ तु नैवमित्याह **'नहि'** इति। पीतावरुद्धं शुक्लं, शुक्लाकाराक्रमणेन च पीतमिति न व्यवस्थापयितुं शक्यं कामलावतां शुक्लस्य अवेदनादितरेण च पीतस्य। ननु दर्पणोऽल्पदेशोऽल्पपरिमाणश्च, तद्विपरीतस्तु पर्वत इति देशेन परिमाणेन च विरोधात् कथमन्योन्यरूपतालक्षणो विरोधः। यदाह

'विरुद्धपरिमाणेषु वक्त्रादर्शतलादिषु।
पर्वतादिसरूपाणां भावानां नास्ति संभवः॥'

इति। एतत् निराकरोति देशपरिमाणविरोध एव नास्तीति वदन् **'विततमपि'** इत्यादिना। **'तस्य देशादेः'** इति पर्वतदेशस्य पर्वतपरिमाणस्य च दर्पणदेशपरिमाणोल्लङ्घनेन प्रसरणं यतो नास्ति। ननु अप्रसरणं चेत्, भ्रान्तत्वमस्तु पीतस्य इव शुक्लोल्लङ्घनेन अप्रसरतः। अत्र उच्यते **'अतिरोधनाच्च'** इति पीतेन तु शुक्लं तिरोधीयते एव यतो न ख्यातिः। ननु पर्वत आदर्शसतत्त्वमिति अतिदन्तुरमेतत्। न काचिदत्र दन्तुरतेत्याह **'तथाभूतस्य च'** इति अविरुद्धदेशपरिमाणस्य **'वस्तुनः'** इति अभ्रान्तस्य अदर्शनमात्रसारत्वमवलम्ब्य सिद्धिर्यतः। नच सा असंभविनीत्याह **'संभवित्वेन'** इति इत्थंभूततृतीया। तत्र हेतुः **'तथाप्रकाशसामर्थ्यात्'** इति। एतदेव स्फुटयति **'विरुद्ध'** इति आपाते यद्यपि विरोधोऽवकल्प्यते, तथापि न

असौ विरोध इति। तदाह **'तथाप्रथनादेव सन्'** इति। ननु आपाद्यमानो विरोधो विरुध्यते कथम्। इत्थमित्याह **'विरुद्धत्व'** इत्यादि। एतदेव हि आदर्शस्य स्वच्छस्वभावत्वं सुस्पष्टमभिष्टुवते निष्टङ्कयतो भावतत्त्वम्। ननु भ्रममात्रमेतदुच्यते, किमत्र यत्नेन वस्तुत्वसमर्थनायामित्याशङ्क्य आह **'ननु'** इति। इह च उभयपूर्णप्रख्यायां स्वच्छरूपैवंविधताप्रख्यायां च न काचित्ख्यातिरिति भावशेषः। ननु परस्पराविरोधे पर्वततत्त्वं दर्पणरूपमित्यपि न कस्मात्, ततश्च नीलादिपरमार्थं चित्तत्त्वमिति आपतेत् नीलादेः परमार्थत्वम्। एतत्पराणुदति **'पर्वतादि'** इति पर्वतादिविरहेण अपि शुद्धस्वच्छतया भावात् तथैवच अर्थक्रियाकरणात् चित्तत्त्वस्य अयमेव विधिरनुसर्तव्यः। ननु दर्पणाकारावरोधित्वे समर्थितेऽपि दर्पणैकरूपत्वं कथं स्यात्, असद्वा कथं न भवेदिति भ्रमं भनक्ति **'नचापि'** इति नच न दर्पणरूपं, नच असदिति शक्यं वक्तुमिति। अत्र हेतुः **'दर्पणाकारस्य अवरोधेन परमार्थतोऽवष्टम्बनेन भासमानमपि'** इति। ननु एवंभूतमपि तथा उच्यताम्। आह **'दर्पणस्येव'** इति। एतदेव स्पष्टयति **'तस्य'** इति अद्रिरूपस्य। **'तस्मात्'** इति आदर्शात्। उपपत्त्या विचार्यमाणं प्रकाशमानमपि यदि न उपपद्यते, तदस्य भवतु असत्तेति यो ब्रूयात्; तं प्रत्याययति **'नैर्मल्यमपि'** इति। एतदेवहि तत् निर्मलत्वं यत् स्वात्मानतिरिक्तस्य अपि अतिरिक्तस्य इव अवभासनम्। **'विच्छेदेन'** इति इदन्तया। **'एवंच'** इति विच्छेदावभासेऽपि। **'अस्माभिः'** इति वयं हि प्रकाशैकसारं सर्वमर्थजातमाचक्ष्महे। तत्रापितु मायाशक्तिवशात् यथैव नीलादयो बाह्यीकृता नाम भावास्तथैव दर्पणपर्वतोऽपीति ब्रूमः। विज्ञानवादिनोऽपि

न स्वसंवेदनांशेन असौ निर्भासते, अपितु नीलादिवद्वेवेति विज्ञानमात्रतया तस्य उक्तया न आस्माकीनप्रकृतदृष्टान्ततविघटनं किञ्चित् । अधुना उक्तमर्थं संकलय्य ब्रूते **'एवम्'** इत्यादिना, प्रकृतं तु भ्रान्तेर्वैलक्षण्यं दर्शयति **'पीत'** इति शुक्लशङ्खावभासनिरपेक्षतैव स्वातन्त्र्यमिति दर्शयति **'नच'** इति **'भ्रान्त'** इति पीतशङ्ख इति सम्बन्धः । एतत् प्रकृते उपयोजयति **'ननु'** इति । **'आदर्शित'** इति आभासते हि सः, नतु शुक्लकम्बुवत् न आभातीत्यत्र वै भरः । एवं दृष्टान्तं घटयित्वा दार्ष्टान्तिके योजयति **'तत्'** इति तस्मात् परिघटितोऽयं दृष्टान्तस्तस्मात् हेतोः । **'इत्थम्'** इति दार्ष्टान्तिके साम्यापादनम् । ननु चिद्रूपाभेदेन प्रकाशनमसिद्धमहम्भावबहिष्कारेण नीलादीनां प्रत्ययादित्याशङ्क्य आह **'मायाप्रमातुः'** इति षष्ठी अवभासत इत्येतदपेक्षया, तदा च **'चित्स्वरूपात्'** इति पारमेश्वरादिति मन्तव्यम्; पञ्चमी वा सामानाधिकरण्येन, तदा अयमर्थः—सङ्कोचभागपि यः प्रमाता अहमिति, तस्य योऽचिदंशस्तत एव नीलादयो भेदेन भान्ति; नतु चिदंशादिति यत् शरीरशून्यादेः प्रमातृत्वेन उत्थानमयमसौ प्रथममेव मायाशक्तिव्यापारकृतो भ्रम इत्यतो हेतोः । **'एतत्'** इति । तद्व्यतिरेकेन यत् प्रथनं नीलादीनां, तदपेक्षया च अहम्भावबाह्यत्वं; तदस्तु नानङ्गीकृतमेतदित्यर्थः । सच भ्रमो नाट्यतुल्यस्य अपरमार्थसतोऽत्यक्तस्वरूपावष्टम्भननटकल्पेन परमेश्वरप्रकाशेन प्रतीतिगोचरीकृतस्य संसारस्य नायकः सूत्रधारः प्रधानभूतः प्रवर्तयिता इतिवृत्ते नायको वा, यन्नग्नं विश्वेतिवृत्तमाभाति; तत एव प्रथमः । ननु जडस्य यत् प्रमात्रीकरणमयमेव कस्मात् प्रथमो विभ्रमः । प्रकाशरूपाणां हि शरीरघटादीनां यत् वेद्यीकरणं, तस्य प्रथमविभ्रमता युक्ता । मैवमित्याह **'मूल-**

**भूतः'** इति । नहि अत्र कालप्रवृत्त्या प्राथम्यं तस्या एव अभावात् । यत् नरेश्वरविवेकः

'तेन मायाभिधा शक्तिः सहैव कुरुते द्वयम् ।
वेद्यान्सदसतः सर्वान्कांश्चिद्वेद्यांश्च वेदकान् ॥'

इति । तर्हि मूलभूतता अपि कथम् । तथाहि ग्राह्याणां तेभ्यो ग्राहकेभ्यश्च, ग्राहकाणामपि तेभ्यो ग्राह्येभ्यश्च यो भेदावभासलक्षणो विभ्रमः; स मायीयव्यापारकृते भ्रमरूपेऽन्तःप्रविष्टस्तावानेव असौ विभ्रमो भूयस्तमशाखाशतनिचित इति यावत् । सत्यमेवम्, तथापितु सर्वे विभ्रमा ग्राहकलक्षणे आत्मस्वरूपे निपतन्ति । ननु एवं सत्यप्रमातैव इत्थं स्यात्

'यद्यप्यर्थस्थितिः············ ।' (अ०प्र०सि०२०)

इतिन्यायात् । न खलु पार्यन्तिकी सिद्धिरत्र विश्रान्तिरिति दर्शयति **'तत्तत्'** इति तस्य तस्य विभ्रमस्य आश्रयभूतो यो ग्राहकात्मा मायीयः । एतदुक्तं भवति—सति मायीये ग्राहके तदपेक्षया विभ्रमान्तरमुचितोदयमिति मायीयग्राहकोल्लास एव मूलभूतः, यत् स एव मूलम्, अन्यस्तु अहम्भावो वेद्येष्वपि आणवो मल इति । एवं मायाप्रमात्रपेक्षया न पृथक्ता किञ्चित् खण्डयतीति उक्तम्, सत्यचिद्रूपापेक्षया तु सा नास्तीत्याह **'यत्पुनः'** इति । ननु चिन्मात्रापेक्षया अपि अस्ति नीलादीनां भेदो मन्त्रेश्वरादीनां चिन्मात्रस्वभावत्वात्, तेषां च भेदेन नीलादिप्रथनादित्याशङ्कां परिहरति **'भ्रमोऽस्तु'** इति । शरीरादिशून्या अपि ते न चिन्मात्रस्वभावाः, अपितु सजातीयेभ्यो वेद्यात् च पृथग्भावाभिमानसंकोचात्मकमायीयमलाधिकसंवित्स्वभावास्ते भगवता निर्मिताः । यत् वक्ष्यते

'बोधानामपि कर्तृत्वजुषां कार्ममलक्षतौ ।
भिन्नवेद्यजुषां मायामलं विद्येश्वराश्च ते ॥' (३।२।९)

इति । '**इदन्तयैव**' इति एवकारेण श्रीसदाशिवप्रमातृपदात् यो भेदः सूचितस्तं स्फुटयति '**ननु**' इति । सदाशिवपदे हि इदन्तोन्मेषे सति अहन्ताच्छादनमपि अस्ति । सजातीयेभ्योऽपि भेदाभिमानमेषां दर्शयति '**स्वात्मनि**' इति न केवलं वेद्यवर्गे इति अपिः; यस्य असंभाव्यं भेदनं प्रकाशैकपरमार्थत्वात्, सोऽपि भिन्न इतीश्वरस्य परमेतत् दुर्घटकारित्वमागमे महामायेति विद्येति व्यवहृतमिति दर्शयितुं द्वितीयोऽपिः । यत् वक्ष्यति

'भेदधीरेव भावेषु........................ ।' (३।१।६)

इत्यादि । '**अत एव**' इति यतः प्रमातृवर्गात् प्रमेयवर्गात् च संकुचितचिद्रूपा, ततः कृतका अन्यथा शुद्धचिद्रूपतायां नित्यत्वेन कृतकत्वायोगात् । ननु एवं ते मायीया एवेति कथं मायातत्त्वोपरिवर्तिन उच्यन्ते इत्याशङ्क्य आह '**तावच्च**' इति । वेद्यदेहाद्यहम्भावज्ञत्वकर्तृत्वविरहावभासनलक्षणपूर्णमायाव्यापाराभावादमायीयास्ते उच्यन्ते सत्यपि तावति मायाव्यापारे इत्यर्थः । तर्हि मायोत्तीर्णतया यदुच्यते शुद्धविद्यामयत्वम्, तत् कुत्र । आह '**ईश्वरस्य तु**' इति अहन्ताच्छादितेदन्ताभावस्यैव विद्यामयत्वम् । यत् वक्ष्यति

'इदम्भावोपपन्नानाम्............. ।' (३।१।४)

इत्यादि । ननु अस्ति तावदयं संभवो भगवत्प्रभावो बोधस्वभावे देहाद्यसङ्कोचवति अपि प्रमातरि भेदमवभासयतीति, तदिदानीं ब्रह्मादयोऽपि कीटान्ताः शरीरादिप्रमातृभाववन्तः सन्तो भेदं गृह्णन्ति,—इति किमर्थमुद्घोष्यते तेऽपि चिन्मात्रप्रमातृरूपाः सन्त्विल्याशङ्कामनूद्य परिहरति '**न युक्तम्**' इति न अस्माभिर्भेदाभि-

मानान्यथानुपपत्त्या देहादेः प्रमातृता उन्नीता । स्वसंवेदनादेव हि सा निर्भासते कृशोऽहं सुख्यहमित्यादेः प्रत्यात्मवेद्यस्य प्रत्ययस्य अप्रत्याख्येयत्वात् । उपपत्तिरपि अत्र अर्थे संभवतीत्याह **'बोधात्मन्येव'** इति चकारो हेतुसमुच्चये । बोधमात्रस्य हि प्रमातुराहरणीयो बोधो नास्ति, यत्र इन्द्रियादिसामग्र्युपयोगः । वेद्योपरागमात्रेण हि तस्य नीलादिबोधरूपता, वेद्यं च सदा सन्निहितमिति सार्वज्ञ्यमेव अस्य युक्तम्,

'केन नाम न रूपेण भासते परमेश्वरः ।'

इति च नयेन भगवता सार्वज्ञ्यमपि निर्भासनीयमेव, तन्मात्रं च एते देहादिप्रमातार इति आशयः । प्रसङ्गागतप्रमेयान्तरसान्तरीकृतं प्रकृतं सूत्रार्थम् **'आभासभेदादेकत्र'** इत्यादिकं निगमनव्याजेन अनुसन्धत्ते **'तत्'** इत्यादिना ॥ १९ ॥

ननु इयता विज्ञानरूपं ब्रह्मैव विश्वात्मना भातीत्युच्यते, किमीश्वरतयेति यो मोहः, तमपहन्ति

**वास्तवेऽपि चिदेकत्वे न स्यादाभासभिन्नयोः ।**
**चिकीर्षालक्षणैकत्वपरामर्शं विना क्रिया ॥ २० ॥**

चित एकत्वं वास्तवं, भेदस्तु अविद्येति अङ्गीकृतेऽपि क्रिया करणं न उपपद्यते आभासेन भिन्नौ घटचेतनौ तयोर्यश्चिकीर्षालक्षण एकः परामर्शो यदि न भवेत् क्रियापेक्षया वा सम्बन्धसामान्ये षष्ठी, पश्चात्तु औचित्यात् कर्मत्वकर्तृत्वाभ्यां स सम्बन्धो विभजनीयः, आभासेन भिन्नयोरिदमहमितिजडचेतनयोर्य एकः परामर्शः परचित्तत्त्वविश्रान्तिलक्षणस्तं विनेति वा, तेन क्रियां चिकीर्षां परामर्शं वा अपेक्ष्य षष्ठीसमासश्च नित्यसापेक्षत्वात् । एतदुक्तं भवति—वास्तवं स्वभावसिद्धं जडस्य इव घटस्य घटत्वं चितो यदि एकत्वमुच्यते, भेदस्तु अविद्येति;

तदा निरूप्यं कस्य सेति। नहि विद्यैकरूपस्य ब्रह्मणस्तदभाव-रूपमविद्या नाम, नच अन्ये जीवादयः केचित्, अविद्ययैवंहि ते उत्थाप्याः। अनिर्वाच्या सेति चेत्, कस्येति न विद्मः। भाति च अनिर्वाच्येति च यक्षभाषा। युक्त्या न उपपद्यते इति चेत्। भासनातिक्रमणे का युक्तिः। अविकल्पे शुद्ध-मेव ब्रह्म आभाति, सविकल्पके तु सेति चेत्; सोऽपि कस्येति पूर्ववत् वाच्यम्। अविकल्पकं च सत्यं, न इतरदिति भासमानत्वाविशेषे कुतो विभागः, बाधादिति चेत् विपरीतत्वे परस्परतस्तुल्यो बाधः। प्रतीतिनिरूढिस्तु भेदे यथा, तथा न अभेदे इति भेदस्यैव सत्यता युक्ता। बाधोऽपि भासमानत्वादेव सन्, तथा भेदोऽपीति सोऽपि कथमविद्या; बाधोऽपिच भेद एवेति सोऽपि अविद्या। तदिदं शशशृङ्गं गगनकुसुमस्य छेदकमुक्तं स्यात्। आगमात् सर्वमिति न आभासनादिति चेत्, आगमोऽपि अविद्येति सर्वमालजालम्। यत् वक्ष्यति

'ब्रह्मापीष्टमविद्यया सह ततो नैकान्तवादोऽप्ययम्।'

इति सूत्रतात्पर्यम्। तदाह वृत्तौ **'अकस्मात्'** इति निमित्तस्य अलाभादितिभावः। **'आभासभेद'** इत्यादिना वेद्यगतं रूप-मुक्तम्। तद्विषयत्वेन यत् क्रियात्वं नाम कर्तृताधायकं, तत् न घटते इति ब्रह्मगतं रूपमुक्तम्। **'तत्'** इति आभासभेदस्य घटनं क्रियात्वम्। ननु दृष्टं जडस्य कर्तृत्वम्

'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।'

इति। नैतदित्याह **'जडस्य'** इति अकर्तृत्वमिति सम्बन्धः। **'तम्'** इति जडम्। **'स'** इति प्रमाता। एतदभिमतमेव सारस्वतस्य देवतात्मेति विशेषयतः। सूत्रार्थमवतारयति **'चित्त-त्त्वस्य'** इत्यादिना। **'न'** इत्यनेन निर्मेयगतं, **'नापि'** इति तु

निर्मातृगतं रूपमभिदधता सौत्रम् '**आभासभिन्नयोः**' इति स्पष्टं यत् प्रतिपादितं, तत् संक्षेपेण स्मारयति कारुणिकतया '**यथा**' इत्यादिना । ऐश्वर्यशक्तिं विना निर्निमित्तत्वात् क्रमे निमित्ताभावात् कादाचित्क इति विचित्रः क्रमो न स्यादिति सम्बन्धः । अन्तर्गतसर्वाभासोल्लासनस्वभावत्वे हि यौगपद्यमेव उचितमित्याह '**नित्यमेव**' इति । ऐश्वर्यशक्तिस्तु समर्था चोद्यमेनं परिहर्तुमित्याह '**ईश्वरत्वात्**' इति । '**तत्तत्**' इति विचित्रक्रमकमिति यावत् । परामर्श एव क्रियालक्षणो युक्त इति सम्बन्धः । लक्षणं दर्शयति '**क्रमिकोऽपि**' इत्यादिना । क्रमिकत्वे हेतुः '**अन्तर्**' इत्यादि, एकत्वे '**कर्तृव्यापार**' इति '**तत्**' इति चोद्यं च उत्तरं च परामृशति क्रमेण वृत्तिग्रन्थद्वयं पठन् । क्रिया अपि चेत् वेद्या, तर्हि निर्मेया, तत्र च क्रियान्तरं, तत्रापि एवमिति अनवस्थां मा शङ्किष्ट कश्चिदित्याशयेन परामर्शतत्त्वमुक्तपूर्वमपि स्मारयति '**सा चैषा**' इति । अन्यासु पाकादिक्रियासु सम्भवतु कदाचिदियं चिन्ता, नतु अस्यामिति भावः । ननु यदि विमर्शः प्रमातुः संविद्रूपादभिन्नो न संवेद्यपदमभिपतति, तर्हि क्रमरूपत्वाभावात् क्रियात्वमस्य कुतः । अत्र आह '**प्रमात्रभेदेन तु**' इति '**अवभासते**' इति । मायाप्रमातृवृत्तान्तश्च असौ परमेश्वरप्रभावादेव भवति,—इति तत्रापि क्रियाशक्तित्वमुक्तम् । उक्तं च एतत्

'सक्रमत्वं च लौकिक्याः················ ।' (२।१।२)

इत्यत्र । '**एतच्च**' इति सक्रमत्वम् । ननु परामर्श एव इच्छा भगवतः क्रिया, ततश्च वृत्तौ त्रितयं यदुक्तं '**चिकीर्षया**' इत्यादि, तत् कथमुक्तम् । एतत् परिहरति अभ्युपगमपूर्वं '**परामर्शोऽपिच**' इति । '**तस्य तस्य**' इति कर्मणि षष्ठी । मात्र-

ग्रहणेन कर्मणोऽनुन्मेषमाह । तत एव मृज्याद्दूरत्वम् ? । वृत्त्यर्थं व्याकरोति **'अत्र हि'** इति वृत्तिग्रन्थे । आभासना च क्रिया, तस्या आद्य एव परामर्शो लक्षणम् । स एव बहिष्करणात्मकाभासनापर्यन्तः । तेन आभासनाया एव अयं रूपविभागः **'चिकीर्षया परामृशन्'** इति । तेन त्रयमेतदुपक्रमे भासमानमपि द्वयमेव, वस्तुतस्तु एकमपीति तात्पर्यम् । **'इत्यपि'** इति न केवलं परामृश्यमानोपरागात्, यावदिच्छाप्रयत्नरूपत्वाद्पीत्यर्थः । **'जडस्य'** इत्यादिकां वृत्तिं चोद्येन उपक्रमते **'एवंच'** इति एवं तर्हीत्यर्थः । **'महाभूतस्य'** इति देवतारूपत्वे हि युज्यते एतत् । नच देवता दहति तथादर्शनादिति मन्यते । ननु इच्छायामचैतन्यमपि अस्ति । सत्यम्, इष्यमाणगतं तु तत्, न स्वरूपगतम् । तदाह **'नामरूप'** इति । एतच्च

'घटोऽयमित्यध्यवसा.................... ।' (१।५।२०)

इत्यत्र उक्तम् । **'अनन्तरम्'** इति वाचकवाच्यरूपशब्दार्थमात्रस्य संवेद्यत्वेन प्रकाशनादिति हि अत्रैव सूत्रे निरूपितम् । अत्र अभ्युपगमेनैव उत्तरमाह **'आस्ताम्'** इत्यादिना । स्वगते भवनादौ स्थिरत्वादेव रूपान्तरं नास्तीति कुत्र अनुसन्धानम्, स्पन्दनादौ तु अकर्मके स्पन्दनरूपत्वात् पूर्वापरक्षणविषयमेकमनुसन्धानमस्ति, दहनादौ तु सकर्मके न केवलं पूर्वोत्तरक्षणविषयमनुसन्धानं, यावत् व्यतिरिक्तकर्मैकीकारलक्षणमपीति अनुसन्धानधाराधिरोहमयमेव; तदचेतने कथं स्यादिति दर्शयति **'आस्तां तावत्'** इति । **'असौ'** इति व्यापारः । यदा उच्यते, तदापीति सङ्गतिः । **'सत्तामात्र'** इति स्थिरायां च अभूत्वाभाविन्यां च सत्तायामित्यर्थः । ननु वस्तुवृत्तेन भवन्त्येव तावत् ते स्वतन्त्राः । तत् कथं वृत्तावुक्तं **'स्वातन्त्र्याभावात्'** इति । अत्र

आह '**स्वातन्त्र्यम्**' इत्यादि मम न भातमस्य अवश्यं भातीत्येतदेव वस्तुवृत्तमुच्यते, नतु अन्यत्किञ्चित् तत् । ततश्च भवनमपि प्रकाशलग्नं सत् तथाभवतीति भवनस्वातन्त्र्येण प्रकाशमुखप्रेक्षिणा किं करिष्यते इति प्रकाशने अनन्यवदनावलोकिनि यत् स्वातन्त्र्यं, तदेव स्वातन्त्र्यमुच्यते; तच्च जडानां नास्तीति युक्तैव युक्तिः '**स्वातन्त्र्याभावात्**' इति । प्रकाशस्य च परदशायां चमत्कारमात्रात्मा यो विमर्शस्तदेव स्वातन्त्र्यं, नतु इच्छारूपं; परापरत्वे तु तदिच्छारूपमिष्यमाणोन्मेषात्, अपरदशायां तदेव अपूर्णमिति दर्शयति '**प्रकाशोऽपि**' इत्यादिना '**चिकीर्षैव**' इत्यन्तेन । '**चमत्कारो हि**' इति स्वात्मनि अनन्यापेक्षे विश्रमणम् । एवं भुञ्जानतारूपं चमत्त्वं, तदेव करोति संरम्भे, विमृशति न अन्यत्र अनुधावति । चमदिति क्रियाविशेषणम्, अखण्ड एववा शब्दो निर्विघ्नास्वादनवृत्तिः । चमदिति वा आन्तरस्पन्दान्दोलनोदितपरामर्शमयशब्दनाव्यक्तानुकरणम् । काव्यनाट्यरसादावपि भाविचित्तवृत्त्यन्तरोदयनियमात्मकविघ्नविरहित एव आस्वादो रसनात्मा चमत्कार इति उक्तमन्यत्र । '**विश्वनिर्माणे तु**' इति व्यतिरिक्ताव्यतिरिक्तेष्यमाणतया श्रीसदाशिवादिभुवनत आरभ्य अहम्भावाच्छादनस्य क्रमेण सङ्कोचक्रमोन्मेषे च इदम्भावतारतम्यस्य अनन्तादिविद्येश्वरान्तं तथावस्थातुं परापररूपतां दर्शयति भेदाप्ररोहे करणव्यवहाराभावात्, कृतमिति तु व्यवहारभेदनिरूढावेव गाढायां ब्रह्मादीनां कुलालादीनां च । तदाह '**मायीयसर्ग**' इति '**तथा**' इति संकुचितरूपतायामपि ब्रह्मादेः कुविन्दादेश्च व्यतिरिक्तत्वेऽपि इष्यमाणस्य अपारिमित्यात् पारिमित्यात् च विशेष इत्याह '**एवम्**' इति परिमाणशून्ये परदशायां नास्ति इच्छाव्यवहार इति शान्तशिवादिप्रवादाभिप्रायेण

उक्त्वा सदाशक्तिरूपाविष्ट एव शिव इत्येवंभूतदर्शनाश्रयशिव-दृष्टिमतावलम्बनेन आह '**अथवा**' इति। सर्वत्र हि चमत्कार एव इच्छा, सच परभूमावपि अस्ति। यदुक्तं

'तदेच्छा तावती................................. ।' (१।३)

इति। '**सैवहि**' इति। चमत्कारिता हि भुञ्जानरूपता स्वात्मविश्रान्तिलक्षणा सर्वत्र इच्छा। कचित्तु स्वात्मविश्रान्तिर्भावान्तर-मनागूरितविशेषमपेक्ष्य उत्थाप्यते यत्र सा इच्छा राग इति उच्यते, आगूरितविशेषतायां तु काम इति। आदिग्रहणादभिला-षमलो यत्र भावान्तरं सामान्याकारमपि वासनावशेषमात्रेण आस्ते यथाह

'...............भावस्थितानि जननान्तरसौहृदानि।'

इति। औत्सुक्यं च नित्यतत्सन्निधानव्यपगतशङ्कानुविद्धा इच्छैवेति। एवमन्यदनुसर्तव्यम्। '**तदभावश्च**' इति स्वातन्त्र्या-भावस्य निमित्तमुक्त इच्छाभाव इति सङ्गतिः। इयता वृत्तिरुभयथा गमिता—बुभूषायोगेन यत् स्वातन्त्र्यं, तस्य अभावात्; अयोगेन च यः स्वातन्त्र्याभावस्तत इति। ननु एवं हिमवानस्तीति कथम्। आह '**कर्तृतोपचारस्तु**' इति आरोपणे निमित्तं तत्पा-रतन्त्र्यात्मकं तात्स्थ्यं नामेत्यर्थः। स्वातन्त्र्यस्य गम्यमानस्य अत्र आरोपणमित्यत्र अर्थेऽभिधीयमानस्वातन्त्र्यारोपं दृष्टान्तीकरोति '**कूलम्**' इत्यादिना। आशङ्कायामचेतनेष्विति प्रत्याख्यातुं यत् वाक्यं न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धि-रिति, तत्र प्रमातृस्वातन्त्र्यारोपणमेव तत्त्वमवसेयमिति आशयः। तत एव इच्छासंभवपक्षं वाक्यमदृढं मत्वा परिहारान्तरमाख्यत् उपमानाद्वा सिद्धमिति, तत्तु तृतीयमुनिना न असह्यत न तिङन्ते-नोपमानमस्तीति। तदास्तामवान्तरेण। '**सर्व एव**' इति नित्यप्रव-

वृत्तां वर्तमानस्य दर्शयन् मायाप्रमात्रपेक्षमेतदुक्तं, सत्यप्रमात्रपेक्षया तु अनुपचरितमेव इदमित्याशयं सूचयति । मायाप्रमात्रपेक्षया तु अनुपचरितमेव इदमित्याह **'अथवा'** इति । मायीयप्रमातृता-पदेऽपिच सत्यप्रमातुरविरोध इत्याशयेन अपिशब्द अङ्कुरपदेन अभूतप्रादुर्भावं पिशुनयति । **'मम प्रमाता'** इति मायाप्रमा-त्रुद्देशेनैव इदं सामर्थ्यम्, परमार्थप्रमातरि तु न किञ्चिदत्र प्रया-स्यमित्याह ॥ २० ॥

**इत्थं तथा घटपटाद्याभासजगदात्मना ।**
**तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया ॥ २१ ॥**

अर्थः स्पष्टः । सैवच क्रियाशक्तिरिति यदुक्तं, तत्र कश्चित् ब्रूयात्—भगवति इच्छा, श्रीसदाशिवे ज्ञानशक्तिः, ईश्वरे पुनः क्रियाशक्तिरिति आगमे शक्तिविभागस्तदेतत् कथमिति । तत्र आह **'विश्वावभासन'** इति चः शङ्काद्योतकः । न केवलं लोक-प्रसिद्धा क्रिया स्पन्दनरूपा, यावदियमपीति अपिः । **'यदा तदा'** इति हेतुहेतुमद्भावद्योतकौ निपातौ, यद्यपि—तथापीत्येत-दर्थवृत्ती वा । क्रियायां शक्तिरित्येवं व्याख्याय सामानाधिकर-ण्यमपि स्वाभिमतं व्याचष्टे **'तस्यामपिवा'** इति । **'शक्तिः'** इति क्रियात्मा । यथोक्तं

'सुसूक्ष्मशक्तित्रितयं सामरस्येन वर्तते ।' (शि० दृ० १।४)

इति । **'तन्मुखेन'** इति चिद्घनकर्तृमुखेन । **'यदाहुः'** इति वैयाकरणाः । एवंब्रुवाणैश्च अपरकारकपर्यायापायेऽपि सति कर्तरि क्रियातत्त्वस्य दर्शनमसति तु अपरकारकसामग्र्यामपि अदर्शनमिति अन्वयव्यतिरेकाभ्यां कर्तृविश्रान्तिरेव क्रियेति निरू-पितं भवति । न इह पच्यते इत्यादावपि अधिकरणाक्षिप्ता एव पाकभोगादियोग्या भासन्त एव कर्तारः । **'नतु'** इति कर्मणः

क्रियावेशो न संभवति इच्छाविरहितत्वादिति उपचरितः सः। उपचारे च निमित्तं कर्तृगतया अपि तया कर्मणि आहिताभिसंहित-विशेषदर्शनम्। '**यदाह**' इत्युक्त्वा यत् वाक्यं पठितं, तत् तादृशं वृत्तौ नास्ति '**सम्बन्धिनि**' इत्यस्य पदस्य वृत्तावपाठादित्या-शङ्क्य आह '**शेष**' इति अध्याहार इत्यर्थः। '**षष्ठ्या**' इति वृत्तौ श्रुतया। ततश्च साध्याहारमेतत् पठितमिति उक्तं भवति। '**करणादीनां च**' इति '**कारकत्वम्**' इति सम्बन्धः। ननु करोतीति कारकमिति कर्तृव्युत्पत्तिपक्षे सत्यमुपचारोऽवश्यं-भावी, अव्युत्पन्नस्तु निमित्तपर्याय इत्यत्र पक्षे किमुपचारेणेत्या-शङ्कामपास्यति '**निमित्तत्वं च**' इति सदसत्कार्यवादविचारे हि निराकृतः शुष्कः कार्यकारणभावः। '**तेषाम्**' इति करणा-दीनाम्। '**एतत्**' इति निमित्तत्वम्। ततश्च काष्ठैः पचतीत्य-स्यामपि दशायां संवित्तत्त्वस्वातन्त्र्यानुप्रवेशादेव कारकत्वम्, नतु अन्यथा। ननु अवयवक्रियायामस्ति एषां स्वातन्त्र्यं काष्ठानि ज्वलन्तीति कर्तृत्वदर्शनात्, ततश्च सा यदा प्रधानपाकलीना विवक्ष्यते, तदा करणत्वेऽपि कारकत्वस्य का खण्डनेति किमत्र चित्तत्त्वमुखेन। एतदाशङ्क्य आह '**काष्ठानि**' इति। जिज्व-लिषोरेव ज्वलनकर्तृत्वं युक्तमित्यादि पूर्वोक्तवदनुसन्धेयमिति शिवम्॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचितायामीश्वर-प्रत्यभिज्ञाविवृतिविमर्शिन्यां क्रियाधिकारे कार्यकारण-भावविमर्शश्चतुर्थः॥ ४॥

# ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी ।

## महामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचिता ।

## आगमाधिकारः ।

### अथ प्रथमो विमर्शः ।

ओतप्रोतं सकलं विद्ध्वा स्वरसेन शिवमयीकुरुते ।
योऽनुत्तरधाम्न्युदयन्स्वयममृतनिषेचनं तमस्मि नतः ॥

एवमधिकारद्वयेन निर्णीते वितत्य ज्ञानक्रिये, अधुना तु क्रियाधिकारे यदुक्तं

'विश्ववैचित्र्यचित्रस्य ................... ।' (२।३।१५)

इत्यादौ सर्वपदार्थावभासनिर्मललक्षणत्वमेव क्रियाशक्तेः स्वरूपमिति, तत्र कोऽसौ पदार्थवर्ग इति वक्तव्यम् । तत्र अस्मदादिप्रत्यक्षं न अशेषसाक्षात्कारि, अनुमानमपि एवं सर्वस्य लिङ्गव्याप्त्युपलब्धिसम्भवाभावात् । असङ्कुचितप्रकाशात्मकपरमेश्वरविमर्शात्मकः पुनरागमो विश्वं प्रमातुं समर्थः, तत एव विवृतावबतार्यते पदार्थतत्त्वोपपादनार्थमिति पारमेश्वरागम एव तत्त्वमुपपादयितुं शक्तः; युक्तिस्तु तदुपबृंहणाय । नच विश्वप्रमेयतापादनं न उपयोगि प्रकृतायामीश्वरप्रत्यभिज्ञापनायाम् । विश्वप्रमेयीकरणे हि तावत्प्रमेयपदोत्तीर्णा तावदन्तःकरणप्रतिलब्धपूर्णभावा सत्यप्रमातृता हृदयङ्गमीकृता भवेत् । यदुक्तं

'दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥' (स्प०का० ४३)

इति । **'समस्तसंपत्'** इतिपदेन बहुव्रीहिपक्षे प्रज्ञाविशेषणेन स्फुटीकृतम् । समस्तस्य हि मूर्तिक्रियात्मनो देशकालप्रपञ्चस्य संविदि अवभासने तदपरिच्छिन्नस्वभावा असौ विभुनित्यरूपा सर्वशक्तिः स्वप्रकाशतैव निर्भासते । तदपि मायावरणादन्यथा अपि भायादिति तत्रापि ईश्वरागमशरणता । तदुक्तं

'प्रमाणमेकं तद्वाक्यं तथ्यमीश्वरभाषितम् ।
तस्योक्तिः पौरुषैः स्थूलैः प्रमाणैर्न प्रबाध्यते ॥'

इति । तदनेन आशयेन आगमाधिकार उच्यते । तत्र श्लोकैकादशकेन

'एवमन्तर्बहिः.................... ।'

इत्यादिना

'....................स्थूलसूक्ष्मत्वभेदतः ।'

इत्यन्तेन शिवादिधरण्यन्तानां तत्त्वानां पारमेश्वरागमसिद्धं युक्त्या अपि अनुगृह्यमाणं प्रत्येकतः स्वरूपं दर्शयति । तानि एव प्रमाणव्यापारविषयत्वादेकैकाभासरूपाणि वस्तूनि येषां दर्शनान्तरे सामान्यव्यवहारः । तैरेवच नियतशक्त्यनुग्रहगृहीतसामानाधिकरण्यवैयधिकरण्यवैचित्र्यैरनन्तस्वलक्षणावभासात्मकव्यूहविभवविशेषमयः शरीरभुवनादिः समस्तोऽपि अयं सर्ग ओतप्रोत इति प्रकरणतात्पर्यम् । तत्र उक्तार्थोपजीवनेन अधिकारसङ्गतिं कुर्वन् पूर्वपक्षनिराक्रियां च उपसंहरन् शिवतत्त्वमेव सर्वमेतदेवच सर्वभावानां तत्त्वमिति तदेव तावत् ज्ञानक्रियायोगादाभासविमर्शसारं स्वरूपतो दर्शयति

**एवमन्तर्बहिर्वृत्तिः क्रिया कालक्रमानुगा ।**
**मातुरेव तदन्योन्यावियुक्ते ज्ञानकर्मणी ॥ १ ॥**

जडे प्रतिष्ठितः कार्यकारणभावो न उपपद्यते, अपितु चिद्रूप

एव, प्रकाशविमर्शैकपरमार्थोऽपि स्वातन्त्र्यादन्तर्बहिरात्मा अवभासमानः कालक्रममुत्थापयन् ज्ञानशक्तिवपुषा धर्मिरूपः सन् तामन्तर्बहिरात्मतां क्रमिकावभासां क्रियाशक्तिं धर्मत्वेन स्वीकुरुते इति । एवं यत उक्तं '**तत्**' इति ततो हेतोरन्योन्यमवियुक्ते ज्ञानक्रिये प्रकाशविमर्शात्मिके । तदेवच सर्वभावानां पारमार्थिकं वपुः । ततः क्रियाशक्तिद्वारस्वीकृतसकलकृत्यपञ्चकप्रपञ्चनस्वातन्त्र्यं भावनाद्युपयोगितया उपदेशेन आभास्यमानमवभासरूपमपि शिवतत्त्वमिति उच्यते । यथोक्तं

'स्वातन्त्र्यामुक्तम्.................. ।' (१।५।१६)

इति । तथा श्रीकिरणायां

'मायातीतं शिवं तत्त्वं कथं मुख्यं मनोभुवि ।
विभासेत.................................... ॥'

इतिप्रश्ने

'अधोऽव्याप्तिः शिवस्यैव स्वप्रकाशस्य सा...... ।'

इति निरूपितम् । स्वप्रकाशता हि स्वतन्त्रता, अधोऽव्याप्तिस्तथा सृष्टिरेवेति सूत्रार्थः । विवृतिकारो

'ज्ञानं क्रिया च भूतानां................ ।' ( १।१।४ )

इति पूर्वपक्षोपक्षिप्तं स्वात्मनि ईश्वरताभिज्ञानरूपं वक्तव्यं वस्तु समस्तमुक्तं, तत् किमिदानीं प्रमेयान्तरमस्ति यदर्थमधिकारान्तारमिति पराशङ्कां हृदि गृहीत्वा प्रकरणार्थं संक्षेपेण अवतारयति '**एवम्**' इत्यादिना '**उपदर्श्य**' इत्यन्तेन प्रकृतसङ्गतिं कुर्वतशङ्काबीजमपि उपक्षिप्तम् '**उपक्रमते**' इतिवचसा सूत्रार्थोऽपि अवतारितः । शिवतत्त्वं हि सर्वपदार्थानां वपुः । तद्भित्तिपृष्ठे च सर्वभावचित्रनिर्भास इति तदभिधानमेव तेषामुपपादनोपक्रमः । आगमस्य च समस्तस्य तात्पर्येण शिवतत्त्वमेव अर्थ

इति भङ्ग्या सूत्रावतारणं कृतमेवेति पूर्वशैली अपि अनुसृतैव अवतरणिकायाम् । ननु कर्तुः क्रियेति समुचितं वक्तुम्, ननु प्रमातुः क्रियेति । अत्र आह '**अवभासन**' इति । बहिःसत्तादानं यद्यपि आभासनमेव, तथापि लौकिकसर्वप्रमातृसाधारणरूपसंपादककरचरणादिव्यापारविशेषपर्यन्तीभूतमेव अभिप्रेतं तथा लौकिकानां प्रसिद्धेः । तामेवच संज्ञाशब्देन दर्शयति शिवतत्त्वलक्षणस्य परप्रमातुरलौकिकत्वेन व्याकर्तुमशक्यतेत्याशयेन । यद्यपि मायीयप्रमातृमुखेन प्रमातृतत्त्वं व्याख्यातम्, तस्य च न तत्त्वभुवनवर्गो निर्मेयस्तथापि मायाप्रमातृतत्त्वं शिवतत्त्व एव प्रकारद्वयेन सामान्यात् तदेकरूपत्वाच्चेत्येवं पर्यवसाययिष्यतीति तदभिप्रायेण तत्त्वादिग्रहणम् । आदिपदेन च मायाप्रमात्रवभासनीयघटशरीरादिसंग्रहः । '**आत्मनः**' इति वृत्तौ तत्त्वभुवनादयोऽर्थाः प्रमात्रव्यतिरिक्तत्वात् यतो निर्दिष्टाः, तत आत्मानमेव प्रमातृसंज्ञं कर्मभावेन कर्तृभावेन च अवलम्बमाना क्रिया कर्मस्थत्वेन कर्तृस्थत्वेन वा विविच्यमाना एकाश्रयैव भवन्ती वस्तुत एकैव । घटावभासनस्य पटावभासनात् हि न परमार्थतो भेदो घटपटयोरेवं बोधैकपरमार्थत्वेन अभेदात् । मायाकृततद्भेदोपरागावभासितस्तु भवतु क्रियाणां भेद इति वस्तुस्थितिग्रहणम् । ननु अवभासमानपदार्थविषयं यत् तत् समर्थाचरणं प्रमातुः सम्बन्धि, तत् ज्ञानविरहितं कस्मादन्यत् किञ्चित् न भवेदित्याशङ्क्य आह '**बोधात्म**' इति । बोधैकरूपस्य प्रमातुर्यदधिकमबोधरूपं, तत् निर्मातव्यपक्षे निक्षिप्यते इति तस्य यत् निजं शक्तिरूपं धर्मः—इतिव्यपदेश्यं, तत् बोधरूपमेव युक्तमिति यावत् । विदुषः कर्मणि अधिकारो दीक्षासमर्चनध्यानादिक्रियायुक्तस्य च तत्त्वज्ञानसम्पत्तिरित्येतस्मिन्नर्थे यद्यपि अयमागमो व्याख्यातः, तथापि

अयमेव अर्थ एतदर्थमूलत्वे सति युज्यते । अन्यथा ज्ञानं यदि क्रियायामुपयोगि, तदस्तु; क्रिया तु ज्ञानं वर्धयतीति कः प्रकारो भावनामात्रेण अपि तत्सिद्धिदर्शनात् । यदातु क्रिया नाम परं तत्त्वमपि शरीरपर्यन्तीभावेन दृढीभूतो विमर्शः सकलमिदं हृद्य-कुसुमविलेपनादि परमेश्वरेऽर्पयंस्तदभेदितया विमृशामीति पूजनं, तदा युक्तमुच्यते—अर्चनादिक्रियाविरहितं ज्ञानं न दृढीभवतीति । तथाच श्रीसदागमः

'योगो नान्यः क्रिया नान्या तत्त्वारूढा हि या मतिः ।
स्वचित्तवासनाशान्तौ सा क्रियेत्यभिधीयते ॥'

इति । मया च वार्तिके एतत् व्याख्यातं

'स्वचित्ते वासनाः कर्ममलमायाप्रसूतयः ।
तासां शान्तिनिमित्तं या मतिः संवित्स्वभाविका ॥
सा देहारम्भिबाह्यस्थतत्त्वव्राताधिशायिनी ।
क्रिया सैवच योगोऽपि तत्त्वानां चिल्लयीकृतेः ॥
लोकेऽपि किल गच्छामीत्येवमन्तःस्फुरैव या ।
सा देहमक्षं देशं चाप्याविशन्ती गतिक्रिया ।
तस्मात्क्रियापि या नाम ज्ञानमेवहि सा ततः ॥'
(तं० लो० १।१५५)

इति । तदेतत् दर्शयति **'परस्पराविरह'** इत्यादिना । **'अन्यथा'** इति अपरस्परात्मतायां वृक्षत्वशिंशपात्वयोरिव तादात्म्येऽभि-धीयमाने परमार्थतो व्यतिरेक एव आभासविमर्शभेदादिति प्रतिपादयितुम् **'अन्यथा'** इति **'व्यतिरेक'** इतिच उभय-मुपात्तम् । **'यदि नाम'** इति चेतनस्यैव क्रिया, रथो धावती-त्यादौ पुनरुपचार इति यदि मतं; तदेव सुवचमिति आशयः । ननु परमेश्वरस्य ज्ञानक्रिये भवेतां परस्पराविरहिते । बोधस्वभावो

हि परमेश्वरः सततं नवनवकृत्यपञ्चकावभासनास्वभावः, पशु-प्रमातॄणां तु पूर्वनिर्मितविश्ववर्तिनीलादिबोधावसरे नवावभासना नास्ति एव । एतत् परिहरति **'माया'** इत्यादिना । **'मुखेन'** इत्यत्र अवच्छेदः । 'परस्पराविरहो युक्तः' इति च पूर्वेण सम्बन्धः । तस्याश्रितो रूपं यदैश्वर्यं, नहि ज्ञानक्रियात्मकैश्वर्यातिरिक्ता चित् काचित्, तन्मुखेन तद्द्वारेण युक्तः पशूनामपि ज्ञानक्रिययोरन्योन्याावियोगः । यत् नरेश्वरविवेकः

'अणवश्चिदचिद्रूपाश्चित्त्वादेको महेश्वरः ।
तेन केचिदचित्त्वात्तु कथमाक्षेपभूमयः ॥'

इति । ननु भगवतोऽपि सदा कथं न अवभासना निर्वहति,— इति शङ्कां भिनत्ति **'नील'** इत्यादिना । यद्विवा यत् पूर्वं समर्थितमीश्वरस्य, तदैश्वर्यमुखेन मायाप्रमातॄणामपि निर्माणं समर्थितमित्येकरसतयैव ग्रन्थो नेयः । वृत्तौ **'प्रमातुः क्रियाः'** इति सम्बन्धे षष्ठी, नतु बहिष्कारापेक्षया कर्तरि । तत्रापि न नियमेन निषेधः 'शेषे विभाषा' इति अभ्यनुज्ञानात् यदि न स्त्रीभावप्रत्यय एव शेषः । **'स्वातन्त्र्येण वा'** इति ईश्वरसृष्ट्यनपेक्षया । निर्माणमिति समर्थितमिति सम्बन्धः । उक्तं हि

'यथाभिमतसंस्थानाभासनाद्बुद्धिगोचरे ।
अत एव यथाभीष्ट ........................ ॥' (१।६।११)

इत्यादि । ननु पशुप्रमात्रुपक्रमेण किमर्थो विचारः । अत्र आह **'शुद्धैश्वर्य'** इति । ननु परमार्थतो यदि एते न अतिरिच्येते, तत् किमतिरिक्तताया विचारेण । अतिरिक्तता अपि अवभासमाना न अत्यन्तमसंभविनीति दर्शयति **'केवलम्'** इति । **'निर्मातृ-पदे'** इति । मायीयानां कीटान्तानां स्वकार्यकरणावसरे यत् कार्यं पुरा हृदये स्फुरति, तत्र हृदये भेदस्फुरणावस्थायां चिद्भेद-

पूर्वको भेद इति यद्यपि क्रमोऽस्ति, क्रमानीता च क्रियापि अस्ति, तथापि न तावतैव लोकस्तुष्यति प्रमात्रन्तरसाधारणत्वाकाङ्क्षी बहिरिन्द्रियवेद्यत्वात्मस्वरूपान्तरापत्तिलक्षणं क्रमं यतोऽपेक्षते, ततोऽपूर्णोऽयं क्रम इति अभिमतविमर्शात्मिका क्रिया अपि अपूर्णेति तामसत्कल्पीकृत्य ज्ञानतयैव व्यवहारो न युक्तः । **'उच्यते'** इति व्यवह्रियते इत्यर्थः । ननु एवं यदि सुखादेः साङ्कल्पिकस्य च घटादेरन्तरेव बुद्धिभूमौ करणं निर्माणं, तदा कथं क्रिया । आह **'अन्तः'** इति । एतदनन्तरम् **'अपिच'** इति योज्यम् । न केवलं बहिरिति अपिः । च उक्तशङ्काद्योतकः । एवमन्यत्र । तत्र तर्हि क्रमः किमपेक्षया । आह **'अन्तरपिच'** इति । बुद्धिभूमौ हि

'स्वामिनश्च························ ।' ( १।५।१० )

इत्युक्तन्यायेन चित्तत्त्वान्तर्वर्तिन एव बहिष्कारः । ननु तत्र चिन्मात्रे कथं क्रमः । इष्टमेव एतदित्याह **'चिन्मात्र'** इति

'सक्रमत्वं च लौकिक्याः··················· ।' ( २।१।२ )

इति हि उक्तम् । ननु तादृशी प्राभवी क्रिया सूत्रवृत्त्योः कथं न दर्शिता । क आह न दर्शितेति । यावदेवहि उक्तम् **'अन्तर्बहिर्वृत्तिः'** इति, तावदेव आन्तरत्वप्रतिपादनेन सर्वाभ्यन्तरता अपि आक्षिप्तैव । क्रमनिर्भाससामर्थ्यमेव तत्र क्रियेत्याशयव्यक्तये शक्तिपदम् । **'अस्य च'** इति पूर्णचित्स्वरूपस्य त्वित्यर्थः । ऐश्वरः शुद्धः सर्गो यत्र उच्यते

'शुद्धेऽध्वनि शिवः कर्ता··············· ।'

इति, मायीयस्तु अशुद्धो यत्र उक्तं

'···············प्रोक्तोऽनन्तोऽसिते प्रभुः ।'

इति । सर्वत्र च वस्तुतः शिवस्यैव कर्तृत्वेऽपि तदिच्छाकृतादभिमानतोऽन्यस्य कर्तृत्वमुच्यते । यत् विद्यागुरुः

'उत्तरोत्तरमवग्रहग्रहैः
पश्यतोऽप्यधरमुत्तरस्य यः ।
साधनस्य निजभावनाग्रहो
हेतुरत्र भवतो मरीचयः ॥'

इति । तत्र ऐश्वरसर्गेऽभ्यन्तरचिन्मात्रापेक्षया अन्तर्बहिर्भावस्य सद्भावः, मायीये तु सर्गेऽभ्यन्तरेश्वरबुद्ध्याद्यपेक्षया बहुशाखोऽसौ । स एष द्वयोऽपि सर्गः परमशिवस्य भगवतः शक्तिविजृम्भा । ततः सा शक्तिरन्तरवभासमानस्वभावतया ज्ञानशक्तिरुच्यते, बहिर्भावरूपेण तु क्रमोपबृंहितेन विमर्शदार्ढ्येन उपलक्षिता क्रियाशक्तिरिति व्यपदिश्यते । यदागमः

'एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥
एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
जाता तदैव तत्तद्वत् कुर्वत्यत्र क्रियोच्यते ॥'

(मा० वि० ३।८)

इति । भगवत एव परमशिवस्य अक्रमत्वेऽपि युक्तो ज्ञानक्रियाशक्तियोगः । ननु मायीये सर्गे कालतत्त्वोन्मेषात् भवतु क्रमः, विद्यातत्त्वान्ते तु मायानुन्मेषात् कालयोगाभावे कथमसौ क्रमयोगः उक्तः । अत्र आह '**अत्र च**' इति । इह द्वैतवन्तो मायीयाः प्रमातार उपदेश्याः, ते च कालक्रमभाजः सदाशिवावस्थायामपिच इदन्तोन्मेषस्य अहन्ताच्छादनीयस्य अपि सम्भवमुत्थापयन्तस्तेऽवश्यंसंभाविनः । अपरदशावेशो हि तत एव । अतस्तानपेक्ष्य क्रमो भवत्येव, सतु अप्ररूढ इति किमवान्तरेण अनेन । '**द्वैतवत्**' इति भूमादिषु यथायोगं मतुप् । यत एवं, तस्मात् शिवदृष्टौ यदुच्यते

'यदा तु तस्य चिद्धर्मविभवामोदजृम्भया ।
विचित्ररचनानानाकार्यसृष्टिप्रवर्तने ॥
भवत्युन्मुखता चित्ता सेच्छायाः प्रथमा तुटिः ।' (२।८)

इति । परमशिवेऽपि भगवति औन्मुख्यरूपाया आनन्दशक्तेरिच्छाशक्त्यपेक्षया प्रथमत्वं पूर्वभावित्वं, तुटिरिति कालांशरूपत्वं तदुपपद्यते; अन्यथा क्रमाभावे कथं पूर्वापरीभावव्यवहारः, किन्तु उपदेश्यापेक्षया अन्तर्गतमायीयप्रमात्रपेक्षया च युक्तोऽसाविति । ननु अत्र सूत्रे क्रमवन्तो मायाप्रमातारः सृष्टाः, नतु शिवतत्त्वम् । आह **'प्रमातृसामान्यात्'** इति । तत्रापि हि उपपादिता क्रमस्थितिः । अत एव उक्तं **'तदेवम्'** इति । ते वा न केचिदिति वास्तवं पक्षमाह **'अथवा'** इति ॥ १ ॥

ननु एवंभूतं चेत् शिवतत्त्वं, तर्हि तदतिरिक्तं किं तत्त्वान्तरं भवेत्; विशेषतः सदाशिवेश्वरौ कथं तत्त्वान्तरं स्याताम् । यदागमः

'लयाधिकारभोगाध्वत्रितत्त्वोक्तिनिदर्शनात् ।
पदार्थः पतिनामासौ प्रथमः परिकीर्तितः ॥' (म०तं०२।१।१४)

इति । अनेन पत्युरेव ईश्वरता उक्ता । एकचित्तत्त्वविश्रान्तानां च तत्त्वानां देशकालायोगात् कः क्रमः । एतदभ्युपगच्छन्नेव समर्थयते सूत्रेण

**किन्त्वान्तरदशोद्रेकात्सादाख्यं तत्त्वमादितः ।**
**बहिर्भावपरत्वे तु परतः पारमेश्वरम् ॥ २ ॥**

सत्यं शिवतत्त्वमेव एकं वस्तु सत्, विशेषान्तरमपि तु अस्ति । तदुच्यते । तत् हि स्वशक्तितः स्वात्मनि प्रतिबिम्बकल्पेन वैचित्र्यं भासयत् कालदेशक्रमं भासयेदेव वैचित्र्यस्य क्रियामूर्तिभेदमयत्वात् । अत आभ्यन्तर्या ज्ञानरूपाया दशाया उद्रेकावभासने

सादाख्यं सदाख्यायां भवं सृष्टिक्रमोपदेशादौ प्रथमदर्शनीयं तत्त्वं यतः प्रभृति सदिति सदिति प्रख्या तदा सदाशिवशब्दवाच्यं च । इदन्तोन्मेषेऽपि शिवतेतिहि सदाशब्देन उक्तम् । बहिर्भावस्य क्रियाशक्तिरूपस्य परत्वे उद्रेकावभासने भगवतोऽत्यन्तदुर्घटकारितापरिपोषणौचित्यात् परमेश्वरशब्दवाच्यमीश्वरतत्त्वं सादाख्यस्य पश्चान्निरूपणार्हम् । एतदुक्तं भवति—इह तस्य भावस्तत्त्वमिति वर्गाणां विशेषरूपाणामेकीकरणनिमित्तं सामान्यमुच्यते मृत्पाषाणदार्वस्थिमांसादीनां पृथिवी, सरित्कूपसरःसमुद्रादीनां जलमिति । तदुक्तं श्रीमतङ्गागमे

'तत्त्वं यद्वस्तुरूपं स्यात्स्वधर्मप्रकटात्मकम् ।
तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शने ॥
यदच्युतं स्वकाद्वृत्तात् ततं चात्मवशं गतम् ।
ततमन्येन नो तस्मात्तत्त्वं तत्त्वसन्ततौ ॥' (१।५।४)

इति । तत्र शुद्धचैतन्यवर्गस्य मन्त्रमहेश्वराख्यस्य यत् भावचक्रमस्मदाद्यन्तःकरणवेद्यभावराशिसदृशं ध्यामलप्रायमुन्मीलितमात्रचित्रकल्पं प्रथमसृष्टौ, संहारे च ध्वंसोन्मुखमिव प्रतिबिम्बतया भाति; तत्र भावचक्रे तस्य चैतन्यवर्गस्य तथाप्रथनं नाम यत् चिद्विशेषसामान्यं, तत् सदाशिवतत्त्वम्; मन्त्रेश्वरादिरूपस्य तु बहिष्करणवेद्यसदृशि पूर्णचित्रप्रतिमे स्थित्यवस्था ईश्वरतत्त्वम् । यदागमः

'तस्मिन्नेवेश्वरे तत्त्वे संस्थिताः परमेश्वराः ।
शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः ॥' (म० तं० १।५।५)

इत्यादि । सदाशिवेश्वरभट्टारकौ तु तथाभूततत्त्वाधिष्ठायकौ यत्र उपास्यादि ब्रह्मविष्ण्वादिवत्, तत एतदनवकाशं—ब्रह्मादीनां किं न तत्त्वमध्ये गणनमिति सूत्रार्थः । वृत्तिर्विवृतिश्च स्पष्टा । आन्तर-

दशाशब्दाभ्यां शिवतत्त्वमाक्षिप्तमिति **'ईशितुः'** इति वृत्तौ दर्शितम् ॥ २ ॥

नामान्तरेण इदमेव तत्त्वद्वयमुक्तम्, नतु अत्र किमेतत्स्यादिति भ्रमितव्यमिति अर्धसूत्रेण आह

**ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः ।**

'यस्योन्मेषादुदयो जगतः.................. ।'

इत्यत्र उन्मेषशब्देन बाह्यत्वस्फुटताविधायि यत् विश्वस्य चैतन्यसामर्थ्यमीश्वरतत्त्वं, तत् निर्दिष्टम्;

'यस्य निमेषात्प्रलय.............................. ।'

इत्यत्र तु निमेषशब्देन अन्तारूपमस्फुटमुत्थापयत् सदाशिवतत्त्वम् । तदेतदुभयमचलस्य अपि चित्तत्त्वस्य चलनावभासनेन किञ्चिच्चलनात्मकमिति शुद्धस्पन्दोऽयमुक्तः । सर्वाणि हि तत्त्वानि भगवतः शक्तिरूपाणि स्पन्द एव । यथोक्तं

'गुणादिस्पन्दनिःष्यन्दाः सामान्यस्पन्दसंश्रयात् ।
लब्धात्मलाभाः..........................................॥'(स्प०का०१९)

इति । काचित्तु शक्तिरनन्ताः शक्तीराक्षिप्यैव वर्तमाना नेदीयसी भगवतः, अन्यास्तु दूराल्पतमा दवीयस्तमा इति उपासना विचित्रा आगमेषु दर्शिताः ॥

एवमुन्मेषनिमेषात्मकेश्वरसदाशिवलक्षणरूपद्वयस्वीकृतसमस्ततत्त्वं पूर्वसूत्रोक्तं शिवतत्त्वमिति अर्धश्लोकेन उक्तम्, परिपूर्णेश्वरताकस्य तु तस्यैव व्यापारो विमर्शलक्षणोऽहंबुद्धीदंबुद्ध्योः समानाधिकरणत्वेन यः, सा

**सामानाधिकरण्यं च सद्विद्याहमिदंधियोः ॥ ३ ॥**

सती शुद्धा विद्या; अशुद्धविद्या ततोऽन्यैवेति अवान्तरस्य अर्थः । इदं तात्पर्यम्—अहमिति अनन्योन्मुखः प्रकाशविमर्शः,

इदमिति अन्योन्मुखः । एकः शिवभट्टारके, द्वितीयो विद्येश्वरवर्गे । मायाप्रमातरि च तौ ग्राहकग्राह्यलक्षणे पृथगधिकरणे सिद्धौ। यदातु मध्यकोटौ समधृततुलावत् विश्राम्यतस्तदा अहमिदमिति ग्राहके ग्राह्यस्य प्रक्षेपोऽत एव ध्यामलग्राह्यांशो विमर्शः सदाशिवनाथे । इदमहमिति ग्राह्ये स्फुटीभूतेऽहमितिप्रक्षेपात् सामानाधिकरण्यं विमर्शो ईश्वरभट्टारके । एवं सूत्रार्थमवतारयति **'उन्मेष'** इत्यादिना । **'शास्त्रकृताम्'** इति स्पन्दादिशास्त्रप्रणेतॄणाम् । **'तस्य च'** इति येन शिवस्य ऐश्वर्यं सदाशिवतत्त्वोपक्रमं पूर्यते, तेन उभयोरपि असौ व्यापारो विद्याख्यः । उभावपिच तद्व्यापारमयौ परमशिवनाथस्य एकघनमैश्वर्यम् । ननु विश्वं निमिषितं चेदेकरसैव अहन्ता युक्ता, सा च शिवतेति निमेषः कथं सदाशिवरूपता; ततश्च कथं गुरुभिरुन्मेषः, कथं निमेषोऽपि भगवतो व्यतिरेकेण निर्दिष्टो

'यस्योन्मेषनिमेषाभ्याम्············ ।' (स्प० का० १)

इत्यत्रेति शङ्कां परास्यति **'ननु'** इति । **'विश्वं निमिषितम्'** इति हि विश्वस्य इदन्तास्पर्श एव किञ्चिद्रूपं वक्तव्यम् । नच शिवपदे विश्वं किञ्चित् ।

'सर्वथा त्वन्तरालीना················ ।' (४।१।१४)

इति हि वक्ष्यते । आगमे हि

'स्वभावेनैव शान्तात्मा घोरः संसार एवहि ।
स यस्मान्नेष्यते पत्युरघोरहृदयस्ततः ॥' (म०तं० १।४।१४)

इति पठितम् । ततश्च विश्वस्य या अन्तरिति अहन्तायां परिवर्तमाना ध्यामलता, स एव निमेषः । अत एव तदा तत् विश्वं प्रलीनमुच्यते व्यवहारणीयत्वाभावात् । एतदाह **'सदाशिवदशा हि'** इति अशेषाणां पुरुषाणां मायाप्रमातॄणां बुद्धितत्त्व

एव, नतु बहिः स्फुरन्तोऽत एव असाधारणतया प्रत्येकं निज-निजया संविदा वेद्यास्तत एवच साधारण्याभावेन अव्यवहार्यतया ध्यामलत्वेन प्रलीनशब्दवाच्या येऽर्थास्तत्सामानाधिकरण्यप्रथा सदाशिवपदम् । यद्यपि विवृतावहमेतदिति तुल्यतयैव प्रदर्शितम्, तथापि एतत्ताया अस्फुटत्वाभिधानात् पूर्वदशायामहमित्यत्र भरः, ईश्वरपदे तु स्फुटत्वोक्तेरेतदित्यत्र। ननु अत्र ऐश्वर्यस्य पूर्णत्वादीश्वरता, पूर्वत्र तु सदा ईश्वरोपलक्षितः शिवव्यवहारः कुत इति शङ्कमान एतदीश्वरदशाव्यतिरेकं स्मारयन् सदाशिवपदं व्याचष्टे '**सर्वथा**' इति । इदन्ता तावदीश्वरपदं स्फुटत्वेन उक्ता, तत एव देदीप्यमाना। यदातु सा प्रशान्त्युपलक्षिता ध्यामलत्वेन अस्फुटा संपद्यते, तदा वेद्ययोगेऽपि शिवताया उन्मज्जनात् सर्वेण कलनाप्रकारेण शिवतेति सदाशिवता उच्यते। सा च मायापदव्यवस्थितानां भूतानां ग्राहकग्राह्यरूपाणां प्रलयः सर्वथैव मायीयरूपप्रध्वंसात् । मायातत्त्वे च तदा भूतानि निधीयन्ते, तच्च परमेशशक्तिरूपं सदाशिवपदे इदमित्यंशस्पर्शेन विश्राम्यतीति निमेषः सदाशिवता । एवमेष ग्रन्थो नेयः, नतु पूर्वः '**ननु**' इत्यादिग्रन्थार्थोऽत्र स्मार्य इत्याशयेन परमशिवता व्याख्यातव्या तथासति निमेषतः प्रलयः सदाशिवव्यापार इत्यनेन विरोधापत्तेः । ननु यदा समस्तग्राहकग्राह्यमहाप्रलयस्तदा भवतु एवम्, यदातु मायाया अप्रलीनत्वे सति पार्थिवप्राकृतादिवेद्यवर्गप्रलयः पुंस्तत्त्वानि ग्राहकाणि स्थितानि यदा पुंस्तत्त्वानामेव अन्तःकरणेषु संस्काररूपतया सुषुप्तवदवस्थानं विश्वस्य प्रलयो, नतु अहन्तान्तःप्रवेशस्तदा कथं निमेषोऽन्तरिति उच्यते। अत्र आह '**ग्राहक**' इत्यादि। '**अन्तर्**' इति पुंस्तत्त्वेषु, निमेषः संस्कारशेषतेति यावत् । ननु एवमपि सदाशिव

इत्ययं सूत्रांशो न वाचकीकृतः, वाचकीकृतश्चेत्याह **'तदानीं च'** इति तस्यां सवेद्यावस्थायामपि यो मायीयग्राहकान्तःकरण-परिवर्तनसंस्काररूपो निमेषः, सोऽपि तत्त्वतः

'इदमित्यस्य विच्छिन्नविमर्शस्य.........।' (अ०प्र०सि०१५)

इतिन्यायेन अहमितिपदे विश्राम्यन्नहमिदमितिसदाशिवतामेव स्पृशति । यदातु संस्काररूपत्वेऽस्य अहन्तैव तत्त्वं, तदा प्रमुख एव सदाशिवता इदन्तया मायीयाहन्तया वा संस्कारतेति हि वक्ष्यति । व्याख्याद्वयमपिच युक्तमित्याह **'अत एव'** इति । यतः प्रलयो द्विधा पुंस्तत्त्वावशेषतायां तत्संस्काररूपताभाजां वेद्यानामर्थानां सद्भावे सवेद्यतया, पुंस्तत्वानामपितु मायाशक्तौ प्रलीनत्वेन सदाशिवपदान्तर्गमने पृथक्प्रमातृत्वाभावात् तदपेक्षया वेद्यानां प्रतिष्ठानादपवेद्यतया । ततश्च तादृशस्य सुषुप्तस्य अपि उभयरूपत्वं वक्ष्यते

'तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं प्रलयोपमम् ।' (३।२।१५)

इत्यत्र । एवं यस्य निमेषात्प्रलय इति व्याख्याय यस्योन्मेषादुदय इति व्याचक्षाणः सदाशिवपदादीश्वरपदस्य व्यतिरेकमाह **'ईश्वरदशा'** इति । दशाशब्दोऽवस्थाशब्दस्य अर्थे । मायायां स्फुटेदन्ताभाजोऽर्था ईश्वरपदे सृष्टा भवन्ति तत्रैव परमार्थत इदम्भावस्य स्फुटतापत्तेः । ननु

'यस्योन्मेषनिमेषाभ्याम्................ ।' (स्प०का१)

इत्यत्र जगद्ग्रहणेन वेद्यवर्ग एव कस्मात् संगृहीतः, यावता सदाशिवपर्यन्तेऽपि प्रलयः सर्गश्च आगमे श्रूयते

'यत्सदाशिवपर्यन्तं पार्थिवाद्यं च सुव्रते ।
तत्सर्वं प्राकृतं ज्ञेयं विनाशोत्पत्तिसंयुतम् ॥' (स्व०१०।१२६४)

इति । ततश्च तयोरपि उन्मेषनिमेषस्वीकृताभ्यामुदयप्रलयाभ्यां व्यपदेशः कर्तव्यः । किञ्च यथा शिवस्य उन्मेषनिमेषव्यापारौ तत्त्वान्तरं सदाशिवेश्वरावुक्तौ, तथा तयोरपि उन्मेषनिमेषव्यापारौ कस्मात् न उक्तौ तत्त्वान्तरतया । तदेतदाशङ्काद्वयमेकेन वाक्येन निराकरोति **'सदाशिव'** इत्यादिना । इदन्ताभागस्यैव अपररूपस्य तत्र आगमे प्रलयोदयौ परमार्थत उक्तौ मन्तव्यौ । तदभिप्रायेणैव च तत्र

'मायाकालं परार्धानां गुणयित्वा शतेन तु ।<br>ईशे दिनं रात्रिरेवम्················ ।।'

इत्यादिक्रमेण शक्तितत्त्वान्तेऽपि श्रीस्वच्छन्दादिग्रन्थेन

'गुणयित्वैश्वरं कालं परार्धानां शतेन तु ।<br>सादाशिवं दिनं रात्रिर्महाप्रलयः········ ।।'

इत्यादिना कालयोगो व्यपदिष्टः । ननु ईश्वरशक्तिरूपयोस्तयोः प्रलयोदयौ युक्तौ; तथा तयोरपि यत् प्रलयोदयव्यापारवत्त्वं, तत् परमार्थतः शिवस्यैवेति पृथक् तयोर्न व्यापारान्तरमुक्तं तावतः पूर्णशिवरूपत्वात् । एतदेव आह **'एकमेवहि'** इति । **'येषु'** इति येषु भावेषु मध्ये । **'तदानीं च'** इति अवभासनाकाले । न केवलं ग्राह्याणामिति अपिः । **'शून्यतारूपाणाम्'** इति अपवेद्ये प्रलये संस्काररूपतया स्वरूपमात्रावशेषवेद्यता पुर्यष्टकरूपाणां, सवेद्ये ग्राहकायत्तत्वात् च ग्राह्याणामपि असौ प्रलये इति न स भेदेन अभिहितः । एवंच सदाशिवेश्वरौ शिवतत्त्वात् न भिद्येते । ततः कथं तयोः सृष्टिप्रलयौ व्यापारान्तरं व्यपदिश्यते इत्येतत् प्रकृतं निर्वाहयितुं न एतत् प्रयाससाध्यमित्यमुना आशयेन प्रमेयान्तरं निरूपयति **'तदेतादृश'** इत्यादिना **'प्रत्युपस्थापयन्ति'** इत्यन्तेन । **'त्रिंशत्'** इति भूततन्मात्रबुद्धिकर्मेन्द्रियविंशकं

मनोऽहंबुद्धिप्रकृतिपुरुषरागनियतिविद्याकलाकालाश्चेति । **'प्रविशन्ति'** इति शता । **'इच्छा'** इति शक्तितत्त्वसंग्रहः, मयटा उत्तरोत्तरतत्त्वानां तत्पूर्वपूर्वानुप्राणितत्वमाह । ज्ञानक्रिये सदाशिवेश्वरौ, तद्व्यापारोऽपि विद्यातत्त्वं तत्रैव अनुप्रविष्टम् । मायातत्त्वं देहे न उपादानकारणमात्रत्वेन पृथक्त्वेन संमतम्, अपितु परमेश्वरशक्तितया । तथाहि मृदादिः पदार्थः परमेश्वरशक्तिरूप एव संस्तदिच्छावशात् घटकारणतया अपि नियतौ निर्भासमानः पृथक् कारणमुच्यते । अत एव सर्वभावानां शिवः स्वभावस्तेन विना निःस्वभावत्वात् सर्वस्येत्याशयेन स्पन्दशास्त्रे

'तमधिष्ठातृभावेन स्वभावम्········ ।' (स्प०का० ११)

इति कथितम्, वृत्तावपि

'स्वस्वभावस्यैव शिवात्मकस्य ।' (स्प० का० वृ० १)

इत्यादि । श्रीत्रिशिरोमते हि

'सामूह्यं चैव तत्त्वानां ग्रामस्तद्धर्मता शिवः ।'

इति सर्वं शिवशक्त्यात्म उक्तम् । **'तद्वत् मायापि'** इति । पञ्च एतानि तत्त्वानि । **'ततोऽपि'** इति तेभ्योऽपि तत्त्वेभ्यो हेतुभूतेभ्यः । शिवतत्त्वस्य षट्त्रिंशत्तमस्य न भेदः इति सम्बन्धः । **'अभेदात्'** इति । प्रतिबिम्बे हि भेदोऽसन्नपि आभाति तावत्, शक्तौ तदपि नेति आशयः । आदिपदेन नियतिरागौ । **'तासाम्'** इति कालादिशक्तीनाम् । **'शिवतादशायाम्'** इति यथा घटादपृथग्भूतावभासमुदकाहरणसामर्थ्यं मकुरापेक्षया पृथग्भावावभासि एव, नहि तत् मकुरस्य शक्तिरित्यवभासः परमार्थतस्तथात्वे प्रतिबिम्बमेव हि उच्यते, तथा प्रकृतेऽपि मन्तव्यम् । **'एतच्च'** इति । कालादयो ग्राहकत्वे उपयुज्यंते । अधुना न किञ्चित्करोमि जानन्नभिष्वक्तोऽहमिति हि कालकलाविद्यारागानुविद्ध एव

अणुर्नियत्यनुप्राणितो ग्राहक उच्यते। **'अन्यैः'** इति शैवव्याख्यातृभिः । तथाहि शिवब्रह्मतनुग्रन्थे गुरुपादैर्निरूपितं

'पञ्चत्रिंशत्तत्त्वी शिवनाथस्यैव शक्तिरुक्तेयम् ।
तत्र चतस्रस्तु परा अन्त्यं वै पञ्चविंशकं स्थूलाः ॥
मध्यास्तु सूक्ष्मरूपाः शक्तय इह साञ्जनास्तु परम् ।'

इत्यादि । ग्राह्यायत्तत्वात् ग्राहकताया यद्यपि कालादिशक्तयोऽपि ग्राह्यं स्पृशन्ति, तथापि सामान्यत एव न विशेषतः; बुद्धिकर्मेन्द्रियशक्तयस्तु ज्ञेयतया कार्यतया च विशेषत एव ग्राह्यं स्पृशन्ति,—इति शब्दादिपदस्य आशयः । **'ता अपि'** इति स्थूलसूक्ष्मतया उभय्यः । मायाप्रमातुरपि परमार्थतश्चिदेव तत्त्वमिति शिवस्य एव एताः शक्तयः । तथाहि

'यतः करणवर्गोऽयं·································· ।' (स्प०का०६)

इतिनीत्या, वस्तुतस्तु स एव सर्वं जानाति करोति चेति । एतदाह **'ग्राहकान्यपि'** इति । **'निराभासे'** इति वेदकैकरूपे । **'समुद्यमरूपा'** इति । अहं शब्दं जानामि करोमीति हि श्रोत्रवाक्शक्त्योस्तत्त्वम् । अत एव आह **'विमर्शजातीय'** इति अहमितिविमर्शस्य विशेषरूपा एताः, विमर्शश्च भगवत एव शक्तिरिति उक्तं

'विमर्श एव देवस्य·································· ।'

इति । तदेतदुक्तं

'गुणादिस्पन्दनिःष्यन्दाः सामान्यस्पन्दसंश्रयात् ।
लब्धात्मलाभाः·································· ॥'

( स्प० का० १९ )

इति । येऽपि प्रतिबिम्बरूपा ग्राहकास्तेषां चिद्भागः शिव एवेति उपपाद्य अचिद्भागोऽपि वेद्यात्मा तच्छक्तिरेव सदाशिवरूपेति उप-

पादयति '**ग्राहका अपि**' इति । एतच्च पूर्वमेव अस्माभिर्विमृष्टम् । 'चितिशक्तिर्विश्वरूपा भवति नचाधिक्यं स्पृशति' इति सम्बन्धः । चेतना अतिदुर्घटकारित्वादिना अद्भुततां व्यनक्ति । एतत् संक्षिप्य घटयति '**यो हि**' इति '**इदन्ताभाक्**' इति । 'निरूढेदन्ताकोऽर्थावभासः' इति सम्बन्धः । एतत् प्रमेयं प्रकृते उपयोजयति '**एवम्**' इति । ईश्वरादि व्यवह्रियते शिवत्वाद्भेदेनेति सम्बन्धः । आदिपदेन सदाशिवादि । ननु एतावन्ति तत्त्वानि शिवप्रलीनानीति न अस्माभिः श्रुतम् । श्रोष्यते इति दर्शयति '**वक्ष्यमाण**' इति । प्रमाणभूमौ सदाशिवपद एव स्थितिः, वस्तुभूमौ तु प्रलय इत्याशयेन सर्गस्थिती सर्गप्रलयाविति च दर्शितम् । ननु सदाशिवता पूर्वकूटावपि अस्ति, कथं प्रलयतैव अस्याः । अत्र आह '**प्रपञ्च**' इति । अस्फुटतैवहि प्रलीनत्वमुक्तं शुद्धेन प्रलयपदेन । व्यपदेशे हेतुमाह '**प्रलयस्य**' इति । व्यक्तिस्फुटत्वप्रपञ्चाद्युपपादविरहितः प्रलयशब्दो भूतपूर्वस्फुटदशादर्शनं यदस्फुटनं विनाशशब्देन प्रसिद्धं, तत् ब्रूते इति लोके निरूढिः । एवं श्लोकार्धं व्याख्याय अवान्तरं विवृणोति '**तस्य च**' इति । सदाशिवेश्वरोभयरूपस्य यः स्वरूपादभेदपरामर्शस्तद्विद्या नाम तत्त्वम् । अत्रैव सच्छब्दार्थनिरूपणाशयेन हेतुमाह '**स्वात्मोल्लास**' इत्यादिना । '**तस्य**' इति वर्गस्य । ननु यथादृष्टं भेद एव स्वकारणपरम्पराधीनजन्मा अस्तु,—इत्याशङ्क्य अत्रापि पूर्वोक्तं हेतुत्वेन स्मारयति '**प्रकाशात्**' इति । '**अत्र**' इति वृत्तौ । अनेन घटादीनां यादृगान्तरत्वमन्तःकरणभुवि रूढत्वं, न तादृगिहेत्याह । ननु ईश्वरदशायां स एव प्रमाता शून्यपुर्यष्टकादीनां, तत्र एकरसैव वेद्यता; ततश्च कोऽन्यो वेदकस्तत्र स्यात् यस्य न वेद्येन साकमेकत्र चिन्मात्रात्मनि अधिकरणे विश्राम उचित इति चोद्याशङ्कायामाह '**वेदकश्च**' इति । '**वक्ष्यते**' इति

'ते तु भिन्नावभासार्थाः················ ।' (४।१।८)
इत्याद्युद्देशेषु । ननु यथा नीलगुणोत्पलजात्योर्द्रव्यात्मनि अधिकरणे विश्रान्तिस्तृतीये, तथा अहन्तेदन्तयोरपि सा वाच्या; नच तृतीयमस्ति चिदचिद्द्वित्वमेवेति यत्नेन उपोद्घाते समर्थितत्वादित्याशङ्क्य आह **'स च'** इति । वेदकश्चिद्रूपमेव पूर्णतया संकोचन्यक्कारेण स्थानान्तरसंक्रान्तमिव तृतीयमधिकरणमिति यावत् । **'मतिशब्देन'** इति वृत्तौ । अनेन मनोव्यापारो मतिः । सा कथमिन्द्रियवर्गनिरपेक्षसंवेदने भगवति ईश्वरे भवेदिति शङ्कां कृन्तति **'ततः'** इति चित्स्वरूपादीश्वरात् । **'यथैव'** इति उपदेशभावनाद्यर्थं सृष्टेन कल्पनायातेन विभागेनेत्यर्थः । ननु शक्तितत्त्वे एव तर्हि विद्या अन्तर्भवेदिति कथं पृथक् तत्त्वं तत् । अत्र अपि आह **'येनैव'** इति । **'शुद्धशब्देन'** इति वृत्तौ । इयं च परमेश्वरेण चितावहमित्यस्यामिदमितिसमस्तस्वीकारिणी मतङ्गमुनिप्रश्नानन्तरं निरूपिता शुद्धविद्या । तथाहि तत्र प्रश्नग्रन्थो

'मायान्तर्वर्तिनः प्रोक्ताः पशवः पाशधर्मिणः ।
मायातीता परा विद्या विशुद्धाध्वप्रदर्शिका ॥
सा कथं युज्यतेऽणूनां छिन्धि सन्देहजं तमः ।' (१।१०।२२)

उत्तरग्रन्थस्तु

'शिवाद्यवनिपर्यन्तो योऽयमध्वातिविस्तृतः ।
स समस्तश्चितौ ज्ञेयो नाशिवत्वाद्विमुच्यते ॥' (१।१०।२३)

इति । अयमिति हि इदन्ता उक्ता, चिताविति अहन्ता ॥ ३ ॥

अस्या विद्यायाः कथं शुद्धतेत्याशङ्कायां सूत्रम्

**इदम्भावोपपन्नानां वेद्यभूमिमुपेयुषाम् ।**
**भावानां बोधसारत्वाद्यथावस्त्ववलोकनात् ॥ ४ ॥**

अवलोकनं वेदनं विद्या । सा च इयं वस्त्वनुसारिणीति

शुद्धा । तथाहि वेद्यदशामङ्गीकृतवतामपि अत एव उचितेन इद-न्तापरामर्शेन परामृश्यानां बोध एव प्रकाशात्मा सारं वस्तु, प्रका-शश्च अनन्योन्मुखाहंविमर्शमयः । तत्रैवच प्ररूढत्वेन इदन्ताया अहमिदमिति भवतीति शुद्धमिदं वेदनमिति सूत्रार्थः । एतमव-तारयति '**अशुद्ध**' इत्यादिना । शुद्धाशुद्धयोर्विद्ययोः पटान्तर-परीक्षणादन्योन्यव्यतिरेकेण स्वरूपमुपलक्ष्यं भवतीति मनसि-कृत्य अशुद्धविद्यां तावत् दर्शयति '**माया**' इत्यादिना '**वक्ष्यते**' इत्यन्तेन वाक्येन । अशुद्धविद्याया उपयोगं दर्शयितुं पशोः स्वरू-पमाह '**प्रथित**' इत्यनेन स्वात्मैव अस्य परं प्रकाशते, न परं किञ्चिदित्यर्थः । मायीयानां कालभेदसंगतिः, नतु परमेश्वरशक्ति-रूपाया मायायाः । ततो मायामूलोऽपि मलोऽनादिरेवेति नित्य एव पशुः । यत् श्रीकिरणोक्तिः

'पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः ।'

इति । तत एव सर्वतःसङ्कोचादणुः । 'सोऽणुर्यद्वशाद्भिन्नवेद्यवेद-कस्तन्मायीय' इति सम्बन्धः । '**मायीयत्वं वक्ष्यामि**' इति शुद्धविद्यातो व्यतिरेको दर्शितः '**ननु**' इत्यादिना। '**तदभेदेन**' इति विद्याभेदेन । '**परम्**' इति ततोऽन्यदमायीयम् ॥ ४ ॥

अधिष्ठातृदेवताव्यतिरिक्तमेव तत्सनामकमेतत् तत्त्वद्वयमिति भङ्ग्या प्रतिपादयितुं सूत्रम्

**अत्रापरत्वं भावानामनात्मत्वेन भासनात् ।**
**परताहन्तयाच्छादात्परापरदशा हि सा ॥ ५ ॥**

अपरत्वमपूर्णता अन्याकाङ्क्षित्वमिदमिति, परत्वं पूर्णत्वमह-मिति । अत एवच तत्त्वद्वयेऽपि तावंशौ स्त इति वेद्यभावनिष्ठा दशा तत्त्वस्वरूपा तदवभासयितृशुद्धमातृवेद्यवस्तुसाधना । तद्वे-

द्यनिष्ठसंवेदनदशा तु शुद्धविद्या, तत्प्रमातृरूपमन्त्रमहेश्वरादिवर्गाधिष्ठातृत्वं श्रीसदाशिवेश्वरभट्टारकरूपतेति तात्पर्यतः सूत्रार्थः । तं संक्षिप्य आह **'आगमेषु'** इत्यादिना । तत्त्वगतशब्देन देवतारूपात् व्यतिरेकः सूचितः । ईश्वरावस्थायां स्फुटीकृतत्वादिदन्तयास्तुलाधृतं परत्वमपरत्वं चेत्याशयेन आह **'ईश्वरावस्था'** इति । एतद्द्वारेण च सदाशिवदशा अपि न स्वीकृता भवेदिति अभिप्रायः । न अत्र सांख्य इव परिणामक्रमेण दशाव्यवहार इति दर्शयति **'आत्मीयस्वातन्त्र्य'** इति । परापरत्वे शुद्धे कीदृशे स्यातामित्याकाङ्क्षायां परत्वं तावत् निरूपयितुमाह **'तत्र'** इति । **'तद्विपरीतम्'** इत्यादिना शुद्धमपरत्वमाह । **'तावत्'** इति द्वितीयविपर्यासानुदयेऽपि इयतैव अपरत्वमुल्लसितं विद्येशानामिव, तदुदये तु तदेव ब्रह्मादिकीटान्तानामिव स्फुटतामेष्यतीति आशयः । **'तत्रापि'** इति द्वितीयप्रकाशने । **'स्थित'** इति तदधिकमित्यर्थः । **'पूर्णतायोग्यस्य'** इति इदमितिपरामृश्यतयैव हि पूर्णता निरवकाशीकृता राज्ञ इव अभाग्यवशात् दासदशामधिशयानस्य अहमितिपरामृश्यतायां भवितव्यं पूर्णतयेति तया न भवन्त्या शोच्यतमत्वं तस्यैव प्राप्तेऽपि स्वामिपदे शक्तित्रितयानियोग इव । **'अनेन'** इति **'अपरत्वम्'** इत्यन्तेन वृत्तिग्रन्थेन । पुंस्तत्त्वग्रहणेन ब्रह्मादेः संग्रहेऽपि मायीयैश्वर्यांशोद्रेकात् साम्यमपरसंसारिभिरल्पबुद्धिभिर्न संभावयेतेति पृथगुपादानम् । **'एतेन'** इति **'परता'** इत्यन्तेन वृत्तिवाक्येन । शुद्धे द्वे दशे निरूप्य मिश्रीकारेण तृतीयामाह **'वृत्तौ'** इति अतो हेतोरुभयांशवशादेषा दशा परापरावस्थेति । **'साकल्यवादिना'** इति, नतु जात्याख्यायामायातेन, अपितु व्यक्तिभूमानमभिदधता । 'पूर्णत्वं पूरितम्' इति सम्बन्धः । विद्येश्वरदशा तर्हि का भवेदिति

निरूपयितुं व्यतिरेकप्रसङ्गात् पुनरपरावस्थां स्पृशति **'द्वितीयार्थे'** इत्यादिना । **'अत्यन्त'** इति अपरत्वं भवति, नतु संसारिजनतुल्यमिति यावत् । तेन वेद्यांशे संसारितुल्या एव ते इति निरूप्य वेदकांशमुखेन उत्कर्षं दर्शयति पक्षान्तरेण **'चिद्रूपाचलनाद्वा'** इति ॥ ५ ॥

एवमहमिदमिति संवेदने यदाच्छादकमहमितिरूपं, तत्प्राधान्येन व्यापारः शुद्धविद्येति प्रतिपादितम्, इदमिति तु य आच्छादनीयोऽत्र भागस्तत्प्राधान्येनेति तु मतान्तरं दर्शयितुं सूत्रं

**भेदधीरेव भावेषु कर्तुर्बोधात्मनोऽपि या ।**
**मायाशक्त्येव सा विद्येत्यन्ये विद्येश्वरा यथा ॥ ६ ॥**

शून्यादिरूपमायाप्रमात्रनुल्लासेऽपि संविन्मात्रे एव बोद्धरि कर्तरि च भावेषु तन्मयेष्वपि भेदप्रकाशनलक्षणं यत् स्वातन्त्र्यं मायाशक्तिरूपमिव तत् प्रमातृभागे विपर्ययाभावात् शुद्धविद्या येन प्रकारेण अनन्तभट्टारकाद्या विद्येश्वरा वर्तन्ते । ते हि शुद्धचिन्मात्रबद्धाहम्भावा एव भिन्नं भाववर्गं पश्यन्ति द्वैतदृशि इव ईश्वरः । तेन परमेश्वरस्वातन्त्र्योपजीविनी विद्येश्वरशक्तिः शुद्धविद्येति तात्पर्यं सूत्रस्य । तदाह **'विद्येश्वराणाम्'** इत्यादिना । **'अथच'** इति निकृष्टा, इदम्भावस्य प्ररूढत्वात् निकर्षः । तामेव आह **'विद्या'** इति । 'शब्देन' इति सङ्गतिः । **'अत एव'** इति स्फुटपशुभावाप्रादुर्भावात् । **'कर्मणाम्'** इति लौकिकवैदिकात्मनाम् । दीक्षाध्यानार्चनादेरेव तु तद्वशेन कृतात् तत्प्राप्तिः, अकृतप्रायश्चित्तश्च गृहीताधिकारोऽपि अकृताधिकारो योग्यविधिलाभेऽपि तत्पदमेति । यदागमः

'अधिकारं न चेत् कुर्याद्विद्येशः स्यात्तनुक्षये ।'

इति । एवमागमोऽपि अवश्यमभ्युपेय इत्याह **'ईश्वर'** इत्यादि

**'सार्थकम्'** इति विद्यातत्त्वे स्थिता ईश्वराः सर्वज्ञाः सर्वकर्तारश्चेति विद्येश्वराः । ननु एवमपि कस्मात् पृथक् तेषां न तत्त्वान्तरताप्रसङ्ग इत्याशङ्क्य आह **'तत्त्वानां च'** इति **'मायायाम्'** इति । पार्थिवे ब्रह्मा, प्राकृते विष्णुः, मायीये पदे रुद्रः; इयच्च मायाशक्तिविजृम्भितमिति सामान्येन मायायामिति उक्तम् । वृत्तिं व्याचष्टे **'मन्त्रविद्यानाम्'** इति । ऐक्यं शुद्धानादिपरामर्शसारशब्दराशिकलाशरीरत्वेन, अवान्तरभेदस्तु मुक्तिसिद्ध्योः संवेदनवाच्यस्पन्दयोः शक्तिमच्छक्तिरूपयोश्च क्रमेण प्राधान्यात् । तथा श्रीमतङ्गादौ विद्येश्वरेभ्यः पृथगेव विद्याराज्योऽम्बिकाद्या निरूपिताः ॥ ६ ॥

स्वातन्त्र्यात्मिका तावदिच्छैव भगवतः शक्तिः । सा तु कृत्यभेदेन बहुधा उपचर्यते । तत्र यथाप्ररूढस्फुटास्फुटेदन्ताप्रकाशने सदाशिवेश्वरता ज्ञानक्रियाशक्तिरूपा, चिन्मात्रग्राहकत्वेऽपि इदन्ताप्ररूढौ क्रियाशक्तिशेषरूपैव महामाया विद्येशशक्तिः, ग्राह्यग्राहकविपर्यासे पशुप्रमातृषु मायाशक्तिः, तथा ग्राहकग्राह्योभयविपर्याससंस्कारशेषत्वेऽपि योगिज्ञानिविषयं यत् वस्तुपरमार्थप्रथनं, तत्र यत् भगवतः स्वातन्त्र्यं मायाशक्तिविपरीतं; तदवश्यं तत्त्वान्तरम् । यत् विवरीष्यते **'पृथक्प्रयोजन'** इति **'तदेव विद्यातत्त्वम्'** इति । मायाव्यतिरेकेण तद्रूपं दर्शयति सूत्रेण

> **तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका ।**
> **विद्याशक्तिस्तिरोधानकरी मायाभिधा पुनः ॥ ७ ॥**

पशुभावे ग्राहकग्राह्यविपर्यासोभयात्मनि पाशयोगलक्षणे स्थितेऽपि तस्य प्रमातृपरमार्थरूपस्य ऐश्वर्यलक्षणस्य स्वभावस्य या प्रकाशिका भगवतः शक्तिः, सा निष्कलप्रमातृषु वर्तमाना विद्या । यत् वक्ष्यते

'विद्याभिज्ञापितैश्वर्यः················।' (३।२।२)

इति । मायाशक्तेर्न अत्र व्यापारः । सा हि तिरोधानस्वरूपावरणं हेतुताच्छील्यादिना करोति । यत् भविष्यति

'एष प्रमाता मायान्धः संसारी···········।' (३।२।२)

इति । तेन स्वरूपप्रकाशनशक्तेर्व्यतिरिक्तैव सेति सूत्रार्थः । तमवतारयति **'माया'** इत्यादिना । **'तथा'** इति ऐश्वर्यात्मना । मायातो व्यतिरेकं व्याख्यातुं यत् **'तिरोधानकरी'** इत्यादि सौत्रं, तत् विवृणोति **'ऐश्वर्यस्वभाव'** इत्यादिना । तिरोधानमावरणं स्वरूपाप्रकाशनं मलमज्ञानं प्रसज्यप्रतिषेधात्मकं यत्, तदेकम्; तत्पृष्ठ एवतु तदुपप्राणितपर्युदासात्मना विपरीतप्रकाररूपं द्वितीयम् । तदाह **'अन्यत्'** इति । **'तथाप्रसिद्धम्'** इति रूढिमात्रात्, तथा मायाशक्तिकृतत्वं तु सर्वस्य अपि । एतदर्थमेव

'अथात्ममलमायाख्य·····················।'

इतिश्रीरौरवसूत्रे आख्यग्रहणम् । **'सृष्टिस्थिति'** इति प्रलयविपरीतता **'जागरस्वप्न'** इति सुषुप्तविपरीतता उक्ता । प्रलयसुषुप्तयोः सर्वासर्वसाधारणेतरशीघ्रचिरत्वादिना भेदो मन्तव्यः । एवं त्रीणि सृष्ट्यादीनि कृत्यानि तिरोधानरूपाणि प्रतिपाद्य चतुर्थमपि विलयनामकं तिरोधानशब्देन प्रसिद्धं तिरोधानं मायाकार्यमाह **'नरक'** इत्यादिना । ननु ब्रह्महत्यादितो नरकगमनमिति सृष्ट्यादित्रयमेव एतत् । नैवमित्याह **'कर्मफलातिरिक्तम्'** इति । यत् किल पारमेश्वरसमयमङ्गीकृतवतोऽपि अन्तस्तद्विषयं द्वेषकालुष्यं तत्कर्मानपेक्षया एव शुद्धया परमेश्वरेच्छया एव प्रकोपापरपर्यायया भवति, तेन ये सुखदुःखे नियतिवदनावलोकिशुभाशुभबलात् भवतस्ते धर्माधर्मनिमित्ते; ये तु शुभाशुभानुसरणमन्तरेण एव, ते परमेश्वरेच्छात एव

केवलायाः । तत्र तत्कृता दुःखावाप्तिर्विलयस्तिरोधानं च उच्यते। तच्च तात्कालिकमात्रं वा कालान्तरानुबन्धि वा । पूर्वं कामान्धकत्रिपुररावणादीनाम्, उत्तरं तु शिवगुरुशास्त्रसमयादिद्वेषिणां नरकपातमयम् । '**अत एव**' इति यतः कृत्यान्तरमुक्तं, ततः । ननु पञ्चमं तत् किम् । आह '**अनुग्रहश्च**' इति । सोऽपि क्रमिको वरदानात्मा नन्दीश्वरादिषु, अक्रमिकस्तु दीक्षाप्राप्त्यादिझगित्यपवर्गदः । '**सर्वम्**' इत्युक्तेऽनुग्रहस्य अपि मायाकार्यता उक्ता, तत् किं व्यापारान्तरेण अत्रेति शङ्कां ध्वंसयति '**वरदानादिरपि**' इति । आदिग्रहणेन सिद्धिप्रेप्सया धनादिकाम्यया आर्तिविवारयिषया अपिच यत् परमेश्वरसमयप्रतिपादनं, तदपि अनुग्रहरूपमेवेत्याह । उन्मेषशब्देन तीव्रत्वं तत्र विद्याया आचक्षाणस्तीव्रविद्याकृतानुग्रहबलेन रुद्रशक्त्याविष्टो मोक्षप्रेप्सुरेव गुरूपसदनादिकं दीक्षाज्ञानयोगचर्यादिकमेतद्देहपात एव अपवर्गफलं प्राप्नोति,—इति दर्शयति । '**स्यात्**' इतिपदेन इदमेव अस्य सूचितम् । यद्यपि वरदानादौ मायाया अविनिवृत्तिः, तदाशयेन च '**सर्वम्**' इति उक्तं; तथापि संभाव्यत एव अत्र विद्याशक्तिकृतो लेशेन आवेशः, यः परिपाके मोक्षफलः । अत एव गीतम्

'चतुर्विधा भजन्ते माम्................ ।' (७।१६)

इति उक्त्वा

'उदाराः सर्व एवैते......................... ।' (७।१८)

इति । तीव्रविद्याशक्त्यनुग्रहस्तु दर्शितः

'.......................ज्ञानी त्वात्मैव.... ।' (७।१८)

इति । एतच्च प्रपञ्चितं प्रथमत एव, तथा नवधा मुख्यतयैश्वरः शक्तिपातः (१३आ०) इति सुविवेचितं श्रीतन्त्रालोकादौ ॥ ७ ॥

विद्यास्वरूपं स्फुटयितुं मायातो व्यतिरेचनं यत् वक्तव्यं, तदाशयेन यत् मायाया स्वरूपमुक्तं '**तिरोधानकरी**' इति; तदेव सूत्रान्तरेण स्पष्टीक्रियते

**भेदे त्वेकरसे भातेऽहन्तयानात्मनीक्षिते ।**
**शून्ये बुद्धौ शरीरे वा मायाशक्तिर्विजृम्भते ॥ ८ ॥**

अत एव अवतारण्यां '**विपर्ययद्वयहेतुः**' इति तद्धेतुत्वेन स्फुटेन रूपेणेत्यर्थः । '**सुषुप्ते प्रलये वा**' इति '**न**' इति अभावसमाधौ च यत् व्योमकल्पमनात्मरूपमिव आभाति, तदनुस्मर्यमाणत्वेन वेद्यं सदहमिति आत्मत्वेन स्वातन्त्र्येण अभिनिविश्यते । उच्छ्वसिमि, निःश्वसिमि,—इत्यत्र प्राणो वायुकल्पः, बुभुक्षे, पिपासामि,—इतिप्रत्यये मन्युप्रज्वलनादौ च स एव तेजःसमुपबृंहितः । अन्तरहं वेद्मि सुखी दुःखी मूढोऽहम्,—इत्याद्यवस्थासु स्वच्छसलिलाशयसदृशी बुद्धिः, कृशः स्थूलो गौरोऽहम्,—इत्यादौ शरीरमेव पृथ्वीप्रायम् । अत्र च चिन्मात्रतापरमार्थेऽपि यत् वेद्यताभासनम्, एतदाद्यं विपर्यासं मायीयम्; अतिरस्कृतवेद्यभावमेव तु तत् जडमपि सत् यदहमिति आत्मतया भाति, तत् द्वितीयम् । एवंविधातिदुष्करविमोहनव्यापारसंपत्त्यप्रतिघातरूपा इयमिति कथयितुं '**विजृम्भते**' इति । वाग्रहणेन विवेकावगम्यतायामपि बुद्धिप्राणशून्यप्रमातृभावस्य हेयत्वेन अविशेष इति वदता दारसुतधनभवनादावपि गाढामहन्तां सूचयति,—इति सूत्रार्थः ।

'सामानाधिकरण्यं च.................... ।' (३।१।३)

इति या विद्या दर्शिता, तामनुवदति मायाशक्तिं ततो व्यतिरेचयितुम् '**ईश्वरस्य**' इत्यादिना । शरीरस्य शीर्यमाणतां दर्शयति '**जरा**' इत्यादिना । **अग्निरूपम्**' इति तदव्यभिचारिणमिति

यावत्। प्राणत एव वर्गपञ्चकस्य त्रितयस्य च अनुप्रवेशात् पुर्यष्टकरूपतामिच्छन्ति। **'स्मर्यमाणत्वात्'** इति संविद्रूपं हि अविच्छिन्नप्रकाशस्वभावः कथं स्मर्यते। तदुक्तं

'नाभावः.......................।' (स्प०का०१२)

इत्यादि उपक्रम्य

'यतोऽभियोगसंस्पर्शात् तदासीदिति निश्चयः।'

इति उक्त्वा

'नत्वेवं स्मर्यमाणत्वं तत् तत्त्वं प्रतिपद्यते।' (स्प०का०१३)

इति। यदावा एवं, तदा अनात्मा एव अहन्तया प्रतिपन्न इत्येवं सर्वोऽयं द्वितीयो विपर्यासः इति महावाक्यस्य सङ्गतिः। **'तथैव'** इति आत्मतया। एष एवच द्वितीयो विपर्यासोऽनात्मनि आत्मभावनाख्यः सांख्यादिशास्त्रे सर्वत्र हेयत्वेन सिद्धः, नतु पूर्वः। तेनैवच प्रथमेन विपर्ययेण अन्तःक्रोडीकृत एव अयं द्वितीयो विपर्यासः, यदुपसंहरिष्यति **'तदेक एवायम्'** इति, नतु समशीर्षिकया द्वाविमौ विपर्यासाविति निर्णयन् मलत्वमस्य उपपादयति **'अदर्शनं च'** इत्यादिना। ननु अदर्शनयोग्यं पुर्यष्टकादि प्रकाशमानतया नाम संभाव्यतां घटादिवदेव, तस्य तु किमहंप्रतीत्या अधिकया येन उक्तं **'प्रतीतौ'** इति। आह **'तस्यैव'** इति। **'केवलम्'** इति इयदधिकमवश्यमङ्गीकार्यम्। अहंप्रतीत्यभावे हि स एव **'शुद्धाज्ञत्वसहित'** इति आत्मतया यो न दृश्यते भाववर्गो नीलादिः, स नैव प्रकाशेत, प्रकाशते च असौ। नीलमिदमिति हि न मूर्च्छान्धतमसपदमदः। तदवश्यमहम्भावेन अधिकेन अत्र भवितव्यं येन केवलं कृत्वा शुद्धा तत्र अज्ञता न भवति। ननु अस्ति अहम्भाव ऐश्वर आच्छादकः, तत् किमपरेण पृथग्भूतेन तेनेति चोद्यं परिहरति

**'पुर्यष्टकाद्यपि'** इति । तेन अहम्भावेन अज्ञता सर्वथैव तिरोधीयते इति पुनरपि नीलमिदमिति न प्ररोहेत् । ततस्तादृगपरोऽहम्भावोऽत्र निषेक्तव्यो यस्तत्र ज्ञतां निर्मलतया तिरस्कर्तुं न शक्तः इति आशयशेषः । **'प्रथमः'** इति आद्यः प्रधानभूतश्च । यत् नरेश्वरविवेकः

'वेद्यीकरणमर्थानां मलो मायाख्य उच्यते ।
मलम्........................... ॥'

इति । मलत्वेन एवच तत्र निदानापेक्षया मायाख्यतया प्रसिद्धिरागमेषु भगवता उत्थापिता, द्वितीयस्य तु मलस्य विषयप्रयोजनापेक्षया आणव इति । तत्र अस्य प्रथमस्य शुद्धं विषयमाह **'आणवो यत्र नास्ति तत् यथा'** इत्यादिना । सर्ववित्त्वादेव आणवाभावः । **'वाचकः'** इति परामर्शसारो, नतु केवलश्रवणविषयरूपः शब्दविशेषो मायीयवर्णानुप्राणनकृदमायीयः । यथा उक्तं

'ते तैरालिङ्गिताः सन्तः............।' (मा० वि० ३।२८)

इत्यादि । स आत्मा अहम्भावभाजनं येषां ते तेन शब्दशरीरत्वात् सङ्कुचिता वेद्यवर्गादन्योन्यतश्च, शब्दस्य च अत्यन्तं प्रकाशं प्रति निविडावरणरूपत्वाभावात् न सर्वज्ञताहानिः । एतच्च विशेषग्रहणेन प्रमात्रित्यादिविशेषणोपादानेन च आसूत्रितम् । एतदेव समर्थयितुमुत्तरो ग्रन्थः । अत्र च

'घटोऽयमित्यध्यवसा.................. ।' (१।५।२०)

इत्येतत्सूत्रविवृतिप्रमेयमनुमन्तव्यम् । अन्योन्यं भिन्नं मन्त्राणां वर्गं सामान्यात्मना तावत् साधारणेन रूपेण ब्रह्माङ्गवक्त्रेषु इव मूलमन्त्रांशरूपतया अनुयन्तः सामान्यविशेषगोत्वाश्वत्वादिन्यायेन भिन्नाः स्वयं तु वाचकशब्दशरीरा एव । तदाह **'उभये च'**

इति मन्त्रा मन्त्रेशाश्च । मन्त्रेश्वरा अपि वाचकशब्दशरीरमन्त्रेश्वर-रूपमन्त्रविशेषाधिष्ठातारो मन्त्रेश्वररूपतयैव अत्र सङ्गृहीताः । यत् वक्ष्यति

'बोधानामपि कर्तृत्वजुषाम्………… ।' (३।२।९)

इत्यादि उपक्रम्य

'……………………………… विद्येश्वराश्च ते ।'

इति । **'तदपेक्षया'** इति वाचकशब्दविशेषात्मकशरीरोपाधि-सम्बन्धप्रतिलब्धसङ्कोचवशेनेत्यर्थः । परस्परव्यतिरेकेण स्वलक्ष-णता प्रमेयस्य भवति,—इत्याशयेन मायाप्रमातॄन् विद्याप्रमातॄंश्च सान्तरविचारेण व्यतिरेचयति **'मायाप्रमातारः'** इत्यादिना **'मन्त्राणां हि'** इत्यादिना च । इदन्ता एवहि शरीरबुद्धिप्राणादिषु प्रधानभूता । नहि एते शब्दनरूपवत् संवेदनगामिनः इति संविदं सङ्कोचयन्तो निबिडतममावृण्वते ननु । एवं शब्दनशरीरो मन्त्रात्मा हृदयाकाशे विमर्शरूपतया विपरिवर्तमानः, अत एव अनाहत-शब्दवाच्यो नित्योदितो मन्त्रः । तादात्म्यं दर्शयति **'स्पर्शादेः'** इति । एतदल्पमुक्तम्, इयं तु उचितोक्तिरिति वाग्रहणम् । अत एव पुनरादिपदम् । **'भूतान्तरवर्तिनः'** इति खटखटाच्छल-च्छलादिरूपस्य मेयैकरूपस्येत्यर्थः । तत्रापि यस्तत्परामर्शकस्तद-व्यक्तप्रमेयभूतस्वलक्षणात्मकशब्दानुकरणत्वेन वैयाकरणैर्गीतः, स आकाशीयो वाचक एव प्रमातृविश्रान्तिसतत्त्वः । अनेन आका-शीयपदस्य व्यवच्छेद्यं दर्शितम् । **'शिवतापि'** इति इदन्तानु-न्मीलने प्रमातृपदे । **'ईश्वरतापि'** इति इदन्तोन्मीलने प्रमाण-भूमौ । **'तत्'** इति तस्य भगवतो या कर्तृता अहमिति स्वात-न्त्र्यात्मा, सा यत्र उपचर्यते समारोप्यते स्पर्शादौ सोऽर्थो यतो वेद्यैकरूपस्ततस्तत्तादात्म्याविभागगामिन्यौ ते शिवतेश्वरते अपि

तच्छरीरप्रभृतिगतस्पर्शशब्दरूपरसगन्धादिनिष्ठमेव देशकालसङ्कोचं भजत इव । '**बुद्धिः**' इति प्रकाशभागेन, '**पश्यन्ती**' इति विमर्शांशेन । तत एव प्रमेयता वाच्यता च प्राक् पृथगुक्ता । '**तयोश्च**' इति निर्धारणपदेन पूर्वकस्य एव अर्थस्य इदं स्फुटीकरणमिति दर्शितम् । '**ततः**' इति यतः प्रमातृप्रमाणे देशकालावच्छेदवती, ततस्तयोरायत्ता वेद्यसंवित्तिस्तथैव आभाति । '**मुख्यम्**' इति प्रमाणपदे यतः करणताया अवस्थानं, नतु कर्मताप्रमेयता तत्र अवस्थिता । तदा मुख्यं संपूर्णं वेद्यवेदकतालक्षणं मायाप्रमातृत्वं नास्ति, वेद्योपाधानसङ्कोचात् तु तदपूर्णमस्ति एव । '**मन्त्रात्मना**' इति शुद्धविमर्शरूपेणेत्यर्थः । '**असौ**' इति सङ्कोचः । '**तच्च**' इति ककारादिविभागात्मकम् । '**प्रतिबिम्बकल्पम्**' इति प्रतिबिम्बकल्पतया एव सर्वस्य निर्भासनमिति आकूतम् । अत्र शरीरघटादि अपिहि वस्तुतः प्रतिबिम्बप्रायमेव । तत्र स्फुटपृथग्भावेन वेद्यत्वं नैव भासते, नतु एवं वाचकपरामर्शनिष्ठः ककारादिविभागः । एतदाह '**नतु विजातीयम्**' इति पृथक्परामृश्यत्वेन संवेद्यमिति यावत् । '**तत्**' इति वर्णविभागरूपं कर्तृ । '**अज्ञत्वम्**' इति कर्म । दृष्टान्तो वैधर्म्येण । प्रतिबिम्बकल्पत्वेन '**भासमानत्वात्**' इति हेतुमुक्त्वा हेत्वन्तरमपि आह '**स्वप्राधान्याभावाच्च**' इति । शरीरादौ मायाप्रमातॄणां परमास्था बन्धस्थानत्वेन भाति समस्तानां तद्भङ्गभीरुस्वभावत्वात् । ककारादिवर्णग्रामस्तु विद्याप्रमातॄणामुपाधानवत् मायाप्रमातृगतनीलादिभेदवत् निजकृत्योपकरणतया भासते । संवेदन एव आत्मताभिमानो हि एषाम् । उपाधानतामेव दर्शयति '**केवलम्**' इति । ननु

'कर्मतश्च शरीराणि························ ।'

इति तावदुच्यते। तेषां तु विद्यामयानां निर्माणे किं कारणम्। आह **'परमेश्वरेच्छा'** इति। कर्माद्यनपेक्षामेव प्राह **'सा च'** इति इच्छा। एवं विषयद्वारेण अशुद्धं मायाख्यमलस्वरूपमुक्तमुपसंहरति **'तदयम्'** इति। **'परम्'** इति केवलम्। एतदेव स्फुटयति **'ननु'** इति। **'अग्रे'** इति

'बोधानामपि कर्तृत्वजुषाम्·········।' (३।२।९)

इत्यत्र। **'एकवचनान्तम्'** इति वृत्तौ देहादिरित्येतदपेक्षया चकारेण स्फुटत्वेन वाक्यभेदोऽत्र आनीत इत्याशयेन एवमुक्तम्। **'तत्र'** इति

'माया विमोहिनी नाम कलायाः कलनं स्थितम्।'

इति हि श्रीरुद्रयामलसारवाक्यम्। **'तद्वशादेव'** इति। विवर्तपरिणामकार्यकारणतावादा हि वितत्य निराकृता इति भगवच्छक्तिरूपा एव माया विपर्यासान्तराक्षेपिप्रथमोक्तविपर्यासक्रमेण स्वात्मनि भावात्मातः? करोतीति॥ ८॥

ननु अनात्मा शून्यादिरात्मतया यावदभिनिविश्यते, तावत् चिद्रूपतया अभिनिविष्टो भवति। सा च अनावृतेति पुनरपि विशुद्धैश्वर्ययोग एव अस्य युक्तः इत्याशङ्कां तत्त्वपञ्चकसंवलितपुंस्तत्त्वप्रदर्शनेन अपोहति

**यश्च प्रमाता शून्यादिः प्रमेये व्यतिरेकिणि।**
**माता स मेयः सन् कालादिकपञ्चकवेष्टितः॥ ९॥**

स्यादेव दोषो यदि प्रमातृतायां शून्यादिर्मेयतां जह्यात्, नतु एवम्। तथाहि सति व्यतिरिक्ते मेये कथं माता भवेत्। पारिमित्यं हि अत्र प्रमेयत्वे मातुर्व्यतिरेके च प्राणः। तदेवच कालादिपञ्चककञ्चुकनिचितत्वमिति सूत्रार्थः। तं संक्षिप्य अवतारयति **'इदानीम्'** इति। **'स्यात्'** इति

'अपि त्वात्मबलस्पर्शात्.......... ।' (स्प० का० ८)

इतिनीत्या। '**सा**' इति '**अहमिदम्**' इति ऐश्वरसंवित्। '**अत्र**' इति शरीरे। '**वक्ष्यते**' इति

'कलोद्वलितमेतच्च............. ।' (३।२।११)

इत्यत्र सूत्रे। '**तद्रूपता**' इति । आत्मरूपताहि सती अपि संसारित्वे निवर्तते एव शरीरे गृहवस्त्रादाविव । मान्यपदेन अपूर्णं प्रामाणिकत्वमाह। शङ्कितानवस्थापरिहाराशयेन विशिनष्टि '**नित्योदिता**' इत्यादिना । '**अतथा**' इति तदधीनत्वादेव अज्ञमकर्तृ चेति अणुलक्षणं योजितमत्र । ननु स्त्रीबालादीनां पुर्यष्टकादि न भवेत् 'आत्मा शरीरमेव' इति उक्त्या, ततश्च अपरलोकिनस्ते स्युः। अत्र आह '**शरीरात्ममानिनामपि**' इति। एतत् च प्राक् व्याकृतमेव '**अयमेव हि अनात्मनि आत्माभिनिवेशावतरणक्रमः**' इत्यत्र। अष्टादशविधनिषेध्यापसरणे नञ्परामर्शविशेषमपि यदा अयमभ्यासवशादुज्झति

'................येन त्यजसि तत्त्यज ।'

इति, तदा नेत्यपिविशेषस्य अस्तमयात् विशुद्धमेव चित्तत्वं भाति; केवलं तत्संस्कारात् भेदोऽत्रेति व्युत्थानादिसम्भवः। '**सङ्कोचितम्**' इत्यन्तं कर्तृपदम्। '**अनुभूत**' इत्यादि कर्मपदम्। '**सा**' इति आत्मरूपता। यत्पदेन क्रियापरामर्शेऽपि क्रियायाः कारकोत्कलितशरीरत्वात् करणस्य प्रकृतस्य परामर्श उचित एव, नतु वासनापेक्षमेतत् लिङ्गं पुनः संस्कारापेक्षया पुंनिर्देशान्तरप्रसङ्गात्। '**अथवा**' इति न इदन्तया वेद्यम्, अपितु मायीया तावदागृहीतरूपा सा अहन्ता एव युक्तेत्यर्थः। तथाहि व्याख्याता तावत् संस्कारवन्तमात्मानं मन्वानो व्याख्यातुमुद्यच्छति, नतु तान् संस्कारान् पृथग्वेद्यमानः। 'रुद्रादेस्तुलनम्' इत्यादौ

च 'सोऽहम्' इति तावत् संस्कारपूर्ण एव अहमितिपरामर्शात् गर्वकोपाद्युदया युक्ताः । स्वकृतसङ्कोचसंस्कारवती या चित्, तन्मयतया प्रलीनमपसारितशब्दादिरूपविशेषमेकमिति पुर्यष्टकान्तरादेर्भिन्नम् । द्वितीयविपर्यासस्य आद्यविपर्यासनान्तरीयकं स्वरूपं विषयद्वारेण उपसंहरति **'तदेवमेतत्'** इति । प्रथमविपर्यासभित्तौ रूपान्तरमिदमिति अङ्गपदेन असमस्तपदेन आह । एवं **'माता स मेयः सन्'** इत्यन्तं व्याख्याय **'कालादिक'** इत्यादि व्याख्यातुमारभते **'अन्यदपि'** इति । इयमपि आशङ्का अनेन एव परिहृता यदुत कलननियमनादि कार्यमशेषप्रमेयनिष्ठं दृश्यते, तदमी कालाद्याः प्रमातृधर्मत्वेन एव किमुच्यन्ते इति । पारतन्त्र्यं तत्त्वान्तरसम्बन्धे सति समर्थता स्वयमसमर्थता तु अप्रभुत्वमित्यनया भङ्ग्या भेदनोपादानम् । तत्र विशेषणतातिरेकेण न कालादीनां स्वरूपमस्ति । विशेषणं च प्रतीत्यारूढमेव तथा भवति । तत्र दण्डादीनि विशेषणानि अपि न आभासनक्रियां भिन्दन्ति तथा भवन्ति, अपितु पुरुषादिकमेव विशेष्यं संयोगादिद्वारेण । ततस्तेषां वस्त्ववच्छेदकतया पूर्वं प्रमातृभागावच्छेद उपयुज्यते दण्डी अयमिति इयता एव कृत्यस्य पूर्णत्वात् । कालः पुनः स्फुटास्फुटरूपतया आभासक्रियामेव भावाभाववर्तीं निर्भासयता परमेश्वरेण सृष्टः । स च आभासनक्रियया एव भावाभाववति इदन्ताभागे पतितत्वादहमिति अवभासलीनत्वात् च प्रमातरि एव प्रथमं स्फुरति । तद्द्वारेण तु घटादौ योऽहमयमिदानीं स्फुटरूपो वर्ते, परिकृशो भूत्वा स्थूलतरश्च भविष्यामि अश्वगन्धघृतोपयोगेन तत्सहभाविनोऽमी घटादयः स्फुटरूपा वर्तमाना इत्येवंवर्तमानात्मकध्रुवकालावधिपरिग्रहेण भूतभविष्यतोः प्रमातृगतयोरेव सतोः प्रमेये विश्रान्तिः,—इति

प्रवहद्द्वयःकालः स पुंस एव कञ्चुकत्वेन युक्त इत्यागमेषु तथा निर्दिष्टः । नियत्यादेरेष एव नयः । '**एव**' इति '**बत बत**' इति '**किञ्चित्**' इति '**ह्यः**' इति '**आस**' इति हि विमर्शा नियतिरागकलाकालविद्यात्मानः संविदि एव, न वेद्ये । तदयं वर्गो न स्वतन्त्रः, नापि सामान्येन प्रमेयधर्मः,—इति तात्पर्यम् । तदुक्तं श्रीकालपादायां

'यावत्येव हि संवित्तिरुदिता सुस्फुटा भवेत् ।
तावान् क्षणो वर्तमानः कल्पो वान्यद्वयावधिः ? ॥'

इति । एतत् '**तथाच**' इत्यादिना स्फुटयति । सर्वमिह आभासरूपमिति उत्सर्गः, तत् किं वृत्तावाभासपदेन,—इत्याशङ्क्य आह '**सर्वं हि**' इति । '**बहिर्वस्तु**' इति सकलसाधारणतया एव बाह्यत्वं, सा च न विशेषणतायां नीलस्य अपि कंचित्प्रति विशेष्यत्वात् उत्पलस्य च विशेषणत्वात् । यत् मध्यममुनिः

'विशेषणविशेष्ययोरुभयविशेषणत्वात्'

इत्यादि । '**देवदत्तं प्रति**' इति अप्रतीतत्वेऽर्थक्रियासम्बन्धे च उभयत्र योज्यम् । ननु अप्रतीतं सा अवच्छिदद्दर्थक्रियान्तरं तु करिष्यति,—इत्याह '**नच**' इति । नीलं हि पृथगेव सुखदुःखादिकं जनयत् न विशेषणमुच्यते । एतत् निदर्शनेन स्फुटयति '**नहि**' इति । दण्डिप्रतीतेरुपयोग्यानिनीषितपुरुषावच्छेदनादित्यर्थः । '**तथाहि**' इति एवंच सतीत्यर्थः । '**प्रमातृभूमौ प्रमातृभूमौ**' इति वीप्सा, अव्ययीभावेन साधारणतारूपबाह्यत्वाभाव उक्तः । '**एकतामय**' इति सम्बन्धरूपः । '**प्रथते**' इति अनपह्नवनीयतया वस्तु एव । '**तात्कालिक**' इति तथैव तदा सृष्टः । अन्यदाहि तस्यैव प्रमातुरसौ अन्यथा स्फुरत्येव । एवं विशेषणवृत्तान्तं प्रकृत उपयोजयति '**ततश्च**'

इति । यत एवंभूतो विशेषणमात्रस्य अपि वृत्तान्तस्ततो हेतोः कालादीनामाभासनक्रियामुखेन प्रवृत्तानां कथं प्रमातृप्रतीतेर्बहिर्भावः शङ्क्येतेत्यर्थः । आदिपदात् नियत्यादीनाम् । अत एव आगमेषु

'रागेण रञ्जितात्मासौ कालेन कलितः प्रिये ।
नियत्या यमितो भूयः पुंभावेनोपबृंहितः ॥
कलोद्वलितचैतन्यो विद्यादर्शितगोचरः ।'

इति उक्तम् । निपातावमर्शनीया नियमादयः, 'स जातः' इत्याद्यवमृश्या रागादयः संवेदनगताः सन्तः संवेद्यान् स्पृशन्तीति । **'अपृथक्सिद्धानाम्'** इति प्रमातृशक्तिरूपाणाम् । विशेष्यस्य या विशेषणक्रिया अवच्छेदलक्षणा, तस्या या प्रतीतिस्तत्र अनुपयोगिनां ततो बहिर्भूतानां सिद्धिरेव न संभाव्यते । दण्डादिबाह्यविशेषणेन वस्तुतः प्रमातृधर्मत्वमेव एषामुचितम्,—इति भावः । **'कालस्य'** इति सर्वसामान्यमपि विशिष्यत इति यावत् । मात्रपदेन सर्वप्रमातृसाधारण्यं निराकृतम् । अत एव आह **'आभासोऽपि'** इति । दूरत एव तावदवच्छेदनक्रिया, दूरे च अर्थक्रियान्तरम् । आभासनमपि दण्डवत् न कालस्य पृथक् सर्वसाधारण्येन बहिरस्ति । कुन्दचूतमल्लिकाकुटजकमलमालतीसन्तानं हि क्रमिकं पश्येत्, नतु तत्प्रतीतेर्बहिर्भूतं दण्डमिव कालं क्रमरूपम् । एतदेव श्रीपूर्वागमे स्वरूपलक्षणादाद्यात् भेदात् प्रमात्रपेक्षभेदान्तरोक्त्या दर्शितं

'शक्तिमच्छक्तिभेदेन धरातत्त्वं·········· ।
स्वरूपसहितम्············ ॥' (मा०वि० २।२)

इत्यादौ । ननु भवतु एवं कालस्य प्रमातृलग्नत्वम्, परमेश्वरस्य तु कथं तच्छक्तियोगः,—इत्याशङ्क्य आह **'विचित्र'** इति । विचित्रानाभासनानाभासोपबृंहितानाभासान् कुन्दादिमयान् यतः

परमेश्वरः करोति, ततः परमेश्वरस्य शक्तिः प्रमातृधर्मं काल-मुत्थापयति; ततः प्रमातुर्धर्मः कालः । प्रमाता हि कलितः सन् कलयिता कालेन कलित इति उक्तः । परमेश्वरस्य तु कालशक्तिः क्रियाशक्तिप्राणितरूपेति । **'प्राक्'** इति

'क्रमो भेदाश्रयः.................. ।' (२।१।४)

इत्यत्र प्रकरणे । एष एव अन्यत्र कञ्चुकवर्गे वृत्तान्तः,—इति दर्शयितुं नियतिं व्याकर्तुर्या वृत्तिः, तां विवृणोति **'कार्यकारणभावश्च'** इति । कार्यलक्षणशब्देन तद्भाव उच्यते । स च कर्तृत्वपर्यवसान इति तस्य कर्तृत्वस्य कालशक्त्या वक्ष्यमाणया दत्तस्य यो नियमो यतो नियम्यमानतापूर्वकनियन्तृत्वलक्षणात् धर्मात्, सा नियतिः प्रमातुर्धर्मः । तच्छक्तिस्तु क्रियाशक्तिशेष-रूपा भगवत एव चिदुचिता । कर्तृता चित्कर्तृता । **'तत्र'** इति नियतिविषयत्वे । कार्यकारणशब्देन तदाभासः । ततश्च अय-मर्थः—वस्तुतो भगवानेव तथा निर्भासते इतिस्थिते न बीजस्य अङ्कुरं प्रति घटं वा उपादानतापि मृद इति तुल्यमसामर्थ्यं द्वयोः, तथापि सर्वप्रमातृसाधारण्येन एवमाभाति—बीजमुपादा-नमङ्कुरस्य, न मृत्; सा तु घटस्य, न बीजम्,—इत्येवंभूतो य आभासविषये नियम्यमानतालक्षणो धर्मः, स वस्तुतः प्रमातरि एव, न प्रमेये । तत्र तु

'मात्राभासनद्वारेण.................. ।'

इति प्रमातुर्धर्मो नियतिः सर्वज्ञेन उक्ता । यदुक्तं

'नियत्या यमितो भूयः...................... ।'

इति । साधारण्यमेव दर्शयति **'तथा'** इति । अनेनैव कर्मत-त्फलनियमव्याख्याने सिद्धे पृथक् तदभिधानं संसारवृत्तान्ते तत्प्राधान्यात् । तदाह **'यश्च'** इति । वृत्तौ कर्मशब्देन चेत्

क्रिया, तदा फलं तत्कृत आत्मवर्ती संस्कारः; अथ स एव कर्मशब्देन, तदा फलं स्वर्गादीनि। उभयथा वृत्तिर्विवृता। रागं व्याचष्टे '**कर्तुः**' इति। '**मत्सरादेः**' इति अभिधर्मादौ भारतादौ च दर्शितश्चित्तवृत्तिगणो रागमूल एव। अत एव

'वीतराग.................।' (न्या०सू० ३।१।२५)

इति द्वेषोद्धर्षमत्सरादिविगमोऽपि अस्य प्रतीयत एव। ननु अवैराग्यं शैवदृशि बुद्धिधर्मत्वेन अपि वक्ष्यते, तत् किमन्येन रागेण। काणादानां तु न अन्यत् तदस्ति,—इति युक्तमिच्छाद्वेषयोरात्मगुणत्वमित्याशङ्कामपनुदति '**बुद्धिगुणश्च**' इति। '**तत्त्वान्तरतया**' इति। '**राग**' इति अनेन कञ्चुकत्वेनेति यावत्। तथाहि बुभुक्षा, पिपासा, स्त्रीसंबुभुक्षालक्षण उल्लासो यः, तदवैराग्यम्। तत्र च भवति वृद्धातुरादेरभिष्वङ्गो 'भवति एवं भूयादेतत् मम' इतिप्रतिपत्तेः। ततो रागतत्त्वं प्रधानभूतम्। तस्य तु बहिष्पर्यन्तताप्रसरणं यत्संपत्तये वृद्धातुरादीनां भैषज्यं भविष्यति, तदवैराग्यम्। धर्मादयोऽपि अभिष्वङ्गवासनाया एव पल्लवाः—इति समस्तोऽयं रागवर्गः। ते तु विशेषोल्लासात्मानो बुद्धिधर्मत्वेन गणिताः। तत एतत् सर्वमेव मायामूलत एव स्थितम्। तथाच दीक्षासमये तदन्तर्वर्तिन एव सर्वस्य शोध्यत्वं श्रीस्वच्छन्दादिशासनेषु निरूपितं मूले दग्धस्य पुनः प्ररोहाभावात्। रागनियत्यादौ तत् पल्लवितमुकुलितप्रायं, बुद्धौ पुनः फुल्लितं च फलितं च। तदेतत् सर्वमाह '**बुद्धिगुणश्च**' इत्यादिना '**विषयविशेष**' इत्यन्तेन। रागं व्याख्याय कर्तृत्वज्ञत्वात्मना विकसितस्य चैतन्यस्य भिन्नकार्यज्ञेयविषयस्य अभिव्यञ्जनाय द्वयोर्व्यापार इति सममेव कलाविद्ये निरूपयति '**शून्यादेश्च**' इति। चो धर्मिणि धर्मान्तरं समुच्चिनोति। चैत-

न्यमनिरुद्धं सततानावृतं, तत्र किमभिव्यञ्जनेनेत्याशङ्क्य सत्यमेवं परमार्थचैतन्ये, भिन्नविषयकल्पितचैतन्यचर्चा पुनरियं वर्तते इत्याशयेन आह '**चैतन्यं च**' इति । '**इह**' इति पुंस्तत्त्वे । तद्विवक्षाभावे हेतुमाह '**चिन्मयत्वात्**' इत्यादिना । '**कर्मकक्ष्याम्**' इति पारतन्त्र्येण प्रकाश्यमानताम् । '**चित्**' इत्यादि ग्राहकात् भिन्नमिति यावत् । अर्थान्तरात् ग्राह्यान्तरात् विलक्षणम्; तत एव अविभक्तमपि ग्राहकग्राह्याभ्यां विभागमापादितम्, तथाभावेऽपि '**स्वयम्**' इति स्वेन रूपेण संविन्मात्रमयतां प्रकाशमानत्वेन अनुज्झदपि नीलादि जडमुच्यते । कुतः । पदार्थान्तराणां विविक्ततया भेदेन यत् संवेदनवैचित्र्यं, तत्र असमर्थत्वात् । तत्र च हेतुः '**इदन्ता**' इत्यादिना उक्तः । अभेदप्रकाशनं तु अनस्तमितमेव शवशरीरघटादावपि,—इति न तत्कृतो लौकिकोऽयं जडाजडविभागः इति यावत् । तदाह '**ननु**' इति । ननु अनेन प्रकारेण हेतुना जडमुच्यते सम्बन्धः परस्य भिन्नस्य सतो यत् संवेदनं कर्तव्यं लोकयात्रोत्थापकं तस्य अकरणात् । न केवलं शून्यादावेवं, घटादावपि एवमित्याह '**अत एव**' इत्यादि '**पराधीनतया**' इत्यन्तम् । यदर्थमियत् विचारितं, तत् प्रकृतमनुबध्नाति '**विद्याकलाभ्याम्**' इति । सर्वशब्दो योग्यतां प्रमाणवैचित्र्येण आह, अर्थशब्दो भेदम् । ननु ते विद्याकले ज्ञत्वकर्तृत्वे व्यक्ते चेत्, वास्तवेन रूपेण अभेदात्मना व्यङ्क्ताम् । अत्र आह '**मायीयत्वात्**' इति । ननु भेदेन ते सर्वविषये स्ताम् । उच्यते '**नियति**' इति । एतानि हि कञ्चुकानि मोदकरसवदन्योन्यानुग्रहलक्षणमेलनवृत्तीनि, तत एव '**वेष्टित**' इति उक्तमागमेषु । अत एव अमीषां विचित्रेण पौर्वापर्यक्रमेण अभिधानमविरुद्धम् । तथाहि मालिनीसारे

'हृदये यः स्थितो ग्रन्थिरधऊर्ध्वनियामकः ।'

इति उपक्रम्य उक्तं

'कदलीगर्भदलवन्मोदकादिरसादिवत् ।
कदम्बगोलवच्चित्रात् क्रमात् कञ्चुकसम्भवः ॥'

इति । एतेनैव आशयेन आह **'न चात्र'** इति । इयत् तावत् प्रथते च आगमानुगृहीतं च । अधुना इदं विदन् कुर्वन् रक्तो नियमवान् यः, सोऽहमित्येवंप्राये तत्त्वग्रामे संवेदनानुसरण-निमित्तमवधानं धीधनैर्न अत्यन्तमाद्रियते । यदितु आदरोऽत्र भवेत्, तदेतद्वितानयेदिति । किं तत् । आह **'अयमेव क्रमोऽन्यथावा'** इति उल्लासस्य चित्रक्रमत्वात् । **'तत्त्वान्तराणाम्'** इति **'अधिकानां वाग्रहणात् न उपयोगो वा'** इति । अनादरे हेतुः **'निष्प्रयोजनत्वात्'** इति । कुत्र तर्हि आदरः,—इत्याह **'एतावत् तु'** इति । आदर्तव्यतायां हेतुमाह **'एतावच्च'** इति । मध्यवर्तिनस्तु प्रयोजनशून्यतां दर्शयति **'अन्यत् तु'** इति । 'अनुपयोगि' इति दूरेण सम्बन्धः । कथमनुपयोगि । आह **'इदानीम्'** इत्यादि **'एवम्'** इत्यन्तम् । **'संविदितम्'** इति सद्भावोऽनेन लक्ष्यते । ततश्च अयमर्थः—इदानीमियदस्ति, अन्यदा तु अधिकमपि स्यात् । अत एव पक्षान्तरमाह **'अवधानाभावात्'** इत्यादिना । इदानीं षष्ठविषयादि सन्निहितमपि असंवेद्यं स्यादिति शङ्क्यत इव, तदवलोकनेऽपि सप्तमादिविषयसंभावनानिवृत्तिः । तदाह **'अचिन्त्य'** इत्यादि । एतेन षट्षोडशादिभेदेन मध्यमप्रमेयगणनं वालुकागणनप्रायमशक्यं निरुपयोगं चेति दर्शयति पारतादीनां पार्थिवादिरूपविलक्षणानामपि सम्भवात् । एतदेव संवादयति **'तदुक्तम्'** इति प्रकृतं यदस्माकमभिधेयं, तत् भाति च उपपद्यते च

उपयुज्यते च; नच मध्यमप्रमेयासंवेदने तस्य सर्वोर्ध्वपदवर्तिनः काचित् खण्डनेत्याह **'इयं तु'** इत्यादि । **'तथारूपत्वम्'** इति स्वात्मा ज्ञाता कर्ता स्वतन्त्र इति । अनेन विना न किञ्चित् प्रकाशते, अन्यद्वा कल्प्यमानं दूरे तिष्ठतु,—इत्याशयेन आह **'नापीयम्'** इति । यत्र तु एतदुपयोगि, तत्र दीक्षादिविधौ सर्वमेतत् सुनिरूपितमेव ॥ ९ ॥

'.........प्रमेये व्यतिरेकिणि ।' (३।१।९)

इति उक्तम्, तत् प्रमेयं युगलकेन आह

**त्रयोविंशतिधा मेयं यत्कार्यकरणात्मकम् ।**
**तस्याविभागरूप्येकं प्रधानं मूलकारणम् ॥ १० ॥**
**त्रयोदशविधा चात्र बाह्यान्तःकरणावली ।**
**कार्यवर्गश्च दशधा स्थूलसूक्ष्मत्वभेदतः ॥ ११ ॥**

सङ्क्षेपेण स्पष्टमेतत्, प्रपञ्चस्तु विवृतावेव अस्ति,—इति पृथङ् न विमृष्टम् । प्रमेयं वचश्च शोधयितुं चोद्येन उपक्रमते **'ननु'** इत्यादिना **'भवेदिति'** इत्यन्तेन । **'अत एव'** इति यतः सामान्यलक्षणसङ्ख्याह्यतैव उचिता, तत इत्यर्थः । एतदेव व्यतिरेकेण आह **'अवास्तवे च'** इति । **'तत्तु'** इति असंवेदनीयत्वादेषाम् । एतच्च कर्मेन्द्रियविषयेऽपि सञ्चारणीयम् । करणत्वमपि अनुचितमेषामिति दर्शयति **'तथा'** इति । कालकलादयो हि प्रमातृतां पूरयन्तः प्रतिप्रमातृभिन्नस्वभावाः, क्वचित्तु नटमल्लप्रेक्षादावीश्वरेच्छया तावति एकीभवन्त एकविषयतया वा अन्यत्र रक्तोऽन्यत् नियत्या कार्यते इत्यादिस्थित्या करणांशगामिनः; तत् किमन्येन करणेनेति प्रमेयं चोदयित्वा वचनचोद्यमाह **'तथा'** इत्यादिना । **'अत्र'** इति प्रधानस्य एव परामर्शो युक्तः, नच तस्य उदितो निरावरणायोगादिति भावः । **'उक्तम्'** इति इदमपि

वचनचोद्यमेवेति आशयः। इतिश्चोद्यसमाप्तिसूचकः। '**पुनरपि**' इति विभागविभागोऽयमिति यावत्। '**भुवनाद्य**' इति आदिपदात् देहभेदादयः। '**तथात्वेन च**' इति '**करणत्वेन च**' इति करणत्वयोगिवेद्यत्वेन। '**बुद्धिपरिणामादि**' इति बुद्धेर्गन्धादिरूपपरिणामोपयोगीनि बुद्धीन्द्रियाणि, बाह्यस्य अपितु मृत्पिण्डादेर्घटादिपरिणामाय कर्मेन्द्रियाणि। एतच्च अपिपदेन आह। '**नहि**' इति। एतच्च आदिसिद्धसूत्रोक्तमेव स्मारितम्। '**इह कारणानि**' इति असंविदितस्य अपि बीजादेरङ्कुरादौ कारणता एव यतोऽनुमीयते इति, तेन वास्तवं प्राधान्यमशब्दस्पृष्टमपि आश्रित्य परामर्श इत्यर्थः। '**तावता**' इति न वास्तवं वचनवृत्त्या बाध्यते इति यावत्। एतच्च प्रौढवादित्वेन उक्तम्। एवं तु सूत्रं नेतुं शक्यमेव यत्कार्यकरणात्मकं वस्तु त्रयोविंशतिधा, यच्च तस्य मूलकारणं; तत् सर्वं प्रमेयमिति साक्षात्पदस्य व्यवच्छेद्यं दर्शयन् प्रमातरि प्रमेयतां निराकरोति '**विकल्पज्ञाने हि**' इत्यादिना। ननु एवमेव प्रधानस्य अपि असाक्षात्कार्यता अस्तु विकल्पमात्रवेद्यत्वात्, अतश्च एवं यत् कापिलैरिदमपि असंवेद्यपर्वतया एव गणितमिति यो मन्येत, तं प्रति आह '**प्रधानम्**' इति। पुनःशब्दः प्रमातुरस्य विशेषं द्योतयन् साक्षाद्वेद्यतां स्पष्टयति। अस्मदाद्यपेक्षया अपि प्रमेयतामपि आह '**अनुमान**' इत्यादिना। एतदुक्तं भवति—आत्मा विकल्पज्ञान इदमिति प्रकाशमानो मूलपरामर्शेऽहन्तात्मनि एव प्रमातृतैकपरमार्थे विश्राम्यति। एतच्च उक्तं

'नाहन्तादिपरामर्शभेदात········।' (१।५।१७)

इत्यत्र। प्रधानं तु विकल्पे निर्भासमानमपि साक्षाद्वेद्यांशैकरूपमेव इदन्तयैकरसतया भातीति परामर्शैक्यात् तदेव तत्। एतदपि उक्तं

'दूरान्तिकतया············ ।' (२।३।१०)

इत्यत्र । ननु एवं स्वकण्ठेन एव कस्मादस्य प्रमेयता न उक्ता । अत्र आह **'केवलम्'** इति । अथ एकप्रहारेण सर्वं परिहरति **'सर्वमेवच'** इति । **'अत एव'** इति यतो लोकयात्रोपयोग एव प्रधानभूतं, तत इत्यर्थः; अन्यथाहि सूत्रानुसारेण करणवर्ग आदौ निर्देश्यो भवेदिति आकूतम् । **'वर्गिप्राधान्येनापि'** इति चोद्यबीजं यत् परस्य, तदेव वस्तुतः समाधानमिति दर्शयति **'बहुवचनेन'** इति । नहि वर्गिभ्योऽपरो वर्गः कश्चिदिति यावत् । **'अथवा'** इति बहुवचनेन लोकप्रसिद्धो भावग्रामः समस्तो गृहीतो वर्गशब्देन सूत्रे स एवेति यावत् । सूक्ष्मस्य स्थूलतः प्रतिपत्तिरुत्पत्तिस्तु विपरीता,—इत्याशयेन सूत्रवृत्त्योः क्रमविपर्ययेण निर्देशः । **'महत्तत्त्वम्'** इति वाचोयुक्त्या

'प्रकृतेर्महांस्ततोऽहङ्कारो निःसत्ता सत्ता निःसदसतः
सत्तामात्रं महदभिव्यज्यते ततो महात्मी संविदः सिता ?'

इत्यादिकापिलोक्तिस्मारणेन न बुद्धेर्मनश्चक्षुर्वागादिवत् करणस्कन्धता एव, अपितु कारणस्कन्धतापि अस्ति,—इति समर्थयते । कार्यत्वस्य शब्दाकाशादिरूप एव विषयो यत्र कारणत्वं नास्ति । **'तेषाम्'** इति करणदशैकभाजां परिणतस्थूलाकाशादिधर्मतारहितानामिति यावत् । **'तथा'** इति कार्यतया । प्रकारान्तरेण अपि सैव साङ्ख्योक्तिः समर्थयते **'कार्यत्वञ्च'** इति भोक्तृभोग्यतत्करणविचारं हि करोति भोगक्रियाविश्रान्तः । **'तथा'** इति कार्यत्वेन । वृत्तिगतं क्रममुत्पत्तिनिरूपणेन समर्थयते **'कार्यं च'** इति । **'आविर्भवत्'** इति व्यज्यमानतया सत्कार्यवादमाह । **'सूक्ष्मम्'** इति न परमाणुरूपम् ,अपितु विभागरहितं परिपेलवात्मकं कार्यवर्गापेक्षया व्यापकरूपम् । स्थूलता अपि एतद्विपरीता मन्त-

व्या। मात्रपदं व्याचष्टे '**विशेषरहिता**' इति एतत् कारणरूपं परं सामान्यं मृद्रूपता इव घटादेः, सादृश्यलक्षणं तु अपरं सामान्यं घटानामिव घटत्वमिति। '**पुरस्तात्**' इति योगिनिर्माणतादिसूत्रेषु (२।४।११)। '**स च**' इति क्रमः। नियतिशक्तिमेव प्रमाणतो दर्शयति '**आगमतोऽपि**' इति अनुमानमत्र दुर्बलमिति आह। '**ननु असकृत्**' इति ननु आगमान्तरमन्यथाक्रमप्रतिपादकमपि अत्र नास्ति,—इति कुतो निश्चयः। तत्र अयमेव क्रमो नियतेरिति दुरवगममेव। अस्तु एवम्, प्रकृते तु न काचित् म्लानतेति आह '**नचासिद्धेऽपि**' इति। संवेदनस्य अनपह्नवनीयस्य यत् संवेद्यात्मत्वं, यच्च तत्संवेद्याभाससंयोजनवियोजनबहिरन्तर्भावापादनादिस्वातन्त्र्येण ईश्वरत्वं, तत् सर्वं स्वप्रकाशम्। एतत् तु मूढं प्रति उपदेशतया प्रमेयमिह प्रकृतं, तस्य न हानिः काचिदसिद्धेऽपि सत्त्वसङ्ख्याक्रमनियमादाविति सङ्गतिः। एतदुक्तं भवति—संविदः सर्वशक्तितामेव पश्यन् कृतार्थः, सर्वं तु मध्यवर्ति कियत् स्यादिति गङ्गागतसैकतकणगणनं क्व उपयोगि परयोगिनः। यदाह

'कीटसङ्ख्यापरिज्ञानं तस्य न ह्युपयुज्यते।'

इत्यादि। तन्मात्राणि उपसंहरन् महाभूतानि आसूत्रयति '**तदेवम्**' इत्यादिना। '**सन्निवेश**' इति आशयसङ्ग्रहाय। **अन्योन्यसम्पर्कं च**' इति भूतान्तरविषयम्। '**पक्षद्वयनिरूपणं वा**' इति एकैकगुणमहाभूतदर्शने हि गुणान्तरोपलम्भो भूतान्तरसम्पर्कत इति सन्निवेशत इति भूतरूपता स्थूला। एकैकगुणवृद्धतापक्षे तु परस्परसम्पर्कस्तन्मात्राणाम्, आकाशे तु सन्निवेश एव स्थौल्यापत्तिः संपर्काभावात्, चेष्टाव्यूहनक्रिया वायोः। आदिपदात् पक्तिसङ्ग्रहधृतयोऽपि तेजोम्बुधराणां वृत्तयो गृहीताः।

**'यद्वा'** इति आकाशसङ्ग्रहाय पक्षान्तरम्। एतदेव स्फुटयति **'सन्निवेशविशेष'** इति न अत्र अन्योन्यसम्पर्क इति एवकारः। शब्दपरिणामस्य उभयथा अवकाशदातृत्वं सम्भाव्यते वाचकशब्दस्य नादात्मनो विचित्रसमयसहिष्णुशाब्दवृत्तमूलानेकवर्णग्रामबीजभूतस्य यतोऽनेकवाच्याध्यासवतः सर्वावकाशदानक्षमतेति एकः प्रकारः, वाचको वा अस्तु अवाचको वा खटखटादिरपि शब्दः सर्वावकाशसहः स्पर्शसहचारितारहितो मूर्तताभावादप्रतिघातको यत इति अपरः प्रकारः। तन्निरूपयति **'नादात्मा'** इत्यादि **'यद्वा'** इत्यादि च। **'अपि'** इति पृथिव्यादीनां तावदवकाशदातृता नैव सम्भाव्यते कथञ्चित्, दृश्यमाना अपि न तेषां सा स्वभावः; अपितु तत्सहचारिण आकाशस्य एवेत्यर्थः। **'तत्त्वान्तरात्मनः'** इति पृथिव्यादिगुणस्य स्पर्शसहचारिणः प्रतिघातकृतस्तत्र आकाशे प्रवेशो यस्य न स्पर्शसहचारी स शब्द इति तस्य एव आकाशस्य एव अवकाशदातृता वृत्तिः, नतु शब्दगुणानामपि भूतान्तराणामिति तात्पर्यम्। **'स्थौल्यभाग'** इति योऽसौ सन्निवेशात्मना सुषिरस्वभावः, तदाकाशमेव; नतु तन्मात्रम्, यत्तु असन्निवेशात्मकं क्षोभमयं रूपं, स शब्दो गुण इति अभिप्रायः। **'अत एव'** इति यतः शब्दसन्निवेशरूपता तत्र अव्यभिचारिणी, ततो हेतोर्वायोराकाशमेव एको देशः स्वरूपात्मत्वेन अव्यभिचारात्। एतदेव लोकप्रसिद्ध्या प्रमाणयति **'तथा चाहुः'** इति। सर्व एवहि लौकिकालौकिकखवाय्वोरव्यभिचारमिच्छन्ति,—इत्याशयेन

'नित्यमेवाविविक्तत्वं मरुदम्बरयोरिव।' (भ०गी०९।६)

इति

'यथाकाशस्थितो नित्यं वायुः············।'

इत्यादि च नियतमिह न पठितम्। पक्षान्तरमाह '**अथवा**' इति। '**अत एव**' इति यतः शब्दभाग आकाशपदपतितः। मतान्तरेण अपि एतत् संवादयति '**तथाच**' इति। यदिहि आकाशमेव गुणान्तरस्पर्शाधिक्यात् वायुरित्येषा दिक् न भवेत्, तदा शब्दस्पर्शाभ्यां स्पर्शादेव वायोर्जन्म; एवमुत्तरेषाम्, ततः पूर्वस्य महाभूतस्य उत्तरं प्रति कथं कारणत्वं स्यादिति आशयः। ननु किमर्थं शैवसाङ्ख्यादय इत्थमाहुः। उच्यते '**अस्य क्रमस्य**' इति पृथिवीधारणायां जितायां पृथिवीमपि जलविलीनां भावयन् योगी जलमेव पश्यंस्तत्सिद्धीः प्रतिपद्यते यावदाकाशैकलीनानि शून्यैकताभाञ्जि पूर्वमहाभूतानि भावयन्नाकशसिद्धीः। दीक्षाकालेन च विशुद्धं पूर्वतत्त्वं धरामप्सु उत्तरत्र योजनीयमिति योजनासु निरूपितम्।

'येषामध्यवसायोऽस्ति न विद्यां प्रत्यशक्तितः।
सुखोपायमिदं तेषां विधानमुदितं गुरोः॥'

इति हि आगमे दीक्षायोजनं सर्वानुग्राहि युक्तम्, तत्र कारणे कार्यस्य प्रविलयो योजनं च। '**युक्तः**' इति स एव अयं बहुतरागमानुगृहीतः पक्षः इति यावत्। एनामेव पक्षद्वयशैलीं भूतान्तरेषु दर्शयति '**एवमेव**' इति। एकगुणता एव भूतानामित्येतत् संवादयति '**अत एव**' इति

'विषयवती प्रवृत्तिरुत्पन्ना स्थितिनिबन्धनी।'

इतिसूत्रभाष्यकारः पृथिव्यादिक्षेत्रेषु एकैकगन्धादिगुणसंवेदनमेव न्यरूपयत्। श्रीमतङ्गशास्त्रेऽपि

'क्षुभितात् स्पर्शतन्मात्राद्द्विगुणो व्यूहतो मरुत्।'

इत्यादिग्रन्थेन स्वभावतः एकैकगुणत्वे पूर्वभूतान्तरव्यूहनयोगात् तत् द्विगुणत्वादि निरूपितम्। '**तान्येव**' इति वृत्तिं व्याचष्टे

**'तान्येवच'** इत्यादिना **'नतु वस्त्वन्तरम्'** इत्यन्तेन । **'अप्रत्यक्षत्वात्'** इति सौक्ष्म्यात् तेषां महाभूतद्वारेण एव उपलक्षणमन्यथा मायातत्त्वमेव एकं शिवतत्त्वमेव एकमिति वस्तुवृत्तम् । ननु एवं घटादयोऽपि तत्त्वरूपतया गण्यन्ताम् । नेत्याह **'प्रत्यक्ष'** इति परत्वं प्रकृत्यन्ते, सूक्ष्मता तन्मात्रान्ते, व्यूहता धारणान्ते पूर्वपूर्वसञ्चयेन गुणाधिक्यस्य अनन्तरमेव वर्णितत्वात् । ततः परो विभवो देहघटादिः । न अत्र व्यूहनादधिकमस्ति । **'तेषाम्'** इति निर्धारणे । ननु एषां

'रूपादिषु पञ्चानाम्...................... ।' (सा०का० २८)

इति आलोचनेन्द्रियता उचिता, न बुद्धीन्द्रियतेति चोद्यं परिहरन् **'बुद्धिबोधोपयोगितया'** इत्येतदेव स्फुटयति इन्द्रियाणामध्यवसायात्मतया यतो विषयबोधो निष्पद्यते, ततो बुद्धीन्द्रियता । ननु तानि स्वालक्षण्येन आहङ्कारिकत्वसामान्येन प्रत्यगात्मनः शक्तिरूपत्वेन चेति सर्वात्मना परोक्षाणि, तत् कथमध्यवसायात्मता एषाम् । सत्यम्, अमीभिः प्रकारैरेवमेव; किन्तु स्वविषयाकारैः परिणतानि सन्ति बुद्ध्यामनुप्रविष्टानि तदाकारतां बुद्धावर्पयन्ति, तेन विषयाकारतापरिणामेन अध्यवसायमयानि भवन्ति, नतु स्वालक्षण्यादिना रूपत्रयेण । स एवच एषां लोकयात्रोपयोगी, नतु तत् । ननु च आलोचनमेव इयति मूलमिति तेन कस्मात् न व्यपदेशः । अत्र आह **'आलोचनमात्रेण'** इति बुद्ध्यध्यवसायपर्यन्ततामागच्छता । तेन बुद्धो मम अयमर्थः इति न प्रमातुर्विश्रान्तिस्तस्यां तु सत्यां सा भवतीति । एतत् स्वरूपदर्शनयोरपि संमतमित्याह **'अध्यवसायो हि'** इति **'अन्यत्रापि'** इति च । परैरपिच युक्तमेतदुपगतमिति वदन् स्वदर्शनस्य सर्वसंमततया द्रढिमानमाह **'इन्द्रियवृत्तेः'** इत्या-

दिना। मायापद एवच आलोचनं द्वारं, द्वारीणि अन्तःकरणा-नीत्यादिका प्रक्रिया, नतु विद्यापदे इति दर्शयति '**यतश्च**' इति। '**अनुगम्यते**' इति अस्माभिरपि न न अङ्गीक्रियते इति यावत्। '**सौक्ष्म्यादिक्रम**' इति घ्राणेन्द्रियं स्थूलं यावत् परमसूक्ष्मं श्रवणमिति, एवं परमसूक्ष्मं वागिन्द्रियम्। विषयाणां शब्दादीनां यथायोगं स्वरूपं निर्वर्णयन्ति घटादिकरणावसरे त्यागो ग्रहणं द्वयमिति बहिः पायुपाणिपादस्य, अन्तर्वागिन्द्रियस्य, तत्प्रक्षोभविश्रान्तिरूपस्थस्य,—इति असाधारणक्रियाणि सकलशरीरव्यापीनि केवलं नियताधिष्ठानस्पष्टस्ववृत्तिकानि कर्मेन्द्रियाणि। तेन रुग्णपाणिरपि दोर्भ्यामादत्ते इत्यादि सिद्धम्। '**एषाम्**' इति निर्धारणे। '**केचित्**' इति आहुः। '**अपरे तु**' इति प्रतिपन्नाः इति सम्बन्धः।

'तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि।' (सा०का०३५) इति यदुच्यते, तत् तावदेकरसमेव। अन्तःकरणस्य अपितु परस्परं द्वारद्वारिभावे नियतः क्रमो यथैव कालकलादीनां प्रमातृभावोपगमने यतोऽत्र अभिष्वङ्गः, ततो वेदनं, ततः करणम्; यतो वा वेदनकरणे, ततोऽत्र राग इत्यादेः प्रमातृदेशकालादिभेदनक्रमस्य विचित्रत्वात्। ननु सर्वाणि करणानि मायाकृतभेदानुसारेण बहिरिति युक्तम्, मायाप्रमात्रुपयोगादन्तरङ्गत्वेन वा अन्तरितीदं चोद्यमाशङ्क्य अन्तर्बहिष्करणताविभागं घटयितुं बुद्धिकर्मेन्द्रियाणामुक्तमपि स्वरूपं प्रत्यावर्तयति '**एषु च**' इति सर्वप्रसिद्धेष्वित्यर्थः। '**प्रमात्रन्तर**' इत्यादि समासपदम्। '**मनसि ग्राहक**' इत्यादि अहङ्कारे, '**तन्निष्ठ**' इत्यादि बुद्धौ, '**सर्व**' इत्यादि त्रितयेऽपि अन्तःकरणतायां हेतुत्वेन योज्यम्। '**अन्ये**' इति विन्ध्यवासिप्रभृतयः। ते हि अहङ्कारबुद्ध्योः

कारणस्कन्धतामेव आहुः, न करणस्कन्धताम् । स्वदर्शनस्य युक्ततामाह—इहतु द्वित्वेन उक्तमन्तःकरणं भिन्नवृत्तिवशात् योजना यतस्त्रिधा एव, अन्यथाहि एकमेव तत्त्वमिति उक्तम् । अत एव उक्तमागमे

'मनो गर्वस्तथा बुद्धिर्द्वारमेतत् सदात्मनः ।
भूतये भूतनाथेन निर्मितं करणं त्रिधा ॥'(म०तं० १८।८३)

इति । **'ज्ञानक्रिया'** इति । ज्ञानशक्तिरेव मायाप्रमातरि भिन्न-ज्ञेयविषयत्वेन सत्त्वम्, एवं क्रियाशक्तिर्भिन्नकार्यविषयत्वेन रजः, माया एव भिन्नवस्तुविमोहमयी तम इति वक्ष्यते

'स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानम्········ ।' (३।२।३)

इतिसूत्रे । अतस्तासां यो भेदोल्लासो विभिन्नज्ञेयकार्यविस्फार-विषयः, सा परा प्रकृतिर्मूलकारणम् । प्रधानत्वं प्रथमतो धीयते विश्वं सृष्टौ, यत्र च प्रलीनं सत् प्रलये । **'ननु'** इत्यादिना विभागरूपतां व्याचष्टे । सर्वतत्त्वानामादिभूता, अत एव परा प्रकृतिर्या; सा प्रधानतत्त्वमिति सम्बन्धः । अविभागात्मतां स्पष्ट-यति **'सकलभेदानभिव्यक्तिरविभागरूपता'** इति । नतु सा तुच्छं प्रसज्यप्रतिषेधमात्रमित्याह **'मूलकारणरूपे वस्तुनि'** इति तेन तद्वस्तुस्वभावभूतं तदविभागात्मकत्वमेकत्वं व्याचष्टे । एकत्वं च अस्याः सर्वत्र । अत एव सकलभेदानां हि अविभागः सा । ततश्च कथमसावन्यान्यरूपा भवेदेकया एव समस्तभेदग्रासीकारात् । ननु प्रधानं सत्त्वादि अविभागरूपं, सत्त्वादीनां च भवता शक्तित्वं न सहिष्यते

'भेदस्थितेः शक्तिमतः········ ।' (४।१।५)

इतिसूत्रार्थनिर्णये; पतञ्जलिप्रभृतयस्तु अत्र शक्तित्वेन व्यपदेशं कुर्वन्ति, तत् कस्मात् मतभेदः इतीदृशि चोद्ये । प्रतिसमाधत्ते

**'सत्त्वरजस्तमोरूपत्वेऽपि'** इति । भेदस्थित्यभिप्रायेण अस्माभिः शङ्किता निषिद्धा, नतु वास्तवेन वृत्तेन । यत् वक्ष्यते

'.............पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये.................. ॥' (४।१।४)

इत्यादि, तत्त्वागूर्य मायाशक्तिव्यपदेशो युक्त एव पातञ्जलादौ

'दृग्दर्शनशक्त्योरेकात्मता एव ।' (यो०सू० २।६)

इति हि सूत्रं

'प्रधानशक्तिः पुरुषस्य............ ।'

इत्यादि च भाष्यम् । एकत्वे प्रकारान्तरमाह **'परमेश्वर'** इत्यादि । तेन मूलपृथक्त्ववादो न अङ्गीकृत एव इह । इहहि शैवैर्मायातत्त्वमुपादानकारणं निर्दिष्टं, तदेव परप्रकृतिरूपेण उक्तम्; माया तु परमेश्वरशक्तिरुक्ता । अत एव पार्थिवाण्डानामिव प्राकृताण्डानां यदसंख्यत्वमुक्तं

'पृथग्द्वयमसंख्यातम्............ ।' (मा०वि०२।५०)

इति, तत्र गुणतत्त्ववैचित्र्यभेदो जीवितम्, मायातत्त्वं शक्तिश्चेति तु एकमेवेति न तत्र अण्डविभाग आगमेषु दर्शितः । तदुक्तं

'पृथग्द्वयमसङ्ख्यातमेकमेकं पृथग्द्वयम् ।' (मा०वि० २।५०)

इति । अत्र च प्रतिपुंस्तत्त्वं न भेदोस्ति,—इति अभिदधता तदधरवर्तिनां तत्त्वानां सोऽस्ति,—इति सूचितम् । ननु अत्र किं प्रमाणमित्याह **'एष च'** इति । एष तत्त्वक्रमोऽनुमानेन अपि प्रत्यक्षपूर्वकेण अन्वयव्यतिरेकिणा व्यतिरेकिणा वा साधयितुं शक्यते । ननु अनुमानेन प्रतिबन्धो दुरवधार इति उक्तम् । सत्यम्, किन्तु परमेश्वरनियतिशक्तिमुपजीवता स्ववधार एव असौ । सा तर्हि तादृशी कुतो ज्ञाता । उच्यते, परमेश्वरशास्त्र-

प्रामाण्येन उपपादितः संपादितो नियतिशक्तिव्यापारं प्रति विषयभावो यस्य तत्त्वक्रमस्य, स तथाभूतः । एतदुक्तं भवति—पारमेश्वरस्य तावदागमस्य अखण्डितप्रामाण्यमुपपादितं पूर्वम्, स च नियतिमेवंभूतां दर्शयति—यदुत स्थूलमवश्यं सूक्ष्मपूर्वकं, क्रिया करणपूर्विका, अविभागपूर्वको विभाग इति । तत्र प्रतिबन्धात् सिद्धादखण्ड्यते ? पारमेश्वरागमद्वारेण अपि आभासितस्य तथैव वस्तुत्वेन धारणादीक्षादिफलानामाभासत एव सिद्धः । ननु उच्यतां तर्हि पारमेश्वरागमोक्तो विस्तर इत्याशङ्क्य आह 'इह' इति । अस्माभिस्तु आगमग्रन्थनिष्ठे वार्तिकभाष्यवृत्तिग्रन्थे श्रीतन्त्रालोकादौ प्रपञ्चो न्यक्षेण दर्शितः । इयत्तु इह तात्पर्यम्—धराद्याभासा एव मिश्रीभूय घटादिस्वलक्षणीभूताः कर्मेन्द्रियैर्जनिताश्च उपसर्पिताश्च, बुद्धीन्द्रियैरालोचिताः, अन्तःकरणेन सङ्कल्पनाभिमनननिश्चयनपर्यन्ततां नीताः, अशुद्धविद्याविवेचिताः, कलादिभिः प्रमातारमुपदधद्भिरनुरञ्जिताः, मायाप्रमातरि विश्रान्तिद्वारेण अभिन्ना अपि सन्तो

'यद्यप्यर्थस्थितिः········· ।' (अ०प्र०सि० २०)

इतिन्यायेन सत्यप्रमातरि एव भेदविगलनतारतम्येन विगलितस्वकभेदाः प्रकाशविमर्शपरमार्थतया एव विश्राम्यन्तीति शिवम् ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामागमाधिकारे

तत्त्वविमर्शः प्रथमः ॥ १ ॥

## अथ द्वितीयो विमर्शः ।

औषधमाधिव्याधिषु पाशत्रयशातनं त्रिशूलकरम् ।
वन्देऽहममृतमूर्तिं पूर्णत्रिकशक्तिपरमार्थम् ॥

एवं प्रमेयतया तत्त्वराशौ निर्णीते तदनन्तरं प्रमातृतत्त्वं निर्णीतमपि इह स्वात्मनि ईश्वरताप्रत्यभिज्ञापनप्रकृतप्रमेयसारे शास्त्रे प्राधान्येन वितत्य निर्णयार्हम्,—इति तदर्थं विमर्शान्तरं

'तत्रैतन्मातृता............... ।'

इत्यादिना

'.......व्यानो विश्वात्मकः परः ॥'

इत्यन्तेन श्लोकविंशकेन आरभ्यते । तत्र श्लोकेन ब्रह्मादित्रय-स्वरूपं; ततो द्वयेन हेयोपादेयप्रमातृरूपविभागः; ततस्तदुप-योगितया मलस्वरूपं, तत्कृतं च प्रमातृवैचित्र्यं सप्तभिः; इयता हेयरूपे प्रमातुरुक्ते तदुपादेयरूपाभिधानाय समावेशस्वरूपं द्वाभ्यां;ततः प्रसङ्गात् प्रमातुरवस्थानां सुषुप्तादीनां स्वरूपं पञ्चभिः; तासामेव हेयोपादेयताविभागस्त्रिभिः,—इति प्रकरणतात्पर्यम् । अथ प्रत्येकं सूत्रार्थो निरूप्यते

**तत्रैतन्मातृतामात्रस्थितौ रुद्रोऽधिदैवतम् ।**
**भिन्नप्रमेयप्रसरे ब्रह्मविष्णू व्यवस्थितौ ॥ १ ॥**

'**तत्र**' इति एवंभूतेऽस्मिन्नागमसिद्धे संवेदनयुक्त्युपबृंहिते मातृमेयात्मनि तत्त्ववर्गे निर्णीयमाने प्रस्तुते यदेतत् कालादि-कञ्चुकपरिवेष्टितं, तदेव यस्यां शुद्धमुपसंहृतप्रमेयतया प्रमेयान्त-र्मुखं भवति दशायां; तस्यामधिष्ठाता तदभिसंपादनद्वारेण स्वो-पासकवर्गस्य तद्दशादानेन तदवस्थाध्यानसमापन्नस्य स्वाभिमुख्य-संपादनेन च भगवान् परमशिव एव ईश्वरतां भजमानः सन् रुद्रत्वेन अधिष्ठाता । तत एव असौ मायापदेऽपि प्राणापाना-

३९

त्मकधर्माधर्मसूर्येन्दुदिननिशामृतकसूतकादिविभागविरहिततद्वि-भागनिबन्धनभूतमध्यमज्योतीरूपप्रमातृभागाधिकस्वरूपसंस्पर्शा-दुन्मीलिततृतीयनेत्रः, भिन्नस्य तु प्रमेयस्य प्रसरे संपादनेऽधिष्ठाता ब्रह्मा, प्रसृते तु तस्मिंस्तत्सन्तानप्रवहणलक्षणे प्रसरेऽधिष्ठाता विष्णुः । अत एव एतौ प्रमेयमेव इदमिति प्रकाशात्मना प्रधानी-कुर्वाणौ, अहमिति प्रमातृतासारस्वरूपं न्यक्कुर्वाणौ न तृतीय-नयनयोगिनौ, देवतैव दैवतमधिष्ठातृरूपं दैवतमधिदैवतम्,—इति सूत्रार्थः । तमवतारयति **'विश्वेश्वरस्य'** इत्यादिना । विश्वेश्वरस्य ब्रह्मादिरूपैरविशुद्धेन एव स्वरूपेण तानि कथमुन्मीलन्ति । आह बुद्धिगुणत्वेन, नतु शुद्धसंविन्मात्ररूपतया । अत एव आधार-त्वेन स्थितं यदैश्वर्यं कर्तृतालक्षणं स्वातन्त्र्यं क्रियाशक्तिपर्यन्तं ज्ञानं, तत् तेषां रूपम् । तर्हि द्वित्वं कुत इत्याह **'सत्त्व'** इति य एव अङ्गिभूतो गुणः, तद्विषयमेव तदैश्वर्यं ज्ञानरूपमिति भेदः । **'शून्ये पुर्यष्टकात्मतात्यन्तसूक्ष्मदेह एववा'** इति वृत्तिं व्याचक्षाणो मात्रपदं सौत्रं व्याकरोति **'यद्यपि'** इत्यादिना । मूर्त्या आकारेण, कालविशेषेण च शरीरिवत् नियतेन पारिमित्यभाजा योऽवच्छेदस्तद्रहितः; सामान्यकालयोगस्तु तस्य अपि अस्त्येव । यदिवा मूर्तिद्वारा यः कालभेदो नियतः कालः । पुर्यष्टकस्य देहता अस्त्येव महाभूतैः समन्वयादिति तदपि इह न वचनीयमिति मोहव्यपोहनाय शङ्कोद्भावनार्थं देहग्रहणम् । उपादानार्हताभिधानाय अत्यन्तसूक्ष्मग्रहणं न स्थूलदेहस्य अपि उपचरितं पुंस्त्वमस्तीति आह । ननु शून्यं तमोगुणात्मकमिति प्रधानतत्त्वमेव तत्, तत् किमनेन भाषान्तरेण । अत्र आह **'सत्त्वादि'** इति प्रधानेऽन्तर्भवति, नतु तदेव तदिति यावत् । **'तथाप्रतीतेः'** इति अहमितिप्रमातृताध्यारोपेण । एतदेव परि-

घटयति आशङ्कामपनयन् '**अद्यापिच**' इत्यादिना । '**एवम्**' इति युक्तमुक्तं यत् वस्तु तत् तस्मात् हेतोर्यद्यपि तुल्यत्वं सूक्ष्मासूक्ष्मशरीरयोः, तथापि न मातापितृजनस्य मुख्यपुंस्तत्त्वतेति सम्बन्धः । '**तदभेदेनैव**' इति पुर्यष्टकाभेदेन । पूर्वपूर्वरूपावेशेन हि उत्तरोत्तरस्य तथाभाव इति उक्तम् । ननु रूपादिमयत्वं पुर्यष्टकेऽपि अस्त्येव,—इत्याशङ्क्य आह '**प्रमेयानवभासाच्च**' इति । नहि तत्रत्यं रूपादि प्रतिभासते । तत्सङ्कोचोपहितं हि संवेदनमेव तत्प्रमातृभावेन निर्भाति, न तद्गतप्रमेयभूतं रूपादि; शरीरे तु तदेव प्रमात्रीक्रियमाणं गौरोऽहमितिप्रतीतेः । ननु पुर्यष्टकशून्ययोरपि सर्वज्ञान् प्रति अवभासमानतया प्रमेयत्वमस्ति एवेति पुनरपि कथं तयोः प्रमातृमात्रतेत्याशङ्क्य पक्षान्तरेण उपक्रमते '**अथवा**' इति तयोरस्तु प्रमेयता, ताभ्यां तु अन्यत् प्रमीयते घटादि बाह्यशरीरेण असम्पर्के भोगसंपादकत्वायोगात् । '**अत एव**' इति यतोऽन्यत् न प्रमीयते ताभ्यां, ततः । '**परमेश्वरस्य**' इति स एवहि स्वातन्त्र्यात् तथा भातीति अभिहितमसकृत् । '**उभयरूपा**' इति सवेद्या, अन्या च । आणवसंज्ञो योऽज्ञानात्मा मायाकृत एव मलविशेषः, यत् वक्ष्यते

'.........मायाशक्त्यैव तत्त्रयम् ।' ( ३।२।५ )

इति; तस्य अतिस्फुटतां संवेदनभागे कुर्वन् बुद्धौ तमोगुणमुद्रेचयति भिन्नाभासयोगं संहरति भगवान् रुद्रः । अधिष्ठातृतामेव स्पष्टयति '**तस्य**' इत्यादिना । '**अत्र च**' इति सर्वसंहारात्मनि प्रमातृमात्रे । '**स एव**' इति भगवान् रुद्रः । ननु समस्तवेद्यक्षयश्चेत् वृत्तः, तदेव परमपदमिति का खलु अन्या तुर्यदशा सुषुप्तातिरिक्ता स्यादिति । अत आह '**तत्र च**' इति क्षीणेऽपि

वेद्यान्तरे वेदकतत्त्वस्य सर्वोत्तीर्णसर्वमयसर्वेश्वरतादिधर्मभाजनस्य अद्यापि वेद्य एव शून्यादौ समुपहितसंवित्सङ्कोचयोगात् परमार्थप्रकाशो नास्तीति तत्प्रकाशसारायास्तुर्यदशाया युक्तमेव वैलक्षण्यम् । ननु भावनाः पुर्यष्टकभावे शून्यस्य भावयितुर्भावात् भवन्तु, शून्ये तु भावे कोऽसौ भेदभावनाप्रधानो भावयिता अन्यो भवेत्; संविद्रूपापेक्षया च न भाव्यस्य भेदोऽस्ति । अत्र उच्यते '**शून्ये च**' इति समकालमेव यदा शिखरस्थसंवेदनदिशा उभयमपि वाग्रहणात् शरीरघटाद्यपिवा व्यतिरिक्तं भावयति, तदा तन्मध्यानुप्रविष्टभावनीयशून्यान्तरापेक्षया यत् शून्यान्तरमिति उक्तं, तदेव प्रमातृतामेति; नच अनवस्था संवित्तत्त्वावेशेन एव

'यद्यप्यर्थस्थितिः...................... ।' (अ०प्र०सि०२०)

इति

'अपि त्वात्मबलस्पर्शात्.....................॥' (स्प०का०८)

इति च नीत्या प्रमातृतोद्गमात् । तदाह '**समर्थितम्**' इति । एवं सूत्रार्धं व्याख्याय शेषं व्याचष्टे '**जागर**' इत्यादिना अर्धम् । सूत्रे य एवमर्थः प्रसरशब्दः, स आभासपदेन वृत्तौ विवृतः इति सङ्गतिः । सामस्त्येन देवताद्वयं व्याख्याय विभागेन स्फुटयति '**जागरं च**' इत्यादिना । '**हृदयाब्जगतत्वादेव कमलासनः पलायति**' इति व्याचष्टे न केवलं तत्रैव प्रथमक्षणे स भावावभासोऽस्ति,—इत्येतावत्, अपितु स्मृत्यवस्थामपि स्वप्नावस्थामपि प्रतिपद्यते,—इत्येवंभूतमनुवर्तनं कुर्वाणः पालक उच्यते भगवान् विष्णुर्मध्यमावैखर्यात्मकानुवर्तनोल्लासपदे परमेश्वरात् प्रभृति पशुप्रमातृपर्यन्तप्रमातृवर्गे कण्ठभूमौ वर्तमानः । हृदये हि प्रथमपश्यन्तीप्रसरात्मनि प्रतिभारूपत्वेन

प्राथमकल्पिकी सृष्टिः

'यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्........।' (स्प०का० ३३)

इतिस्थित्या । रुद्रावस्था तु समस्तवादोपसंहाररूपानाहतपरवाक्तत्त्वानुप्रवेशप्रारम्भभुवि तालुनि सर्वोपसंहारात्मकसुषुप्तलक्षणेऽपि कण्ठदेशेऽपि निरूपिते तदूर्ध्वपदगामित्वादेव लभ्यत इति **'तालुनि'** इति न उक्तं विवृतिकृता । तत एव ब्रह्महृदयो विष्णुकण्ठो रुद्रतालुरीश्वरभ्रूमध्यः सदाशिवोर्ध्वब्रह्मरन्ध्रोऽनाश्रितात्मकशक्तिसोपानोपरिपदः कारणषट्कविग्रहः परमेश्वरः इति हृदयादिस्वरूपाभिधानेन सूचित आगमिकोऽर्थः

'प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥'

इत्याशयेन आशङ्कते **'यद्यपि'** इति । **'यदा'** इति यतः, **'तदा'** इति ततः; यदिवा यदा संस्कारवतः स्वप्नः, तदा स्थितिरूपता; स्वातन्त्र्येन तु स्वप्ने जागररूपतैव सा

'तथा स्वप्नेऽप्यभीष्टार्थान् प्रणयस्यानतिक्रमात् ।' (स्प०का० ३४)

इतिनीत्येति यदातदाभ्यामुक्तमभिनवं तावदर्थावभासनं स्थपतिकुम्भकारादिभिर्गृहकुम्भादीनामवभासने स्फुरति एव, तत्सामान्यात् पुनस्तस्यैव दर्शनमित्येवंभूतविशेषानपेक्षा जागर्यां या सृष्टिरूपता । ननु एवं स्वप्नेऽपि अस्ति,—इति पक्षान्तरेण परिहरति **'यदिवा'** इति अभेदबुद्धेः सर्वे वयमेकं विद्मः इत्यस्याः, भेदबुद्धेर्वा पूर्वसृष्टिवैलक्षण्यप्रतीतेरास्पदं पूर्वं प्रमात्रन्तरैक्येन असाववभातः । **'तथारूपता'** इति सृष्टिरूपता जाग्रदवस्थाया इति पूर्वेण सम्बन्धः । **'बुद्धिगुण एव'** इति एवकारेण शुद्धैश्वर्यस्पर्शोऽपि तयोर्नास्ति, रुद्रभट्टारकस्य तु शुद्धमैश्वर्यं ज्ञानं च

स्पृशत एव बुद्धिगुणाभ्यामैश्वर्यज्ञानाभ्यां योगः इति दर्शयति । तदेतत् स्फुटेन आगमिकेन अभिज्ञानेन दर्शयति **'अत एव'** इति । प्रपञ्चविगलने यदीशनमैश्वर्यं, ततः किल बुद्धिगुणस्य ऐश्वर्यस्य प्रत्यस्तमयः सत एव न्यक्करणं, नतु अत्यन्तमभावः

'तस्मिन्............................ ।' (स्प०का० १५)

इति,

'तदा तस्मिन् महाव्योम्नि................ ।' (स्प०का० २५)

इति च । एषां मध्यमे महाव्योम्नि एकघनतासमापत्त्यभावेऽपि अनुप्रवेशमात्रमस्ति,—इति तृतीयेन नेत्रेण उदानमहातेजःप्रबोधात् भेददहनात्मना योगः ॥ १ ॥

अस्यैव मातृतामात्रस्य विभागं निरूपयन् कालादितत्त्वान्तरयोगोऽवश्योपगम्य इति सूत्रेण निरूपयति

**एष प्रमाता मायान्धः संसारी कर्मबन्धनः ।**
**विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥ २ ॥**

मायाविमोहितः, अत एव कर्माणि बन्धकत्वेन अभिमन्यमानः, एष इति कालकलादिवेष्टितः शून्यपुर्यष्टकसङ्कुचितसंवित्स्वभावः, संसरणशीलः, विद्यया तु स्वरूपप्रकाशनशक्त्या प्रत्यभिज्ञाप्रापितमैश्वर्यं विशुद्धं स्वातन्त्र्यं यस्य, अत एव चित् यस्य घना निबिडा अचिद्रूपानुप्रवेशशङ्काशून्या, स पुनर्जन्मबन्धविरहात् सत्यपि देहे मुक्तः, पतिते तु अस्मिन् शिव एव, को मुक्तः; भूतपूर्वगत्या तु मुक्तशिवः इति व्यवहार आगमेषु,—इति सूत्रार्थः । तं सङ्क्षिप्य आह **'इदानीम्'** इति । **'तत'** इति अन्यथाहि संविद्रूपत्वे तस्य प्रत्युत शक्तिर्माया, नतु तदधीनोऽसौ येन तस्याः स इत्युच्येतेतिभावः । **'वक्ष्यते'** इति

'देवादीनां च........................ ।' (३।२।१०)

इति उपक्रम्य

'तत्रापि कार्ममेवैकम्············ ।' ( ३।२।१० )

इतिसूत्रे । **'स एवच'** इति यस्यैव बन्धः, तस्यैव मुक्तत्व-मुचितमिति यावत् । आदिग्रहणात् ज्ञानचर्याभक्त्यादयः । यथा उक्तं श्रीसर्ववीरमते

'कदाचिद्भक्तियोगेन कर्मणा दीक्षयापिवा ।
संसारिणोऽनुगृह्णाति··················· ॥'

इति । श्रीमतङ्गेऽपि

'···············मोक्षो वाथ चतुष्टयात् ।'

इति । ननु आत्मतत्त्वं प्रत्युत हेयमागमेषु उक्तं

'ते त्वात्मोपासकाः शैवे न गच्छन्ति परमं पदम् ।' (ने०तं०८।४)

इति शक्तिशिवात्मताया उपादेयत्वेन उक्तत्वादिति शङ्कित्वा आह **'आत्मन'** इति षष्ठीसमासोऽयं वृत्तावित्यर्थः । **'ऐश्वर्य-शब्द'** इति सौत्रः । ननु चिद्घनत्वं कथमनेन विवृतं भवती-त्याशङ्क्य आह **'चिन्मात्र'** इत्यादि । **'सदा'** इति बन्धापेक्षा च मुक्ततेति आकूतशेषः ॥ २ ॥

अस्यैव प्रमातुरागमिकं संज्ञाभेदं निर्वचनतो निरूपयति

**स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।**
**मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः ॥ ३ ॥**

योऽसौ मुक्त उक्तः, स भावान् स्वाङ्गवत् प्रमिमीते इति तेषां स्वामी परमार्थरूपार्पणाच्च पालयिता । तदयमीश्वररूपतासमाविष्ट इति ईश्वरवदेव पतिरुक्तः शास्त्रे । यदातु मायाशक्त्या कृत-भेदांस्तान् मिमीते, तत एव क्लेशैरविद्यादिभिः कर्मभिः शुभा-शुभैरादिपदात् वासनाभिः कर्मविपाकरूपैश्च भोगैरुक्तकञ्चुक-प्रपञ्चितैः कलुषोऽपहस्तितैकरसस्वातन्त्र्यः; तदा तैरेव पाशैः

पाशितत्वात् पशुरुक्तः । **'तदा'** इति शिवतायां, पाल्यमपेक्षणीयं यत् पतित्वे, तत् न अस्ति व्यतिरिक्तमित्यर्थः । ननु **'मायातो भेदिषु'** इति सौत्रं न स्पृष्टं वृत्तौ, अन्यदेवतु उक्तं **'पुंस्त्वावस्थायाम्'** इति । सौत्रमेव इत्थमुक्तमिति दर्शयति **'तदाच'** इत्यादिना **'पुंस्त्वावस्थयैव'** इत्यन्तेन । अथ किमनया भणितिचित्रतयेति चेत्, आह **'प्राधानिक'** इति **'पुंस्त्वावस्थयैव'** इति काकाक्षिवत्, तेन तया एव उक्तया अन्यदुपगम्यं प्रधानादागतं तत्र च भवं विश्वमित्येवं तावत् पारमेश्वरे दर्शने परमेश्वरशक्तेरेव तथाभावोपगमादुपगतम् । यानि अपि दर्शनान्तराणि कापिलवैष्णवादीनि, तैरनक्षरारूढमपि बलादभ्युपगन्तव्यमस्मदुक्तं रागकलाविद्यानियतिकालाद्याधिक्यम् । **'ईश्वरादीश्वर'** इति यदुक्तं, तदेव स्पष्टयति **'अविद्या'** इत्यादिना । ननु अनीश्वरोऽस्तु ईश्वरविपरीतः, पुमांस्तु तथा कुतः । आह **'स एवच पुमान्'** इति । ननु च क्लेशकर्मविपाकाशयैर्युक्तोऽस्तु पुमान्, तत्र क्लेशमध्येऽविद्या मोहनीत्वेन वेदननिषेधरूपतया आत्मानं विश्वमात्मत्वेन अनीक्षयन्ती माया अस्मितया च अनात्मानमात्मतया ईक्षयन्ती कामं स्वीकृता, रागादित्रयेण च रागः, नियत्यादयस्तु कथं सङ्गृहीताः । आह **'नियत्या'** इति नियतिर्यतः कर्मणो मूलभूमिः । कार्यकारणभावो हि ततः, तन्मूलं च कर्मवासनाविपाकत्रयम्, ततस्तयापि युक्तः । रागेण च उपलक्षिते विद्याकले । यदेवहि रागास्पदं, तदेव कलाविद्ययोर्विषयो विपर्ययो वा, ततस्ताभ्यां युक्तः । कर्म च क्रियारूपं, क्रिया च क्रमलक्षणकालानुप्राणितेति कर्मणा अङ्गीकृतेन कालोऽपि अङ्गीकृत इति तेनापि युक्त इति तेषां रसनानारूढमपि अस्ति हृदये । तत् दर्शयति **'अवचनम्'** इति अस्माभिस्तु परमेश्वरदर्शनानु-

गृहीतैः स्पष्टमेव सर्वं निरूपितम् । प्रमातुर्हि शुद्धाशुद्धस्वरूपं वितत्य वक्तव्यमध्यात्मविद्यासु अस्यैव अर्थस्य मुख्यत्वेन विस्तारणार्हत्वात् ॥ ३ ॥

पशुस्वरूपं वितत्य निरूपयितुं सूत्रान्तरमिति सङ्गतिं टीकाकारः स्वयमेव करोति '**पशोः**' इति । '**पारमेश्वर**' इति, अन्ये तु असम्यगेतद्रूपविदः, तत एतेषां न सम्यक् मुक्तिरिति शिक्षित्वा तु स्वप्रक्रियायां तावदारोपणे परमार्थत इदमेव मुक्तिकारणम्, अङ्गीकृतं च एतत् सद्भिरिति आशयः । तत एव आगमः;
'ते त्वात्मोपासकाः शैवे न गच्छन्ति परमं पदम् ।' (ने०त०८।४)
इति सप्तमीतृतीयाभ्यां व्याख्यातः । '**विभक्तम्**' इति लक्षणतो विषयतश्च प्रकटयिष्यतेऽनेन प्रकारेण मलत्रयम् । तत्र प्रथमत आणवमाह सूत्रेण

**स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।**
**द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥ ४ ॥**

'स्वतन्त्रो बोध' इत्येतत् तत्त्वम् । तत्र भागान्तरहान्या स्वरूपापहारात् मलमणुतां सङ्कोचमादधानमाणवं द्विधा । ननु वृत्तौ मले व्याख्येये निर्मलस्वरूपाभिधानं किमेतत् । एतदित्याह '**शुद्धस्वभावस्य**' इति । मलं हि अन्येन विजातीयेन योगः कज्जलांशः स्वधायाः, तदंशोऽपि कज्जलस्येति एकजातीयमेकघनं रूपं यत् निर्मलं विशुद्धं, तत् पूर्वं वाच्यमित्यर्थः । '**सामान्येन**' इति अनवभातपूर्णत्वस्वतन्त्रत्वादिधर्मग्रामस्यापीत्यर्थः । द्वितीयग्रहणेन तच्छक्तिरूपता एव मायाप्रधानादेरित्याह '**पृथक्**' इति । यथाक्रमं मन्त्रेशरूपतया ये भविनो विज्ञानाकलास्ते एवमुदिताः, मन्त्रेशास्तु स्वतन्त्रा एव । '**दर्शनात्**' इति आगमादिप्रमाणकादितिभावः । ननु विज्ञानाकलादेरहन्तात्मकचमत्कार-

लक्षणकर्तृतारूपस्वातन्त्र्यवियोगिनोऽपि बोधमात्रं तावत् रूपमिति पशुलक्षणे यदज्ञत्वमुक्तं

'पशुर्नित्यो ह्यमूर्तोऽज्ञः.................... ।'

इति, तत् नास्ति,—इति कथमणुत्वमाणवमलप्रयुक्तं च तद्-वश्यंभावि,—इत्याशङ्क्य आह **'स्वातन्त्र्य'** इत्यादि । ज्ञत्वं हि तत्र व्यतिरिक्तवेदकात्मकं निषिद्धं यत् कलाविद्यारूपतत्त्वान्तर-प्रसादात् सकलस्य उदितमुच्यते, तत् च विज्ञानाकलस्य नैव अस्ति । स्वात्मनि अपि वेदकत्वं पृथग्भूततया न उपपद्यते, अपृथग्भावेन भवदपि अहमितिचमत्कारात्मनो विमर्शस्य तिरो-धानादसतो न विशिष्यते । तदेतदाह **'स्वात्मनि'** इति । बोधकत्वं भिन्नं बोध्यमपेक्ष्य, न स्वात्मनि । भिन्नं च बोध्य-मस्य न उपपद्यते, न सम्भवति । तेन अज्ञता एव, नतु ज्ञत्व-मिति सङ्गतिः । **'तदेव'** इति उक्तं वस्तु यदाणवत्वे प्रयोजकं सूत्रे च आणववाचोयुक्त्या अङ्गीकृतम्, तत् वृत्तौ मात्रपदेन स्फुटीकृतम् । ननु व्यतिरिक्ते वेद्ये वेदकता कामं मात्रपदेन निरा-कृता, अव्यतिरिक्ते तु सा केन निराकृता ईश्वरस्य इवेति शङ्कि-तमाह **'मात्रग्रहणेन'** इति । चकारोऽत्र अपेक्ष्यः । मात्रग्र-हणेन हि विश्वात्मतां तथैवच प्रथां निरस्यता भिन्नवेद्यवेदकत्वं निरसितुं शक्यम् । तस्य हि सा पूर्वभाविनी निर्विकल्पदशा यस्यामैश्वरो भावः इति उक्तं प्राक् । **'अथ स्वातन्त्र्यस्याप्य-बोधता'** इत्यंशं विवृणोति **'बोधनिराकृतस्य तु'** इति । **'स्थितैव'** इति अत्र अज्ञत्वं न यदि असाध्यमिति अणुलक्षणं स्फुटमेव अस्ति । शून्यादिर्हि वेद्यत्वेन स्फुरति उपाधिभावात्, संविदंशोऽपि वेद्यच्छायाच्छुरित एव । **'द्विविधफलम्'** इति विज्ञानाकलादयो देवादयश्च फलमस्येति क्रमेण वक्ष्यते । मूल-

मलता च अपि अज्ञप्तौ ग्राहकस्य प्राधान्यात् तद्भावस्य च एत-दधीनत्वात्, सृष्टियोगे तु मायाख्यस्य मूलत्वमुक्तमिति अवि-रोधः । ननु बोधमात्रस्य स्वातन्त्र्यमात्रस्य च यत् निर्माणमुक्तं, तेन अनित्यत्वमापतितमिति पशुलक्षणे यत् नित्यत्वं मूर्धाभिषि-क्तमुक्तं, तत् त्यक्तं स्यात् । नेति दर्शयति **'बोधमात्रं च'** इत्यादिना **'नित्य एवासौ'** इत्यन्तेन । **'स्वतन्त्रबोधस्य'** इति स्वातन्त्र्यांशेन बोधरूपस्य, नतु संवेदनांशेन ज्ञेयत्वस्य असंवि-द्रूपत्वेदन्तात्मनोऽनपहस्तनात् । **'न क्वचित्'** इति अनारोपित-स्वातन्त्र्येऽपि घटादौ चिद्रूपता सन्निहिता प्रकाशैकसारत्वात्, सा कथमारोपितस्वातन्त्र्येण भविष्यति । तदाह **'विशेषण'** इति । ननु एवं घटेऽपि यदि चिद्रूपतां कश्चित् पश्येत्, तर्हि किमभ्रान्त एव असौ । औमित्याह **'जडस्य तु'** इति । **'युक्त एव'** इति उचित एवेत्यर्थः । शक्त्या शुद्धविद्यारूपया हि अयं सम्यगिति जडरूपतान्यक्क्रियया चिद्रूपताप्राधान्येन आवेशः आ समन्तात् स्वरूपप्रवेशः इत्यर्थः । यदाह

'तृणात् पर्णात्······················ ।'

इति । उद्गमनं हि अचिद्रूपताया न्यक्कारः ।

'अष्टमूर्ते किमेकस्याम्············ ।'

इत्यत्र तु स एव तोषः । ननु अनात्मनि जड आत्मत्वेन अभि-मननं विपर्यायाख्यातिरूपा इयमविद्या,—इति साङ्ख्ययोगादीनां मतमनित्याशुचिदुःखानामात्मस्थित्यादिवचनात्, तत् कथमुक्तं-युक्त एव असौ,—इत्याशङ्क्य आह **'अत एव'** इति । यत एव-मुक्तं, ततः साङ्ख्यीयमयुक्तमेव बोद्धव्यमित्यर्थः । प्रकृतिपुरुषा-विवेके हि प्रकृतावेव पुरुषाभिमानः संमतः । ननु अभावमात्रं मोक्षावस्थायामपि तद्भावने संसरणप्रसङ्गात् । एतदेव न्यायेन

घटयति '**नहि**' इति। अनात्मनि यदि न सन्निहितः स्यादात्मा, तत् तत्र तदभिमननं मिथ्याज्ञानं भवेत्; नतु गृहे सन्निहित-माकाशमध्यवस्यन् भ्रान्तो भवति। ननु साङ्ख्यैर्न इदमुक्तमित्याह '**अथ**' इति एतद्विषयस्य आत्मानात्मलक्षणस्य प्रकाशनं, तच्च न तैर्बन्धत्वेन उक्तम्; अपितु अनात्मैव आत्मतया भातीति। एतदपि दूषयति '**केयम्**' इति। प्रकाशप्रतिभासनं यदि तदा, तर्हि तथैव तद्वस्तु,—इति न अपरमस्य तत्त्वमिति का भ्रान्तता। अथ तथाप्रकाशनाभावेऽपि तथाध्यवसाय इति भ्रान्तता। एतदपि दूषयति आक्षिपन् '**ननु**' इति। '**प्राप्तः**' इति उचितः। '**पुरुषसम्बन्धी**' इति पुरुषविषयतया उचितः। '**तन्न**' इति सङ्क्षेपोक्तिं स्पष्टयति '**आत्मनि**' इत्यादिना '**अयुक्तः**' इत्य-न्तेन। अकारप्रश्लेषमकृत्वैव एकवाक्यत्वेन नेयं '**न युक्त**' इति। तदिति च निपातोऽत्र पक्षे वक्तव्योपक्षेपद्योतकः। अह-मित्यवसायः साङ्ख्यदृशि प्रत्युत अनात्मनि एव बुद्ध्यहङ्कारमये समुचितः, नतु आत्मनि चिन्मात्रस्वभावे। '**एवं तु एतत्**' इति परमेश्वरेण हि साङ्ख्यानां तावदेव उपदिष्टमपूर्णम्, इदं तु पूर्णं ज्ञानमितिभावः। '**स्वकः**' इति अकृत्रिमः, तत एव उचितः। '**तच्च**' इति वाक्यार्थरूपम्। '**तैः**' इति साङ्ख्यैः। यत् प्रमेयप्रसङ्गेन इदमायातं, तदेव उपसंहारेण निर्वाहयति '**अस्माकं तु**' इति। '**एवम्**' इति

'अहंप्रत्यवमर्शो यः················।' (१।६।१)

इत्यादिप्रदेशेषु। यतोऽहमितिविमर्शमयत्वमात्मन उपपादितम्, तदेव कर्तृत्वमुक्तं

'विमर्श एव देवस्य····················।' (१।८।११)

इत्यादिप्रदेशेषु; ततः कर्तृत्वं व्यतिरिक्ते कार्ये न उपपद्यते तादृ-

शस्य कार्यकारणभावस्य वितत्य दूषितत्वात् । एवंच कार्यरूपं जगत् पुरुषमयमेव । यत् श्रुतिः 'पुरुष एवेदं सर्वम्' इति । '**जगति**' इति '**समग्र**' इति च वदन्नेकक एव देहादौ घटादिवैलक्षण्येन तथाभिमानो विप्लव एवेति दर्शयति । तत एव हि तत्र तत्र उक्तं

'……………द्विगुणोऽयं विप्लवः ।'

इति । '**तत्र**' इति जगति । '**प्रत्युत**' इति निपातसमुदायः परस्य अत्र वैपरीत्येन अयुक्तोऽभिनिवेशोऽयमिति द्योतयति । '**मूलबन्ध**' इति सति तस्मिंस्तत एव अनात्मीकृतात् वर्गादेकदेशे शरीरादावनात्मनि एव अनपह्स्तितज्ञेयभावेऽहमित्यात्माभिमानरूपोऽस्तु पाश्चात्त्यो बन्धो यदभिप्रायेण द्विगुणविप्लवोत्थापकत्वं मायाशक्तेरिति ॥ ४ ॥

मलद्वयलक्षणाय यत् सूत्रं, तदवतारयति '**इदानीम्**' इत्यादिना

**भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम् ।**
**कर्तर्यबोधे कार्मं तु मायाशक्त्यैव तत् त्रयम् ॥ ५ ॥**

'**एतदाणव**' इत्यादिपदेन '**अत्रैव**' इति व्याचष्टे । मन्त्रेश्वराणामपि आणवं मलं वक्ष्यते

'बोधानामपि……………।' (३।२।९)

इतिसूत्रे टीकायाम् । तेन तत्रैव सति मलान्तरयोगः । द्विप्रकारे सति आणवे मले वृत्ते स्वरूपसङ्कोचे भिन्नस्य यत् प्रथनं, तत् मायाख्यं मायया आख्या यस्य, तत् मायीयं मलं संज्ञामात्रेणेति, मायाकृतत्वं तु मलत्रयस्य अपि,—इति अत्रैव श्लोके तुर्यपादेन उक्तम् । तत्र अबोधरूपस्य कर्तुर्देहादेर्भिन्नवेद्यप्रथायां सत्यामहेतुषु अपि जडेषु कर्मसु निमित्तावग्रहात्मा विपर्ययः । जन्मनस्तु नियतावध्याक्षिप्तस्य आयुषो भोगस्य च सुखदुःखादेः कारणभूतं कार्मं मलम् । माया नाम शक्तिः परमेशस्य, सा अशु-

द्धविद्याशक्तिमणोर्व्यनक्ति। ततोऽणुरन्तर्बहिरिन्द्रियाणि अधिष्ठाय भिन्नं वेद्यं जानाति। तदा अयमणुर्मायाख्येन मलेन मलिन इति उच्यते। '**अतोऽपि**' इति न केवलं पूर्वो विपर्ययो य आणवमलात्मा उक्तः, यावदयमपीत्यर्थः। '**तत्र**' इति पारमेश्वरागमेषु। कथं सूचितमित्याह '**त्रयमपि**' इति। '**अस्य**' इति आख्याग्रहणस्य। युक्तश्च अत्र विशेषतो मायया व्यपदेश इति दर्शयति '**द्वैत**' इत्यादि। '**तत्र**' इति मायाख्ये। तत एव उत्पत्तिक्रमेण मूलमूलत्वमस्य एव संविदात्मकज्ञप्त्यपेक्षत्वादाणवमलस्य। अत एव

'वेद्यीकरणमर्थानां मलो मायाख्य उच्यते।
मूलमन्यस्त्वहम्भावो वेद्येष्वप्याणवो मलः॥'

इत्यत्र गुरुभिर्मूलमिति काकाक्षिवदपेक्ष्यमिति व्याख्यातम्। एतदेव स्पष्टयति '**द्वैतदर्शने च**' इति। '**मुक्ताणूनाम्**' इति संसारितोत्तीर्णानां मन्त्रमहेशादीनामित्यर्थः। एवं '**सम्भवेत्**' इत्यन्तेन मुख्यतया मायाख्यमेव व्याख्यातम्, तद्रूपविस्पष्टीकरणप्रसङ्गात् तु मलद्वयमन्यत् निरूपितम्; अधुना तु कार्मं विवृणोति '**कर्मपराधीनत्वम्**' इति। तच्च कर्ममलताया आस्पदं यतो विपर्याससामान्येन तस्य असत्यत्वम्। विपर्याससामान्यं तदिति कुतः। आह '**स्वातन्त्र्य**' इति प्रमातुः स्वातन्त्र्यरूपा क्रियाशक्तिरेव कर्म, सैवतु यत एनं परतन्त्रीकरोति नियतिशक्त्या येन विचित्रफलभागी अयमनिच्छुरपि जायते; ततो विपर्यासतेत्यर्थः। '**प्राक्**' इति कार्यकारणभावविमर्शे। '**वक्ष्यते**' इति देवादिसूत्रे (३।२।१०)। विज्ञानेन बोधमात्ररूपत्वेन अकलाः कलोपलक्षिताशुद्धविद्यारागादियोगाभावात् भोगशून्या इत्यर्थः। तुर्यं पादं व्याचष्टे '**तदेतत्**' इत्यादिना समासपदेन॥ ५॥

अथ एषां मलानां विविक्तविषयप्रदर्शनेन रूपं स्फुटयितुं

'स्वातन्त्र्यहानिर्बोधस्य············ ।' (३।२।४)

इत्यमुष्य अंशस्य विषयमाह

**शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता ।**
**निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥ ६ ॥**

ये संविन्मात्रपरमार्था अपि अहमितिस्वात्मविश्रान्तिलक्षण-स्वातन्त्र्यपरमार्थानन्दचमत्कारतिरोधानयोगात् न उत्तमाः कर्तारः, ते भर्त्रा परमेश्वरेण अप्रतिहतपरिपुष्टस्वातन्त्र्येण तथा बुभूषुणा स्वात्मनः सकाशात् घटादिवदेव भिन्ना निर्मिता येन मन्त्रमहेश्वरादीनां भेदेन भान्ति । परमेश्वरात् भेदे हेतुः **'कर्तृतात्ययात्'** इति परमेश्वरस्य च उत्तमस्वातन्त्र्यमयत्वादिति आकूतशेषः । अशुद्ध्यंशस्य कस्यचिदपगम एव तावदत्र शुद्धत्वमशुद्धिघनतानिवृत्त्यवतरणरूपमिति व्याचष्टे **'बोध'** इत्यादिना । **'अनेन'** इति वेद्यानुपरक्तशब्देन । कैवल्यं केवलता । **'उपाध्ययोगः'** इति एष एव परमार्थापवर्गः साङ्ख्यादीनामिति कैवल्यपदेन पिशुनयति । सौत्रीं पञ्चमीं हेतौ व्याचष्टे **'तदेतत्'** इत्यादिना । ननु ईश्वरनिर्माणं किमिति तत्र अपेक्ष्यते । आह **'ईश्वरनिर्मितिम्'** इति । **'स्वातन्त्र्य'** इत्यादि बहुव्रीहिः । **'अत एव'** इति यतो दुर्घटमपि एतत् मुख्यस्वभावावियोजनाभासमुत्थापयति, ततः स्वातन्त्र्यमयत्वमेव; नतु कथञ्चिदपि अस्वतन्त्रता कुत्रचिदपि अप्रतीघातादिच्छायाः । ननु स्वात्मनैव भगवानस्वातन्त्र्येण अपि भाति,—इत्येवंविधं चेदस्य उत्तमं स्वातन्त्र्यं, तर्हि भगवत्स्वरूपात् ते भिन्ना इति कथम् । एतत् परिहरति **'तेनैवच'** इति भगवता भिन्नशब्दे समासवर्तिनि । एतदेव स्फुटयति **'नहि'** इति । स हि स्वतन्त्रत्वेन भाति,—

इत्यस्यां वाचोयुक्तौ यत् तथाभाने स्वतन्त्रं रूपं, तदङ्गीकृतमेवेति अस्वतन्त्रं ततो भिन्नमेव आभातीति आयातम् । ननु एवमस्वतन्त्रो भगवान् स्वातन्त्र्यं जह्यादेव । नेत्याह **'सचापि'** इति । स्वातन्त्र्यहानिरेवं स्यात्, यदि पर एनमेवं कुर्यात्; नच एवम् । तदाह **'स्वयम्'** इति । ननु वस्तुतस्ते विज्ञानाकलादयः परमेश्वरादभिन्ना एव, ततः कस्य तत् स्वातन्त्र्यमुच्यताम्; किं भगवत एव, उत तेषामपि,—इत्याशङ्क्य आह **'साङ्ख्यपुरुषादयस्तु'** इति यो हि तथाबुभूषुर्न प्रतिहन्यते, स स्वतन्त्रः । एतच्च भगवत एव अस्ति तस्य एव सर्वपूर्णत्वेन

'स्वामिनः··················।' (१।५।१०)

इत्युक्तनयेन बुभूषालक्षणया इच्छया योगात् । **'तथा'** इति अत्र तु भागे ये वर्तन्ते, घटादिवत् ते । तदेतदाह **'भूतादि'** इति । आदिपदात् भुवनतत्त्वभावादिग्रहणम् । **'ते'** इति साङ्ख्यपुरुषादयः । ननु न तावदेते परमेश्वरप्रमातृतापेक्षया भेदेन भान्ति घटादिवदेव, नच अस्मान् प्रति ते प्रकाशन्ते; तत् किमपेक्षया ते भिद्यन्तामित्याशङ्क्य आह **'मन्त्रेश्वराद्यपेक्षया'** इति । ते हि तान् स्वतोऽन्योन्यतो ग्राहकवर्गात् च भेदेन पश्यन्ति । यद्यपि अस्मदादिप्रमातॄणामपि ते आगमप्रामाणिकतया भेदेन स्फुरन्ति, तथापि साक्षात्कारमूलत्वे सति आगमावभातस्य बहिः सर्वसाधारणाभासनिष्ठता; अन्यथातु स्वतन्त्रविकल्पाभासवदसाधारणता एव, न बाह्यत्वम्,—इत्याशयेन **'मन्त्रेश्वराद्यपेक्षया'** इति उक्तम् । तदेव आह **'तदागमसिद्ध'** इति । एवं सति आगमसिद्धास्ते भवन्ति, न अन्यथेति यावत् ॥ ६ ॥

ननु उक्तात् हेतोरस्तु विज्ञानाकलानां परमेश्वरात् भेदः, अन्योन्यतस्तु कथं बोधात्मत्वेन स्वरूपभेदस्य अभावात् देशका-

लभेदस्य च बोधस्वभावं प्रति अभेदकत्वात् । तत् कथं ते इति बहुत्वेन एषां निर्देश इति चोद्यं परिहर्तुं सूत्रं

बोधादिलक्षणैक्येऽपि तेषामन्योन्यभिन्नता ।
तथेश्वरेच्छाभेदेन ते च विज्ञानकेवलाः ॥ ७ ॥

बोधरूपता नित्यत्वं विभुत्वमित्यादि लक्षणं यद्यपि एषां न भिन्नं, तथापि ईश्वरेच्छा यतस्तथा भिद्यते—नित्यव्यापकबोधमात्ररूपो हि अहं भेदेन निर्भासे—इति; ततस्तेषां युक्त एव अन्योन्यं भेदो ग्राह्येभ्यो ग्राहकान्तरेभ्यश्च । ते च शास्त्रे विज्ञानमात्रं कर्तृताशून्यं मायीयभेदावभासशून्यं च एषां स्वभाव इत्येवं विज्ञानाकला इति उक्ताः । नच वाच्यं यदि ईश्वरेच्छा बोधमात्राणि अपि भेदवन्ति करोति, तर्हि बोधस्य एव प्रमातृत्वं भिन्ने घटादिवर्गे सर्वदा निरूप्यताम्; किं शून्यादिदेहान्तान्तरालप्रमात्रन्तरकल्पनेनेति यत उक्तमसकृदवभासमानमनपह्नवनीयमिति । अवभाति च कृशोऽहं क्षुधितोऽहं सुखितोऽहं सर्वोत्तीर्णोऽहमिति देहप्राणादेः प्रमातृभाव इति सूत्रार्थमवतारयति **'अचिन्त्य'** इत्यादिना । भेदश्चेत्, कथं बोधादिरूपता; सा चेत्, कथं भेदः इति भेदे परस्परं बोधादिलक्षणैक्ये च पर्यनुयोगो नैव कार्यः । आदिपदेन सौत्रेण नित्यत्वव्यापित्वादेः सङ्ग्रह इति व्याख्यास्यंस्तदुपयोगि निरूपयति **'बोधात्मनाम्'** इत्यादि । **'ननु'** इति तथानिर्माणे हि कथं नित्यतादि भवेत् । अन्योन्यभेदाभासमात्रमेव निर्माणं, नतु अधिकं तदुपरि नीलाद्याभासान्तर इव येन नीलादेरिव अनित्यता भवेत् । प्रकृत उपयोजयति **'बोधस्य'** इति । चकारेण प्रमेयं समुच्चिन्वन्नयत्नसिद्धतामस्य अर्थस्य आह । ऐश्वर्यं हि संविदः पूर्णं रूपमिति तदनाभासोऽशुद्धिरेव । तदाह **'नतु शुद्ध'** इति । साम्यं दर्शयति **'तैश्च'** इति चो हेतौ ।

**'निषिद्ध'** इति अहङ्कारवृत्तित्वेन तदभ्युपगमात् । **'अस्य'** इति पुरुषस्य । **'उक्तम्'** इति तैः साङ्ख्यैरिति सम्बन्धः । ननु सूत्रवृत्तिगतं रूपं विद्येशानामपि अस्ति,—इति विशेषः कुतः । आह **'तेषाम्'** इति **'किञ्चित्स्वतन्त्राणाम्'** इति परापररूपस्वातन्त्र्यांशानुगृहीतापरस्वातन्त्र्ययुक्तानामिति यावत् । अनागतावेक्षणलक्षणेन पूर्वापरपर्यालोचनेन तन्त्रयुक्तितो विशेषलाभः इति तात्पर्यम् । ननु तज्जातीयत्वे तुल्ये प्रायपदेन उपमानता कथमुच्येतेत्याशङ्क्य आह **'लोकप्रसिद्धेः'** इति मायीयलोकोत्तरं पारमेश्वरं शासनं यतो पूर्वं लोकस्य, तत्र हि सम्यगागमिते संवेदने परापरसिद्धिलाभः, असम्यगपि गाणपत्यवैचित्र्यं; ननु कथञ्चिदपि पश्वात्मकता । ततस्तस्मिन् व्युत्पिपादयिषिते मायीयप्रसिद्धेन व्युत्पादनीय इति प्रसिद्धत्वात् दृष्टान्तीकरणं तज्जातीयस्य अपि यथा अयं गौर्मदीयदान्तप्राय एवेति । शास्त्रमिह पारमेश्वरमेव । इदानीं तज्जातीयतां निवारयन् सादृश्यमेव स्फुटयति **'साङ्ख्यैश्च'** इति । **'अमी तु'** इति विज्ञानकेवलत्वं मायीयाध्वोत्तरणमात्रादेव परयोजनिकाशून्यात् दीक्षाविशेषात् गीताद्युक्तकार्मबन्धवन्ध्यकेवलपुरुषस्वरूपभावनाबलात् तदन्ताध्वधारणाध्यानसमाधिबलात् च लभ्यते इति । तल्लाभश्च भोगविशेष एव । तत एव उक्तं

> 'यो यत्राभिलषेद्भोगान् स तत्रैव नियोजितः ।
> सिद्धिभाङ्मन्त्रसामर्थ्यात्............ ॥'

इत्यादि । ततः साङ्ख्यैः पुरुषैर्यत् सादृश्यं, तदात्यन्तिकं तज्जातीयतापर्यन्तं न भवति,—इति प्रायिकं सादृश्यं युक्तम् ॥ ७ ॥

एवं

'स्वातन्त्र्यहानिर्बोधस्य............ ।' ( ३।२।४ )

इत्यमुं भागं विज्ञानाकलेषु उक्त्वा

'............स्वातन्त्र्यस्याप्यबोधता ।' ( ३।२।४ )

इत्यस्य विषयमाह सूत्रेण

**शून्याद्यबोधरूपास्तु कर्तारः प्रलयाकलाः ।**
**तेषां कार्मो मलोऽप्यस्ति मायीयस्तु विकल्पितः ॥८॥**

एतदवतारयति सङ्गतिं कुर्वन् **'एवम्'** इत्यादिना । **'एक'** इति एकराशिरणूनामिति यावत् । **'बोधात्मत्वात्'** इति बोधस्य यतोऽयमहंविमर्श आत्मा सारभूतस्ततस्तत्र आरोपिते स्वभाविनोऽपि आरोपो जात एव । एतदेवच युक्तमिति अभ्युच्चयहेतुमाह **'व्यतिरिक्त'** इति व्यतिरिक्तो बोधात् बाह्यो यावदहंविमर्शस्य विषयस्तावत् स स्वयमप्रकाशमानः कथमहमिति विमृश्यते । स्वप्रकाशविमर्शो हि अयम्, ततः स्वप्रकाशतया अपि आरोपितया भवितव्यमेव । एतत् परिहरति **'तथापि'** इति स्वप्रकाशता काममारोपिता वास्तवी एव, न असौ प्रतिप्रसूता इव तथापितु अपहस्तितस्वभावैव वर्तते सा परप्रकाशत्वस्य इदमितिवेद्यतारूपस्य तादवस्थ्यात् । तदाह **'बोधतातिरस्कारेण'** इति बोधता यतस्तिरस्कृता तत एवं वृत्तावुक्तं सौत्रमबोधपदं व्याख्यातुम्, अहन्ता तु शुद्धस्वातन्त्र्यरूपा आरोप्यमाणा स्फुटैव व्यतिरिक्तत्वस्य विच्छिन्नतालक्षणस्य भुङ्क्ते–करोतीत्येवंरूपस्य पारतन्त्र्यस्य च परानुग्रहादेवंकरोमीत्येवंलक्षणस्य स्वातन्त्र्यविरुद्धस्य अनवभासात् । तत्त्वज्ञानावतरसम्पत्तये हि यत्नत एवंभूतोऽवभास उत्थाप्यमानोऽपि न उत्तिष्ठति, ततोऽहमित्यंशे या स्वप्रकाशता; सा विरुद्धपरप्रकाश्यतात्मकवेद्यतापहस्तितस्वरूपेति अबोधता उक्ता । या तु अविच्छिन्नता स्वतन्त्रता च तत्रैव अंशे, सा तद्विरुद्धविच्छन्नत्वपरतन्त्रतावभासनेन अन्य-

कृतेति कर्तृता उक्ता शून्यादेः । प्रलयाकलार्थव्याख्यानबलादेव **'तेषाम्'** इत्यादिसूत्रार्थो व्याख्यानार्ह इत्याशयेन आह **'प्रलय'** इत्यादि । सर्गोत्थापकः संस्कारः सर्गसंस्कारः । **'वक्ष्यमाण-न्याये‍न'** इति

'सवेद्यमपवेद्यं च············ ।' ( ३।२।१५ )

इत्यत्र । व्यवस्थितविकल्पश्च अयम् । तथाहि केचन शून्याद्यंश-सङ्कुचितसंविन्मया अपवेद्यसुषुप्तपदभाजः, अन्ये बुद्ध्यादिभागा-वरुद्धचिन्मयाः सुखादिशेषसामान्यवेद्ययोगात् सवेद्यसुषुप्तपद-जुषः; स्थूलकार्यकरणवियोगात्मकत्वं तु प्रलयाकललक्षणमेषामेक-मेवेति ॥ ८ ॥

एवं

'·········स्वातन्त्र्यस्याप्यबोधता ।' ( ३।२।४ )

इत्येतदंशविषयाभिधानप्रसङ्गात् कार्ममलस्य अपि विषयो दर्शितः, मायामलस्य अपि पाक्षिकः; अधुना आणवकार्मद्वयाभावेऽपि मायाख्यमलस्य केवलोऽस्ति विषय इति निरूप्यते सूत्रेण

**बोधानामपि कर्तृत्वजुषां कार्ममलक्षतौ ।**
**भिन्नवेद्यजुषां मायामलो विद्येश्वराश्च ते ॥ ९ ॥**

ये चिन्मात्रमेव आत्मतया अहमितिचमत्कारवन्तं पश्यन्ति तत एव अप्रतिहतज्ञानक्रियास्तत एव आणवमलवियोगिनः कर्मसंस्कारविकलाश्च संसारोत्तीर्णत्वात्, ते व्यतिरिक्तं वेद्यं कार्यं च पश्यन्तो द्वैतदर्शनाङ्गीकृतेश्वरतुल्या मायाख्यमलयुक्ता विद्या-मन्त्रेश्वरादय इति सूत्रार्थः । तमवतारयति **'स्वातन्त्र्य'** इत्या-दिना । कर्तृताया भेदो वैचित्र्यमुत्तमकर्तृत्वात् वैलक्षण्यम् । **'प्रकारान्तरम्'** इति प्रलयाकलगतत्वेन विकल्पनमुक्तः प्रकारः, ततो योऽन्यस्तमाहेत्यर्थः । प्रलयाकलात् सकलात् च **'निय-**

**त्यादि**' इत्यनेन उक्त्वा '**कर्तृता**' इत्यादिना विज्ञानाकलात् भेद उक्तः । बोधयोगेन विद्यास्पर्शः, कर्तृतया च ईश्वरतेति '**विद्येश्वरत्वेऽपि**' इत्यत्र वृत्तिवाक्ये दर्शितम् । '**तेन**' इति मायाख्यमलेन, यतो वेद्यादपृथग्भूतरूपता सदाशिवेश्वरोचिता तिरोहिता पृथग्भावेन एव अवभासिता, तत इत्यर्थः । पूर्णता अत्र परावतापि ? । '**पूर्ववत्**' इति वृत्तिं व्याचष्टे '**ईश्वराच्च**' इति चकारात् भगवतोऽपि । '**अत**' इति विवृणोति '**पूर्ण**' इत्यादिना प्रतीकेन । अपिशब्दस्य भिन्नक्रमतां दर्शयन्नसंभाव्यमेषां तावदणुत्वम्, तत्तु न्यायबलायातं भवेदपि,—इत्येतत् द्योतयति ॥ ९ ॥

अथ मलत्रयस्य यौगपद्येन विषयं वक्तुं सूत्रं

**देवादीनां च सर्वेषां भविनां त्रिविधं मलम् ।**
**तत्रापि कार्ममेवैकं मुख्यं संसारकारणम् ॥ १० ॥**

सङ्क्षेपेण सूत्रार्थः स्पष्टः, विततस्तु टीकायामेव उक्तः । '**संसारकारणम्**' इति सामग्रीरूपतया त्रीणि अपि मलानि संसारहेतवः, अन्वयव्यतिरेकवशेन तु मुख्यता कार्मस्येत्यर्थः । '**विचित्रकार्यकरणा**' इति देहेन्द्रियरूपशक्तिवैचित्र्यादेव चतुर्दशविधो भूतसर्गः '**चतुर्दश**' इति स्पष्टयति । '**तत्र**' इति '**त्रिविधम्**' इति योजयति । '**एषाम्**' इति चतुर्दशानामपि मुख्यत्वं व्याचष्टे '**विद्येश्वर**' इत्यादिना । कार्ममलस्य अभावे सति एव दत्तोऽसंसरणसोपानपदबन्धः, अत एव कार्ममलस्य निराकरणमेव साङ्ख्ययोगपुराणभारतश्रुत्यन्तादौ यत्नेन उपदिश्यते । '**व्यतिरेक**' इति कार्मो मलस्ताभ्यां व्यतिरिक्तस्तदनामिश्रो न दृष्टः, नापि स्वकार्यं तौ व्यभिचर्य अप्रयोजकीकृत्य करोति तत्कार्यस्य अपि दर्शनात् । '**अथवा**' इति स एव अर्थो

भङ्ग्यन्तरेण उक्तः । मुख्यतोक्तौ किं मूलम् । आह **'कार्म'** इति तेनैव एकेन संसाराख्येन प्रयोजकेन प्रयुक्ते ते मले न भवतः, संसारोत्तीर्णेन अपि विज्ञानाकलमन्त्रेश्वरादिलक्षणेन प्रयुक्तत्वं तयोरस्तीति **'दीक्षादिना'** इति पूर्वकृतकर्मवल्ल्याः शोषणमपराधिरोहणविरोधिकर्मप्रशमनमपरं भवति

'नहि दीक्षासमं किञ्चित्............... ।'

इति श्रीललितायाम् । श्रीमद्गुरुभिरपि उक्तं

'कृतमपि फलाय न स्याद्दीक्षोपयूषरोप्तबीजमिव ।
बलवद्विशेषशास्त्रव्यतिकरजातं विहायैकम् ।।'

इति तथा

'अव्याहतस्य भगवन्.............. ।'

इत्यादि । वशीकरणादि वा यथा मन्त्राः कुर्वते । नच तत्र रागद्वेषविदानरूपाद्यपसारणं ? तेन विना अपि रोगविरुद्धस्य इव भेषजत्वात् तथा रागाज्ञानाद्यवाच्छन्दता ? अपि मन्त्रेण बन्धशक्तिरपसार्यते, ततो

'दोषाः स्वबीजसन्ताना दीक्षितेऽप्यनिवारिताः ।'

इति अबाधकम् । एवं त्रिभिस्त्रिभिरेकद्विकभेदैरेकेन च त्रिकभेदेन सप्त प्रमातृविकल्पाः, तेषामपि विकल्पसमुच्चयाङ्गाङ्गितादिना असङ्ख्यो भेद इति सूत्रितम् ।। १० ।।

मलत्रययौगपद्यलक्षितभवितात्मकसकलावस्थाया एव उद्भवतिरोभावभेदेन द्वैधं प्रकटयितुमुद्भूततां तावदाह सूत्रेण

**कलोद्बलितमेतच्च चित्तत्त्वं कर्तृतामयम् ।**
**अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ।। ११ ।।**

देवादीनां यत् कर्तृतांशप्राधान्येन मलापहस्तितबोधरूपतया स्वातन्त्र्यात्मकं चितस्तत्त्वं कलाशक्त्या भगवत उद्बलितं मलेन

न्यक्कृतमपि समुद्गतबलं कृतं शून्यादेर्देहान्तस्य सम्बन्धि, तद्-प्रधानत्वेन स्थितं यस्मात् मितमिदन्तापतितदेहादिप्रमेयनिमग्नत्वेन प्रमेयं च सङ्कुचितं च। यो गौरो, यः सुखी, यः पिपासितो, यः सर्वाकारशून्यः; सोऽहमिति हि इदन्ता एव इयमहन्ताविशेषणी-भावेन भविनां स्फुरति, इयं सा जाग्रदादित्रयमयी संसारदशा,—इति सूत्रार्थः । अस्य अवतारणमाह **'संसारिण एव'** इति सकलस्य । **'आत्मानात्मनोरहमिदंभागयोरुपक्रमते'** इति अनात्मप्राधान्यं तावदाहेति यावत् । **'प्रसङ्ख्यानवतः'** इति समाहितमनसः । **'जडस्य'** इति लौकिकस्य । **'यदिवा'** इति वैशेषिकात्मकल्पम् । ते हि गुणभूतान् धर्मरूपान् रागादीन् समवेतान् नित्यव्यापकस्वभावस्य आत्मन इच्छन्ति । निर्मेयस्य अपि भिन्नत्वं प्रकरणादशब्दस्पृष्टमपि मन्तव्यम् । शिष्टमत्र स्पष्टम् ॥ ११ ॥

एवमुद्भवमुक्त्वा न्यग्भूततामाह सूत्रेण

**मुख्यत्वं कर्तृतायाश्च बोधस्य च चिदात्मनः ।**
**शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम् ॥ १२ ॥**

यदा पुनः कर्तृताया मुख्यत्वं, तन्नान्तरीयक एवच शून्या-देर्मेयतांशस्य गुणीभावस्तत्र च अचिद्रूपे गुणीभूते

'..................स्वातन्त्र्यस्याप्यबोधता ।' ( ३।२।४ )

इति यो मलव्यापारोऽभूत् तस्य अपहस्तनात् बोधस्य अपि चिदात्मनश्चिद्रूपतायां प्रधानस्वभावस्य मुख्यत्वम्, तदा एतद्-ज्ञानरूपमलप्रतिद्वन्द्वितया समावेशलक्षणं सत्यस्वरूपे सम्यगा-समन्तात् प्रवेशलक्षणं ज्ञानं यल्लाभेन ज्ञानी, यदभ्यासेन च देह-प्राणादावनन्तसंविद्धर्मात्मकविभवसमासादनात् योगी भवति । एतदुक्तं भवति—यदा अहंभावः स्वातन्त्र्यदिशैव व्यापित्वनित्य-

त्वादिपरामर्शबलात् शून्यादेः प्रमेयीकृतादुन्मज्ज्य इव आस्ते, तदा तुर्यातीतता; तदापिच शून्यादिसंस्कारोऽपि अस्ति,—इति अन्य-तिरेकतुर्यातीतसमता एव । यदातु परामृष्टनित्यत्वव्यापित्वादि-धर्मकैश्वर्यघनात्मना अहम्भावसिद्धरसेन शून्यादिदेहधात्वन्तं विध्यते येन प्रमेयत्वात् तत् च्यवत इव, तदा तुर्यदशा; यदापि विद्धोऽसौ प्राणदेहादिधातुः संविद्रसेन अभिनिविष्टोऽत्यन्तं कनक-धातुरिव जीर्णः क्रियते येन स द्रुतरस इव आभाति केवलं तत्संस्कारः, तदापि तुर्यातीतदशा सा भवति । सा इयं द्वयी अपि दशा समावेशो यल्लाभाय अन्यदुपदिश्यते । यत् गीतं

'मय्यावेश्य मनो ये................ ।' ( १२।२ )

इति उपक्रम्य

'अथावेशयितुं चित्तम्............. ।' ( १२।९ )

इति । तस्यैवच पल्लवभूताः परमेश्वरस्तुतिप्रणामध्यानपूजादयः । तेषां हि प्रह्वीभावः स्वात्मगुणीकरणं परमेश्वररूपप्रधानतापादनं तत्त्वम्

'अभ्यासेऽप्यसमर्थः सन् मत्कर्मपरमो भव ।'

( गी० १२।१० )

इत्यादि, देहपाते तु एकघना एव शिवतेति तदा समावेशादि-व्यवहारो न कश्चिदिति सूत्रस्य पिण्डार्थः । तमवतारयति **'तस्यैव'** इति । सूत्रवृत्त्योः साम्यं करोति **'पूर्वसूत्र'** इत्यादिना । पूर्वसूत्रे तावत् कर्तृत्वमुक्तं तदेव देहानुसृतं केवलं, तस्य पूर्वं गुणता उक्ता; अत्र तु प्रतिपक्षभूता प्रधानता तत्र अस्तीति षष्ठ्या सूत्रे यदुक्तम्, तत् वृत्तौ प्रथमानिर्देशेन निर्दिष्टस्य अपि शून्यादेः पश्चाद्गुणताप्रदर्शनेन विवृतं; नतु साक्षात् । नहि कर्तृत्वस्य प्राधा-न्यमिति वृत्तिरस्ति । ननु शून्यादेः पश्चाद्गुणीकरणं चेत्

'प्राक् क्षालनाद्धि पङ्कस्य··············· ।'

इतिनीत्या किं पूर्वं प्रथमानिर्देशेन प्राधान्यं ख्याप्यते । आह **'विचार्यमाणता'** इति तत् तावदिह प्रकृतं विचारणीयमिति प्रधानं मुख्यता। **'गुणता'** इति तत्पृष्ठे विचारस्य शरीरमित्यर्थः। ननु स्पष्टमेव कर्तृत्वस्य प्राधान्यं वृत्तौ किं न दर्शितम्, किमनया भङ्ग्या । आह **'कर्तृत्व'** इति कर्तृताया मुख्यत्वे शून्यादेरवश्यं गुणता, तस्य तु मुख्यत्वे तस्या इति अनया वृत्त्या प्रतिपादिते तुलानत्युन्नतिन्यायो लभ्यते । एषा हि वृत्तिरवश्यं सूत्रार्थमनुसरन्ती कर्तव्येति योजनायामेवंभूतो न्यायः प्रतीयते । किमनेन प्रतीतेनेति चेत्, उच्यते **'इतरथा'** इति । यदि एष न्यायो न प्रतीयेत, तदा पूर्वसूत्रे

'कलोद्वलितम्····················· ।' (३।२।११)

इत्यत्र शून्यादेर्गुणत्वे प्रतिसम्बन्धित्वनिर्देशेन प्रधानत्वं यदर्थापन्नं, तत् वृत्तौ न प्रकटीकृतं भवेत्; अनेन तु न्यायेन दर्शितेन प्रकटीकृतमेव भवति । पूर्वसूत्रे वृत्तौ कर्तृत्वस्य उपसर्जनत्वं तावत् कण्ठेन उक्तम्, तन्नान्तरीयकत्वेन च शून्यादेः प्राधान्यावगमः इतिन्यायात् प्रधानत्वं यत् शून्यादेर्वक्तव्यं पूर्वसूत्रे, तदर्थापन्नम् । गुणत्वं तु यत् वक्तव्यं, तदिह सूत्रे स्वकण्ठेन उक्तमिति तुशब्दो विशेषद्योतकः **'इह तु'** इति । तत् गुणत्वं सूत्रोक्तं सत् प्रथमानिर्देशेन वृत्तौ विवृतम् । अथ किमर्थं प्रथमया विवृतम् । आह **'प्रधानतया'** इति स्वतन्त्रबोधरूपता तावत् सदैव प्रधानभूता स्थिता, सा तु शून्यादेः प्रधानतावभासेन पूर्वसूत्रेऽर्थापन्नेन न्यक्कृता; ततः स चेदप्रधानत्वमनुभवति सा हि उन्मज्जतीति प्रथमानिर्देशमाह। स एव शून्यादिरात्मनः प्राधान्याप्राधान्ये स्वीकुर्वाण एवं करोतीति हि तस्य प्राधान्यं संसारभूमौ

पशुत्वे पतित्वे च दर्शितं भवतीति प्रागुक्तनयमेव स्मारयति **'यदाहि'** इति । **'स्वतन्त्र'** इति । स्वतन्त्रबोधो नाम बोद्धृरूपोऽहमिति यो गीयते, स कः इति चिन्तायां यदा देहादिना तद्रूपं पूर्यते यो गौरः, सोऽहं; यः क्षुधितः, सोऽहमित्यादि; तदा देहादिरेव प्रधानीभवति संवित्स्वरूपं न्यक्कृतं जातमिति वेद्यमेव प्रधानीभवति, न वेदकरूपम्; यदा तु देहादेः किं तत्त्वमिति-चिन्तोपक्रमं प्रकाशघनमेव संविद्रूपमिति, तदा बोधस्वरूपीकृतं तद्रसानुविद्धमेव शून्यादिदेहान्तमवभातीति अभ्यासात् तस्य संविद्धर्माः शक्तिविशेषाः सम्यगाविशन्तो विभूतीरुत्थापयन्ति, अनभ्यासेऽपि तु तत्क्षणावेश एव आनन्दोद्भवकम्पनिद्राव्याप्ति-रूपघूर्णाविर्भावनक्रमेण जीवन्मुक्तालाभः । यथोक्तं

'प्राप्तेऽपि सिद्ध्यन्ति नास्त्यत्र विवादः ।'

इत्यादि

'सैषा परमार्थवेधे दीक्षा············ ।'

इति उक्तं

'इयं निर्वाणदीक्षा च··············· ।' (स्प०का० ३२)

इति गुरुभिः, भगवता अपि

'य एवं वेत्ति तत्त्वेन तस्य निर्वाणगामिनी ।
दीक्षा भवत्यसन्दिग्धा तिलाज्याहुतिवर्जिता ॥'

(परा० त्री० २५)

इति । अलं तावदनेन । तदाह **'शून्यादौ बोधोऽध्यारोप्यते'** इति नच कुसूल इव व्रीहीणामयमध्यारोप इति दर्शयति । तेन कर्तृत्वेन तावदयत्नवशादेकीभूतं शून्यादि यत् स्थितं, तत् तेनैव कर्तृताद्वारेण देशकालधर्माकारानवच्छिन्नबोधस्वभावत्वमभीति तल्लक्षणीयाभिमुख्येन निवेश्यते अभिनिवेश्यते । **'अभिनिवेश-पूर्वकं प्राप्यते'** इति द्विकर्मकं वा तथाभिनिवेश्यमानं विश्वा-

त्मकत्वं यतो बोधस्य, ततस्तदपि स्वीकरोति। **'तदाणोः'** इति आत्मसंस्कारनिवृत्तेरावेश्यावेशकभावो युक्त इति यावत्। **'विशेषदर्शनेषु'** इति शाक्ताद्वैतप्रधानेषु, विशेषः शक्तिलक्षण आत्मनो दृश्यते साक्षात्कारं नीयते येषु। **'ज्ञानोल्लास'** इति अज्ञानविगमादद्वयबोधप्रसरणादुल्लास इति **'ज्ञानम्'** इति विवृतम्। **'तुर्यं'** इति एतद्दशासमापत्तिपर्यन्तरूपा अपि तुर्यातीतता तत्रैव उक्ता, व्यतिरेकेण तु शून्यादेरवस्थापने बोधस्य तुर्यातीतता तत्रैव उक्ता शुद्धात्मता निष्कलता शुद्धचैतन्यमिति सामान्यदर्शनेषु सर्वोत्तीर्णैकतद्रूपवेदकेषु दर्शितेति सूचयति। ननु सूत्रे पूर्वत्र इह च कर्तृताया एव गुणप्रधानभावौ वक्तुमारब्धौ, तदशङ्कितो **'बोधस्य च'** इति सूत्रांशः कथम् **'कर्तृमयतामापन्नस्य'** इति च वृत्तावुचितायां **'बोधमयताम्'** इति किमेतत्,—इत्याशङ्क्य उक्तमेव प्रमेयमेतत्समाधाने सङ्क्षेपेण पुनः परामृश्य हेतूकरोति। यदुक्तमधुना एव, अत एव हेतोः सूत्रे इदमुक्तं; तदेवच इत्थं विवृतमिति सम्बन्धः॥ १२॥

ननु एवं पत्युस्तुर्यदशा तदतीता वा अस्तु; पशोस्तु सुषुप्तस्वप्नजाग्रद्दशा आगमेषु या बोधावरोहणक्रमतारतम्येन दर्शिताः, तासां रूपं वाच्यमिति हृदि गृहीत्वा तुर्यावरोहानन्तरभाविना सुषुप्तस्य श्लोकत्रयेण तत्त्वं निरूपयन्नेकेन प्रथमसुषुप्तस्य तावत् पीठबन्धं करोति

शून्ये बुद्ध्याद्यभावात्मन्यहन्ताकर्तृतापदे।
अस्फुटारूपसंस्कारमात्रिणि ज्ञेयशून्यता॥ १३॥

पीठबन्धमेव टीकाकारो दर्शयिष्यति **'सौषुप्तमुभयरूपम्'** इत्यादिना। तृतीयश्लोके यदुभयात्म वक्ष्यते, तस्य अपवेद्यभेदपीठिका इयमिति। इह संवित्तत्त्वं स्वस्वरूपमावृण्वानं ज्ञेयात्मना

बुद्ध्यादिना देहान्तेन घटादिना च आभाति । एकमेवच इदं स्वातन्त्र्यविजृम्भितम्, नतु अत्र क्रमो वा भेदो वा वस्तुतः, भाति तु स्वातन्त्र्यादुभयमपि । एवंस्थिते चित्तत्त्वस्य यः स्वरूपावरणांशः, स एव उत्तरभागान्तरानुदयप्रध्वंसानादरयोगेन प्रलयसमाधाननिद्रामूर्च्छादिषु इव तदसङ्कीर्णाभासः परिस्फुरन् विश्राम्यति । तत्रैवच अहन्तारूपं कर्तृतायाः पदं परामर्शस्य स्फुटत्वाभावादीषद्रूपणासारेण संस्कारात्मना लोकप्रसिद्धरूपाभावादरूपेण वावेद्येन निषेध्यात्मना युक्तं यदा भवति, तदा सा दशा नेत्येवपरामर्शशेषा अकिञ्चनोऽहमितिप्रतिपत्तिवदाक्षिप्तसामान्या संस्काराशेषीभूतज्ञेयरूपा शून्य इति उच्यते । तत एव आगमः

'अशून्यः शून्य इत्युक्तः शून्यश्चाभाव उच्यते ।
अभावः स तु विज्ञेयो यत्र भावाः क्षयं गताः ॥'

( स्व० ४।२९२ )

इति । इयमेव संस्कारशेषता भावान्तरे भावान्तराणां सर्वत्र अभाव उच्यते, नतु सर्वात्मना सतां विनाश इति उक्तमसकृत् । सूत्रार्थमवतारयति प्राक्तनेन सङ्गतिं कुर्वन् '**एवम्**' इत्यादिना । '**प्रस्तौति**' इति तृतीये तु निर्वाहयिष्यतीतिभावः । कार्याणां भूततन्मात्राणां करणानां च त्रयोदशानामभावेन सर्वाभाव उक्तः । '**बुद्ध्याद्यभावात्मनि**' इति '**ज्ञेयशून्यता**' इति च यदुक्तं, तत् निर्वाहयति पराशङ्कामनुवदन् '**यद्यपि**' इत्यादिना । ननु तत् सदपि परमशिवादिसंवित्तत्त्व इव न वेद्यतामापद्यते इत्याशङ्कायामपि आशङ्कान्तरं '**ननु**' इत्यादिना '**तदात्मतया**' इत्यन्तेन निराकृतम् । तत्र च हेतुः '**संस्काररूपतया**' इति । '**अभेदेन**' इति सतोऽपि भेदस्य अनवभासन इतियावत् । एतदेवहि संस्कारत्वं, तत् स्फुटीकृतं पूर्वानुभूतबलादित्येवमाशङ्कामनूद्य परिहरति '**तथापि**' इति । बोध एव सङ्कुचितः

शून्यमिति बोधरूपत्वात् का वेद्यता । ननु बोधस्य एव आभासच्छायान्तरयोगे वेद्यता, नतु अपरं वेद्यं किञ्चिदस्ति

'............देहाभासान्तरं नच ।'

इति । एतत् परिहरति शङ्कित्वा '**शून्यरूप**' इत्यादिना । लोकप्रसिद्ध्या यत् वेद्यं, तेनापि अधिकेन भवितव्यम्; तत् तत्र नास्ति तस्य प्रत्युत निषेधः प्रतीयते इतिभावः । '**तावतैव**' इति वृत्तिगतमेवकारं व्याख्यातुं साम्यं दर्शयति '**साङ्ख्यपुरुषाणां च**' इति । विशेषं तु आह '**केवलम्**' इति । '**निरावरणात्**' इति विमर्शरूपता अनेन अङ्गीकृता स्वाभाविकी, नच सा विज्ञानकेवलावस्थायामस्ति । '**मायीयायाः**' इति कलाविद्याकृतायाः । '**आश्रयाभावात्**' इति । संस्काररूपता हि वेद्यभागभूमावेव, नतु संविदि तत्र सर्वात्मना तादात्म्यगमनात् वेद्यराशेः, अत एव संस्काराभावात् पुनरदःसृष्टिरेषां नास्तीति लौकिकीषु जाग्रदाद्यवस्थासु सा दशा बीजभूता न भवतीति बीजत्वेन उपलक्षितं यत् सौषुप्तरूपं सवेद्यं, तद्रूपत्वमत्र न भवति, अन्यत्र तु भवत्येवेति आकूतम् । एतदेव आगमान्तरेण संवादयति '**अत एव**' इति । यतो बोधमात्रमेव सङ्कुचितं शून्यमुक्तम्, शून्यरूपता तु न स्फुटवेद्यरूपा; ततो

'ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः ।

पदद्वये विभुर्भाति..................॥' (स्प० २।२)

इति जाग्रत्स्वप्नपदयोर्वेद्यसद्भावः स्फुट उक्तः । सुषुप्ततुर्ययोः पुनस्तदभावात् चिन्मयत्वम् । तदयोगादयमिह विभागः शिवतत्त्वे ईश्वरान्ते शुद्धसंविल्लक्षणे यदहमिदमिति स्फुरितं, तत्र इदन्ता एव उल्लसन्ती संविदो भावानां च अन्योन्यं भेदनरूपं निषेधं तावदाक्षिपति । तत्र निषेधस्य गुणतायां संविदः प्राधान्येन प्रमातृतायां मन्त्रमहेशता, विज्ञानाकलता च विमर्शयोगायोगा-

भ्याम्, निषेधप्राधान्ये शून्यप्रमातृता, भावप्रधानतायां सकलतेति । ननु अन्योऽपि अस्ति साङ्ख्यपुरुषादस्य विशेषः इत्याशङ्क्य परिहरति '**सौषुप्त**' इत्यादिना ॥ १३ ॥

शून्यप्रमातुरेव वक्तव्यशेषमाचक्षाणो द्वितीयसुषुप्तस्य भूमिकां करोति सूत्रेण

**साक्षाणामान्तरी वृत्तिः प्राणादिप्रेरिका मता ।**
**जीवनाख्याथवा प्राणेऽहन्ता पुर्यष्टकात्मिका ॥ १४ ॥**

एष शून्यः प्रमाता अहन्तारूपया कर्तृतया अभिषिक्तो विद्याकलाशक्तिप्रपञ्चरूपस्य बुद्धिकर्मेन्द्रियवर्गस्य बाह्यविषयालोचनविषयनिर्माणलक्षणतो बाह्यवृत्तेः प्रत्येकमसाधारणरूपाया विलक्षणा या, असावान्तरी वृत्तिर्यया वायुरेकः प्राणनादिक्रियापञ्चकप्रपञ्चितः पञ्चात्मकतामभ्येति; तां वृत्तिं जीवनलक्षणां तस्य अक्षवर्गस्य जडस्य

'यतः करणवर्गोऽयम्··············· ।' (स्प०का० १।६)
इतिन्यायेन स्वावेशवशादुत्थापयन् जीव इति उच्यते । सा तथाभूता या वृत्तिस्तस्य शून्यस्य तथोत्थापिका, सा जीवनक्रिया; इन्द्रियशक्तीनामेववा या आन्तरी साधारणरूपा प्राणनादिक्रियोत्थापिका वृत्तिः, सा परमार्थतः कर्तुरेव वृत्तिः; न जडानामिति सैव जीवनम् । यदातु प्राण एव अहन्ता, तदा अपि एवम्; तदा तु प्राण एव जीवस्तत्रैव अहन्तावेशात् । उभयोरपिच अयं योन्यन्तरसञ्चारी पुर्यष्टकशब्दवाच्यो यतोऽत्र प्राणादिपञ्चकमिन्द्रियवर्गौ द्वौ निश्चयात्मिका च तृतीया स्वीकृतान्तःकरणान्तरा धीर्व्यज्यते । सूत्रार्थमवतारयति '**अन्य**' इत्यादिना । स्व इति शून्यकर्तृरूपसंलग्नानां करणस्वभावत्वादेव तत्प्रेरणात् '**सा**' इति सूत्रे कार्यकारणयोरभेदोपचारात् जीवनरूपाक्षवृत्तिसंपादक-

त्वादहन्ता एव अक्षवृत्तिरिति उक्ता। उपचारस्य च प्रयोजनम-क्षाणामाहङ्कारिकत्वमेव परमार्थः इतिज्ञापनम्। **'आन्तर'** इति अहमितिसंरम्भात्मकः। एतेन पूर्वसूत्रात् **'शून्ये'** इत्यनु-वृत्त्या शून्ये या अहन्ता, सा प्राणादिहेत्वन्तराक्षवृत्तिकारणभूता सती जीवनं यतोऽक्षवृत्तिरूपस्य जीवस्य यत् कारणं जीवना-लक्षणमिति सूत्रार्थः सूचितः। एवमुपचारेण व्याख्याय करणस्य परमार्थतः कर्तृसमावेशेन करणत्वात् तत्क्रियया एव क्रियावत्त्वं खड्गस्य इवेत्याशयेन मुख्यतयैव सूत्रे योजयन् वृत्तिमन्यथा व्याचष्टे **'अथवा'** इति। पूर्वव्याख्याने वृत्तावेवं विग्रहः—सर्वे-न्द्रियशक्तिसाधारणं जीवनाख्यं यत् प्राणनादिक्रियापञ्चकं प्राणा-दिविभागकारणभूतं तस्य व्यापारपञ्चकस्य प्रेरणात्मिका अहमिति-संरम्भलक्षणा वृत्तिर्यस्य शून्यस्य, स तथा उक्तः। इदानीं तु एवं विग्रहः—सर्वेन्द्रियशक्तीनां साधारणं जीवनशब्दवाच्यं प्राणादि-वायूनां प्रेरणलक्षणमन्तर्वृत्तिशब्दवाच्यं, तत् यस्येति; तद्धि तस्य सम्बन्धि तस्य एव कर्तृत्वात्, नतु तासां कारणत्वादिति आशयः। तदाह **'तत्समवेतत्वात्'** इति कर्तृरूपसमावेशा-दित्यर्थः। इतिशब्दो हेतौ। यत एवं तासामपि क्रिया तस्य सम्बन्धिनी, अतो हेतोरत्र पक्षे स जीवः षष्ठ्या अन्यपदार्थी-कृतः; अन्यथा अन्यक्रिया अन्यस्य सम्बन्धिनी कथं स्यादिति आशयशेषः। **'एतद्व्यतिरिक्तानाम्'** इति आक्षिप्तप्राणादि-पञ्चकवृत्तितादात्म्यापन्नानामित्यर्थः। तेन इन्द्रियाणां सर्वेषां यः प्राणादिपञ्चकोत्थापकस्तद्द्वारेण नागादिविकारान्तरकारणत्वतो विकृताविकृतान्तरप्राणचक्रद्वारेण च रोमकूपपर्यन्तनाडीचक्रानु-चक्रमयदेहमययन्त्रवाहक आन्तरः साधारणः शक्तिवर्गः पञ्चकः, स प्रेर्यं प्राणादिवर्गं प्रेरकं च इन्द्रियवर्गमधिष्ठात्रीं च शून्या-

हन्तामाक्षिप्य वर्तमानः पुर्यष्टकः इति उक्तः । **'अस्मिन्नपि'** इति प्राणाहन्तापक्षे सर्वस्य अभिमतं पुर्यष्टकावस्थानम् । केचित् तु आगमाः शून्याहन्तापदेऽपि तदाहुः । यदाहुः

'लीनशून्यसमाधावप्यास्ते लिङ्गशरीरः ।'

इति । **'तथाच'** इति यत एवं, तत एवं योजना—सा शून्ये ऽहन्ता प्राणादिप्रेरिका अक्षवृत्तिरूपा पुर्यष्टकात्मिकेति । **'अथवा'** इत्यादि सौत्रं विवृणोति **'यदा'** इति । प्राणशब्दः सौत्रः सामान्यवाचीति यावत् । **'तदा'** इत्यादिना उत्तरसूत्रोपकरणार्थतां सूत्रद्वयस्य दर्शयति । तदाच प्राणादिपञ्चकमहङ्कारपरमहङ्कारेण प्रेर्यमाणं, न तेन समं गणनार्हम्; अपितु तेन अधिष्ठितमिति यावत् । कीदृगित्याह **'आक्षिप्त'** इत्यादि । करणात्मना वर्गत्रयेण सहितं पञ्चकं संवेदनोपधानत्वेन अधिष्ठेयं प्राणादिरूपमहमित्येवंप्रमातृभावेन अधिष्ठितं पुर्यष्टकमिति यावत् । पूर्वं तु सूक्ष्मतमत्वात् लिङ्गस्य तन्मात्राणामाक्षेपो न दर्शितः, सूक्ष्मत्वादेवच पूर्वत्र अहङ्कारस्तदाक्षिप्तं च मनोऽपि समकक्ष्यतया तत् न गणितम्, अपितु अहङ्काराधिष्ठितमिति । स्थूलतामेव शक्तिमत्पदेन दर्शयति **'पूर्वं तु शक्तीनामेव'** इति सूक्ष्मतमत्वमेव दर्शितम् । पेलवशरीरस्य हि तदासूत्रणमात्रम्, उपरि परिपूरणं तु स्थूलतमं शरीरमिति तदेव मध्यमं प्राधान्येन उत्पत्तिस्थानेषु सञ्चरमाणं संसारीति उच्यते । तत एव प्राणायामैस्तस्यैव शिथिलता उत्थापनीया दीक्षादिकर्मणा च पुर्यष्टकांशानां कारणेश्वरेषु समर्पणद्वारेण

'तन्मात्रोदयरूपेण मनोऽहंबुद्धिवर्तिना ।' (स्प० ४।१९)

इतिवचसा । यतस्तन्मात्रपञ्चकमन्तःकरणं चेति केचन पुर्यष्टकमाहुः स्पर्शतन्मात्रेण प्राणादिस्वीकारात्, तत एव अत्र पक्षवैचित्र्ये वस्तुनो न वैचित्र्यमिति ॥ १४ ॥

यस्य पीठबन्धत्वेन सूत्रद्वयं, तत् सौषुप्तं लक्षयितुं सूत्रं

तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं प्रलयोपमम् ।
सवेद्यमपवेद्यं च मायामलयुतायुतम् ॥ १५ ॥

शून्यमात्र एव शुद्धे शून्ये यदा स्थितिरहन्ताविश्रान्तिः, यदा च प्राणे; तदा मायया मलावतारणावभासिन्या सुप्तीकृतं चैतन्यं कलाविद्याभ्यामपि न प्रबोधितमिति सुष्ठु सुप्तस्तस्य भावः प्रवृत्ति-निमित्तात्मा तावदवभासः, कर्म च क्रियारूपं तावद्विमर्शात्मकं सौषुप्तम् । विवृतिकृत् तु उत्तरसूत्रानुसारेण प्रकरणलभ्यं पद-शब्दं मत्वा सुषुप्तस्य इदमिति व्युत्पत्तिमभिमन्यते । पूर्वमपवेद्य-मत एव मायाख्यमलरहितं, द्वितीयं तु तद्विपरीतम् । प्रलयस्य अपि एवंरूपता सर्वा, तत्र परं देहस्य प्रध्वंसानुदयौ चिरतर-कालता च; इह तु तस्य अनाचरणमचिरता च । तदपि च श्रमेण चेत्, निद्रा; अभिघातधातुदोषादिना चेत्, मूर्च्छा; मद्यगरोपयोगा-दिना चेत्, मदोन्मादादि; स्वातन्त्र्योत्थापितात् प्रयत्नबलात् चेत्, समाधिरित्यादयोऽवान्तरभेदाः सौषुप्तस्य । सर्वविषयत्वात् च पूर्वं सवेद्यमुक्तमिति सूत्रार्थः । '**इदानीम्**' इति कृते पीठबन्धे श्लोकद्वयेन निगमयतीति । अनेन प्राक्तनं '**निगमयिष्यति**' इति स्मारयन् सूत्रत्रयस्य सौषुप्तलक्षणार्थतया एकमहावाक्यता-माह । रूपवतः स्फुटस्य वेद्यस्य अभावात् विद्याकले भिन्नं वेद्यं निर्मेयं च प्रथयन्त्यावपि स्वरूपमावृणुत एव संवित्तत्त्वस्येति आ-वरणांशेन मायाख्यमलत्वं तयोरित्याशयेन आह '**विद्याकला-रूपे**' इति । प्राणसौषुप्ते तु संवेदनमपीति सम्बन्धः । '**वेद्या-भावात्**' '**वेद्यसद्भावात्**' इति पञ्चमीभ्यां सूत्रेऽपि हेतुहे-तुमद्भावं सूचयति । '**पुर्यष्टकावयवा**' इति, अनेन आगमः सूचितः, तत्तद्वेद्यतत्तदिन्द्रियाद्यनवधानादिना सा यतः सुप्तं ततस्त-

त्स्वप्नोत्थापनादिवैचित्र्यबलात्

'तत्तदंशप्रधानेऽयं प्राणे निद्राति चेतनः ।'

इति हि आगमः । **'प्राणादौ'** इति वृत्तौ **'स्थितौ'** इति पूर्वकं यद्वैयधिकरण्येन, तदपेक्षणीयम् । **'तैः'** इति रूपादिभिर्येन जाग्रतः स्वप्नात् वा न भेदो भवेदिति आशयः । **'काल-योग'** इति चिरादिरूपता हि तत्र स्मर्यते एव ॥ १५ ॥

ननु स्फुटवेद्यविनिर्मुक्ता अन्या अस्तु सुषुप्तावस्था स्फुटवेद्ययोगाविशेषेऽपितु स्वप्नजाग्रद्दशयोः को भेदः इत्याशङ्क्य स्वप्नावस्थां तावत् लक्षयति

**मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात् ।**
**स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम् ॥ १६ ॥**

अक्षग्रहणं सर्वबाह्येन्द्रियोपलक्षणम् । तदयमर्थः—गोलकपक्ष्माङ्गुल्यादीनि अधिष्ठानानि निस्तिमितानि तावत् निद्रायमाणस्य उपलभ्यन्ते । अथ चक्षुषा कान्तां पश्यामि हस्तेन आकारयामीति स्पष्टावभासा तात्कालिकैश्वरसृष्टिप्रधाना प्रतिपत्तिरस्ति स्वप्ने । तत्र च मनोमात्रमेव व्यापृतं पूर्वसृष्टतया जाते तु तदेव तावत्येववा अपेक्ष्य परमेशसृष्टिमिन्द्रियविषयतांशे तु साधारण्यं स्थैर्याद्यवभासान्तरसंभिन्ने विमर्शस्थैर्यानुवृत्तेर्जाग्रत्पदे बाधनात् विभ्रमरूपता,—इति पिण्डार्थः । सूत्रार्थमवतारयति **'विश्वबीज'** इति प्रलये सुषुप्ते च यथायोगं निःशेषप्रकृतकृत्स्नाभिप्रायेण विश्वशब्दः । मनोमात्रमपि अत्र पुर्यष्टकांशताव्यवस्थितेन्द्रियविषयभागबीजतानुविद्धं बोद्धव्यम् । **'स्रष्टृताविषयम्'** इति प्राधान्यादेवमुक्तम्, भोक्तृता तु जाग्रति अपि अस्ति । एवं यदिति सम्बन्धः । **'चक्षुरादि'** इत्यादिना मात्रपदं विभ्रमतां व्याचष्टे **'ईश्वरस्य'** इति अनिच्छोरपि तथादर्शनादिति भावः ।

यदाह **'अन्यथा तु स्वातन्त्र्यात् स्यात् सृष्टिः'** इत्यादि। **'अवद्योतितम्'** इति वस्त्वपेक्षया मनोरूपतां प्राप्ता या परमेश्वरस्य शक्तिः क्रियात्मा तया,—इति हि अत्र अर्थः। **'सिद्धाञ्जनादिना'** इति स्पृष्टमिति अपेक्ष्यम्। **'अन्यथापि'** इति इत्थं मा भूत्, प्रकारान्तरेण भविष्यतीत्यर्थः। **'तत्'** इति प्रकारान्तरम्। **'न चेह तथा'** इति नच तैर्दृश्यते जाग्रति अनुवृत्ताध्यवसितैरपि तैराप्तैरपि वाग्भवस्याकरणात्। **'कालान्तर'** इत्यादिवृत्तिं व्याचष्टे **'यदिच'** इति। **'उक्तम्'** इति भवता एव तदुक्तं यत् मम पक्षं दीपयत् तव स्वोक्तिं बाधते इति पूर्वपक्षस्य आशयः। **'एवमेष'** इति अस्मन्मते इति आकूतम्। **'मनसि'** इति प्रतिभासते न विभ्रमः, अपितु विकल्पितेऽवभासान्तरे इति भावः। **'पूर्वम्'** इति भ्रमाभ्रमरूपताविचारे बहुशः। **'तथापि'** इति नच ते तथा प्रतियन्तीति हि अपूर्णख्यातिरूपत्वेन अख्यातिरेव भ्रमस्य तत्त्वमिति स्मारयति। **'ततोऽपि'** इति न केवलं यथा पूर्वमेतदसत्ख्यातिदृष्ट्या व्याख्यातं तथा युज्यते, यावत् तन्मूलता अस्मदुपगताख्यातिदृशा अपि उपपद्यते एवेत्यर्थः। **'तेन'** इति अणुना। सुसंवेदनात् दर्शनात् चेति सङ्गतिः। अत्र अपि अस्ति भोक्तृता जागरे इव, तत्रापिच अस्ति स्रष्टृता स्वप्न इव; तथापि प्राधान्यकृता निरूपणे व्यवस्थेति दर्शयति **'जागरे तु'** इत्यादिना। **'ईश्वरस्यापि'** इति पशोरपि भोक्तृत्वं यत्, तत् भगवत एव वस्तुतो

'यद्यप्यर्थस्थितिः................।' (अ०प्र०सि०२०)

इतिन्यायात्। **'तत्र'** इति जागरे, अत्र एव अवान्तरवाक्यच्छेदः। **'अत्र'** इति जागरे। **'उक्तम्'** इति आगमादौ। **'तदन्तर्गतत्वात्'** इति स्रष्टृतैव हि सा भवतीत्यर्थः। अत एव

'प्रविभज्यात्मनात्मानम्………………… ।'

इत्यत्र

'…………सृष्ट्वा भावान् पृथग्विधान् ।'

इति सर्गशक्तिं मूलकारणत्वेन उक्त्वा पश्चादुक्तं तन्नान्तरीयकं भोक्तृत्वं

'सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तकः ।'

इति ॥ १६ ॥

एवं सा सृष्टिः स्वप्ने पदं विषयस्तद्विषया प्रमातृता स्वप्नावस्थेति अभिधाय तद्विपरीतस्फुटवेद्यविषयां प्रमातृतां जाग्रदवस्थात्वेन लक्षयति

**सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।**
**सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः ॥ १७ ॥**

**'सृष्टिर्जागरः'** इति तत्सृष्टिविषयः प्रमाता व्यामोहहेतुभूतनिद्राप्रक्षययोगित्वेन जागर्तीति यत उच्यते, ततस्तावत्प्रमातृत्वं जाग्रदवस्थेति योऽयम् । प्रमातृत्वस्य हि प्रमेयभेदकृता एताः पञ्च अवस्था आगमेषु उक्ताः । **'पूर्ववत्'** इतिवृत्त्या स्वप्नस्वरूपत्वमतिदिष्टमिति विवृणोति **'जागरेऽपि'** इति । अत एव आगमेषु अवस्थानामपि अन्योन्यानुप्रवेशो बहुशाख उक्तः ॥ १७ ॥

ऊर्ध्वमुपादेयमिति वक्तुं तिस्रो हेयत्वेन आह

**हेया त्रयीयं प्राणादेः प्राधान्यात्कर्तृतागुणे ।**
**तद्धानोपचयप्रायसुखदुःखादियोगतः ॥ १८ ॥**

कर्तृतात्मनि अप्रधानीकृते प्राणादेस्तदपेक्षया प्राधान्येन हेतुना तस्य स्वातन्त्र्यभागस्य उपचयबलोदितसुखदुःखविषयहानादानादिपरिश्रमान्तरैस्त्रयीमपि दशां मुमुक्षुर्हेयत्वेन अभिमन्यते इति सूत्रार्थः । तमवतारयति **'एतासामपि'** इति पञ्चानाम-

पीति यावत् '**प्रस्तौति**' इति साधारण्योक्त्या उपादेयतां गम्यमानामपि निर्दिशति । यत् वक्ष्यति '**सामर्थ्यादपरिशिष्ट**' इति । '**प्राणो वा**' इति शून्यो वेत्येतदपेक्षो वाशब्दः । ननु यदि आत्मना स्वातन्त्र्यमेव, तदेवच उद्रिक्तं, तर्हि का तस्य गुणता येन उक्तं सूत्रे '**कर्तृतागुणे**' इत्याशङ्क्य आह '**विशुद्धं यत्तत्**' इति । तच्छब्देन अधुना संसारिणां तद्विषय एवेति सूचयति '**आरोप्यमाणस्यापि**' इति क्रीडायामपि दारकमध्ये राजवदस्येति भावः । '**तावत्या**' इति मात्रया । अत एव भट्टश्रीनारायणः

'त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते ।
स बिन्दुर्यस्य ...........................॥' (स्त० चि० ६१)

इति । प्रतिपत्तिविवेके च सर्वत्र लौकिकशास्त्रीयकर्तव्यविषये अन्तर्भक्त्यानन्दश्रद्धानुवेधो दर्शितः, अन्यथा नैयायिकोक्तबोधादिककर्तव्यरूपतायामेव न आरोह इति ।

'तया शून्यं भवेत् पुंसां शास्त्रं शासनमात्रकृत् ।'

इत्यनेन '**तद्वान**' इत्यादि सौत्रं व्याचष्टे, आदिपदं तु '**सर्वथा तु**' इत्यनेन । '**वक्ष्यते**'

'सत्तानन्दः.................................... ।' (४।१।६)

इतिसूत्रे । '**तुर्यादि**' इति आदिग्रहणात् तदतीततामपि स्वीकरोति । '**उक्तम्**' इति सूत्रवृत्त्योः । समावेशे हि देहप्राणादेः प्राधान्याभावात् तन्महिमोपनतक्षुत्परिश्रमादिदुःखानुदये

'आच्छादयेद्बुभुक्षाम्.................... ।' (स्प० ४।८)

इतिन्यायेन तत्प्रशमजं तृप्तिविश्रान्तिरूपं मनागहन्तात्मकनैरपेक्ष्यस्वातन्त्र्यानन्दकणरूपं सुखमपि चेति परमानन्दमयतैव । '**अग्रे च**' इति

'साधारणोऽन्यथाचैशः सर्गः······ ।' (४।१।११)
इति प्रकरणे ॥ १८ ॥

ननु प्राणादेः प्रधानत्वं हेयताया निदानं, साच त्रय एव उक्ता, न तदूर्ध्वं इति तत्र तत् नास्तीति स्यात्; ततश्च समाविष्टस्य देहपात एव, नच व्युत्थानं स्यादित्याशयेन प्राणादिविभागं कर्तुं यत् सूत्रद्वयं, ततः प्रथमं तावत् त्रयीवृत्तान्ताख्यानमाह

**प्राणापानमयः प्राणः प्रत्येकं सुप्तजाग्रतोः ।**
**तच्छेदात्मा समानाख्यः सौषुप्ते विषुवत्स्विव ॥१९॥**

प्राण इति प्राणनाख्या या असावान्तरवायुसञ्चरिता चिद्वृत्तिर्जीवनमिति उक्ता, सा सामान्यपरिस्पन्दरूपा देहादेर्जडस्य अजाड्यमेव आपादयन्ती अहमितिस्वातन्त्र्यारोपत्वेन विकल्परूपपरामर्शमयी; सैव प्राणादिविशेषस्पन्दात्मना पञ्चधा भवति । तत्र किञ्चित् त्यजन्ती, क्वचित् पतन्ती क्रमेण प्रश्वासनिःश्वासात्मना प्राणापानरूपा भवति । साच उभयी अपि जाग्रति स्फुटैव देहात् विषये, ततोऽपि देहस्मृत्यादावाभ्यन्तर एव वेद्ये विश्रमणात् । सुप्तेऽपि स्वप्ने सा अस्त्येव परेण स्वपतः प्राणप्रवेशनिर्गमयोरुपलम्भात् स्वयमपि वेद्यसंपातोपलब्धेः । तेन प्राणापानविशेषद्वयप्रधाना प्राणना जाग्रत्स्वप्नयोः, सुष्ठु सुप्तस्य तु यत् प्रमातुः पदं, तत्र द्विविधेऽपि प्राणापानसद्भावेऽपि निरिन्द्रियहृत्प्रदेशविश्रान्तिरेव मुख्यं सुषुप्तरूपमिति । तत्र प्राणापानयोर्यः कंचित् कालं भेदो विश्रान्तिस्तदात्मा सकलरसादिवर्गस्य ऊर्ध्वाधरतिर्यक्षु समानीकरणव्यापारतोऽत एव हृदयकमलं विकासयन्नशितपीतजरणकारी दिनरात्रिरूपप्राणापानसाम्यविच्छेदात्मकत्वात् विषुवत्तुल्यः समानो नाम विशेषः, तन्मयी सा प्राणनक्रियेति पशुवर्गः प्रलयाकलान्तः, तच्छेदात्मा यः समानस्त-

स्मिन् विशेषरूपे आ समन्तात् प्राधान्येन ख्यानं प्रख्या यस्य; सैवच तदानीं संज्ञा यस्य प्राणस्य, स तादृक् सौषुप्त इति सम्बन्धः । विषुं व्याप्तिमर्हतीति 'तदर्हम्' (पा०सू० ५।१।११७) इति वतिः । उपमाने वतेरेवच अव्ययत्वं स्वाभाविकं

'तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च ।'

( तै० ब्रा० २।८।९।३ )

इति दर्शनादिति केचित् । यदाह पराशरः

'व्याप्तियोगे हि कालांशे तद्योगाद्विषुवद्दिनम् ।'

इति ।

'साम्यं वैषम्यजनकं विषुवत् सन्ततं स्मृतम् ।'

इति तु श्रीकालपादायाम् । सूत्रे शतरि मुहुर्मुहुरेवमिति कथितम् । विशेषं दिनरात्रितदूनाधिकत्वलक्षणं विषमतात्मकमविरतं सुवति प्रेरयतीति वा विषुवत् सन्ध्या अपि । मध्ये मध्ये समानेन व्यवधानं यत् सुषुप्तस्य, इदमेव प्रधानतया प्राणापानरूपतां सतीमपि अधस्पदीकुर्वदिव सुषुप्तरूपमिति सूत्रार्थः । तमवतारयति **'इदानीम्'** इत्यादिना । **'विभजन्'** इति अविच्छिन्नव्यापारतां दर्शयन् द्वितीयश्लोकव्यापारमपि स्पृशति । **'स च'** इति यत्र पूर्वं

'........प्राणेऽहन्ता.............. ।' (३।२।१४)

इति जीवनरूपता उक्ता । **'आत्मभूतः'** इति **'प्राणात्मा'** इति वृत्तौ कर्मधारयोऽयमिति यावत् । **'ननु'** इति **'प्रत्येकम्'** इत्यस्य व्यवच्छेद्यमुक्तम् । **'तत्सहभाविनी'** इति अन्यथाहि जीवनं विच्छिद्यते । **'अनयोः'** इति प्राणोऽवभासनेन देहादि रिक्तीकुर्वन्नेव विषयं प्रकाशयन् सूर्य इति तत्कालो दिनं, अपानो विमर्शनेन अन्तर्विश्रान्त्यानन्ददायी देहादिप्रमातृभावमाप्याय- यतीति चन्द्रस्तत्कालो निशेति प्रमात्रपेक्षाप्रधानतया एवं विभ-

ज्यते, प्रमेयापेक्षया वैपरीत्येन अपि । अत एव आह **'अर्थानां सर्गेऽपि असौ प्राणस्य प्रवृत्तिः प्रमातुः प्रलय एव'** इति । बहिः प्रशमस्थानं विषयो द्वादशान्तश्च, अन्तस्तु अहमिति हृत्सदनं च । प्रमातुः पुनर्भावात्मतया सृष्टिरेवेति सम्बन्धः । **'एतावतैव'** इति भावात्मत्वभागापेक्षामात्रेणेत्यर्थः । तदाह **'ननु'** इति । जाग्रतं व्याख्याय स्वप्नं सूत्रे यत्नप्रतिपाद्यत्वात् प्रथमोक्तमपि जाग्रद्दृशैव व्याख्येयोऽयमित्याशयेन पश्चात् व्याचष्टे **'भेदेन'** इति । अथ **'तच्छेदात्मा'** इति व्याख्यास्यन् जागरादावपि न न अस्ति समान इति वदन् सर्वत्र सर्वसंभवेऽपि प्रधानताकृतो विभाग इति व्याचष्टे **'बहिः'** इति । तुः पूर्वतो विशेषद्योतकः । **'द्वयोः'** इत्येतदेव स्फुटीकर्तुं **'बहिरन्तः'** इति विषये द्वादशान्तपतिते प्रमातरि च हृदयभूमिगते यौ विश्रान्तिरूपौ क्षणौ, तयोः।**'वक्ष्यमाण'** इति **'तदानीमेव विवृतौ प्रलयत्वम्'** इति । **'ग्राह्यग्राहकयोरपि'** इति सर्वप्रलयोऽसावित्यर्थः । **'इदानीं तच्छेदात्मा'** इत्यादि विवृणोति **'यदा तु'** इति । न्यूनाधिकतया नान्तरीयकस्तां विना न भवति यः, सोऽवश्यं यत्र भवति प्रवृत्तिनिवृत्तिक्रमे तस्य अभावादित्यनेन विषुवद्रूपतामासूत्रयति । छेदः साम्येन व्याख्यायते इत्यत्र उपपत्तिं घटयति **'प्राण'** इति । जागरस्वप्नयोः क्षणमात्ररूपेऽन्तराले । **'अन्यदा'** इति मूर्च्छागाढनिद्रादिषु चिरकालं तयोरनुल्लसनम्, उभयोर्विच्छेदमेव साम्यमिति बीजतागमनं वैषम्यात्मकोल्लासनिवृत्तिरिति यावत् । **'अन्वर्थ'** इति समं कृत्वा आ निजव्यापारविषयमनिति प्राणितीति हि समानः । प्राणनं च तत्र सूक्ष्मवृत्त्या प्रशान्ताङ्गारज्वलनवत् स्थितमेव ।

'षट्त्रिंशदङ्गुलश्चारः··················· ।'

इत्यादिदिशा तु दीर्घप्रसरणात्मना या प्राणापानरूपता, सा विच्छिन्नेति उच्यते; सूक्ष्मा तु अस्त्येव । '**छेदः साम्यम्**' इति दन्तुरमिव पश्यन्नन्यथा विवृणोति '**अथवा**' इति । ननु सूत्रे न्यूनतादि न श्रुतमेव, तत् सर्वनाम्ना कथमामृश्यते । अत्र आह '**रात्रिन्दिव**' इत्यादि । प्राणापानौ रात्रिन्दिवात्मानौ सूत्रे तावत् निर्दिष्टौ । तौ च प्रवृत्तिनिवृत्तिरूपौ, नच समतुलाधृतौ भवतः, अपितु अवश्यं तत्र न्यूनाधिकभावेन विचित्रेण भवितव्यम्, ततः सोऽव्यभिचारी धर्मस्तदन्तर्गतः सर्वनाम्ना निर्दिष्ट इति भावः । '**विवृतश्च**' इति निरोधे विच्छेद इति हि युक्ता पर्यायता । अत एव पञ्चमीनिर्देशात् तच्छेदात् समानाख्य इतिपाठं केचिदाहुः । अत्र वृत्तिमपि साक्षिणीमाहुः '**स च**' इति । ननु पूर्वव्याख्याने साम्येति संज्ञायां निमित्तत्वेन उक्तम्, साम्ये हेतुः '**निरोधात्**' इति; अधुना तु एतदेव संज्ञायां हेतूकृतम्, '**साम्य**' इति तु कथं नेयम् । इत्थमित्याह '**तत्र च**' इति बीजभूमौ यत् साम्यं प्राणापानयोर्लोकप्रसिद्धबाह्यरात्रिन्दिवयोरिव, तत् हेत्वन्तरानुक्तावपि लोकप्रसिद्धिमेव अपेक्ष्य तत्र निरोधे निमित्तभावेन सप्तमीद्योतितेन आश्रितम् । युक्तं च एतत् यतः पूर्वनिर्दिष्टं तत्, निमित्ती तु निरोधः पश्चात् निर्दिष्टः; निमित्तकृता च संज्ञा गार्ग्योऽस्मि गोत्रेणेतिवत् । '**तदा च**' इति प्राणापानसाम्यकृते न्यूनाधिकतानिरोधे कालाधिकारागमप्रसिद्धा विषुवत्संज्ञा । लौकिकतद्रूपतुल्यत्वेन तदेव दर्शयति '**तदापि**' इति लौकिके मेषतुलाविषुवद्द्वये प्रसिद्धो न्यूनाधिकभावः प्रसरिष्यते । ननु सकलमेव दिनं रात्रिर्वा विषुवदिति लोके प्रसिद्धम्, न क्षणमात्रम् । सत्यं, प्रसिद्धिस्तु इयं तत्क्षणानुगृहीतत्वेन तत्प्रवाहपतितत्वादुपचार इति दर्शयति '**तदानीं तु न**' इत्या-

दि । न केवलं विषुवति एवम्, अन्यत्र अपि दृष्टमेवमित्याह **'सङ्क्रान्तौ च'** इति । राशेर्यत् राश्यन्तरचरणं सूर्यस्य, तत् बोधरूपस्य प्रकाशस्य वेद्यात् वेद्यान्तरगमने इव

'एकचिन्ताप्रसक्तस्य............... ।' (स्प० का० ४१ )

इति

'उभयोर्भावयोर्ज्ञानं ज्ञात्वा मध्यम्...... ।' (वि०भै०६१)

इति

'भावे त्यक्ते निरुद्धा चित्............ ।' (वि० भै०६२)

इतिशास्त्रोक्तन्यायेन स्वात्मविश्रान्तिरूपं परं पुण्यम् । यदुच्यते

'अयं स परमो धर्मो यद्योगेनात्मदर्शनम् ।'

इति । तत्र क्षणमात्ररूपेऽपि

'................दश पूर्वान्दशापरान् ।'

इतिन्यायेन उभयतो द्वात्रिंशद्घटिकः पुण्यः काल इति केचन प्रतिपन्नाः, परे तु उभयतः षष्टिघटिक इति । तद्वत् विषुवति अपीति तात्पर्यम् । ननु अपवेद्ये सुषुप्ते ग्राह्याभावात् तदनुसारेण प्रसरणाद्यभावात् भवतु समानरूपता, सवेद्ये तु सा कथमित्याशङ्क्य आह **'सुषुप्त'** इत्यादि । अत्र प्रतिज्ञाते हेतुमाह **'चक्षुरादि'** इत्यादिना । एतदुक्तं भवति—ग्राहकात् विच्छिन्नं यदवभाति, तत्र अवश्यं प्राणस्य प्रसरणेन भवितव्यम्, नतु वेद्यमात्रे । सुखादि च ग्राहकादविच्छिन्नमिव भवति । ग्राहकस्य हि

'अपि त्वात्मबलस्पर्शात्............. ।' (स्प०का० ८)

इतिन्यायेन स्वप्रकाशतैव, कस्तत्र प्रसरणावकाश इव । ननु स्वप्ने चक्षुरादिव्यापारो नास्त्येव । अत्र आह **'स्वप्नेऽपि'** इति । यद्यपि मनसा केवलेन तदर्थदर्शनं, तथापि तत् मनोबलेनैव चक्षुरादिकृतत्वेन अपि स्थापितम् । एवंहि मनसा उत्थापितं चक्षुषा अपि

पश्यामि सति अपि मनोव्यापारे इति सा भ्रान्तिरिति तु अन्य-देतत् '**ग्राहकोऽपि**' इत्यादि सिद्धान्तवादी स्वयमेव यत्पूर्वपक्ष-वादिनो हृदये स्थितं, तत् कथयति, वस्तुदृष्ट्या न एतत् मम बाधकमित्याशयेन तामेव दर्शयति '**यदि च**' इत्यादिना । '**मा-यीयग्राहकेऽपि**' इति वेद्यग्राहकीभूतेऽवभासमाने। '**न चैवम्**' इति न अत्र प्रमाणवृत्तिः संवेद्यते तस्यास्तुर्यतदतीतदशायां सर्व-थैव विगलनात् । यदूचे

'यत्रोपरमते प्राणो ह्यनिरोधात् स्वभावतः ।
सा ब्रह्मनिष्ठा तुर्यात्मा············ ॥'

इति । ननु तस्यां मायीयं ग्राहकमस्तीत्याशङ्क्य आह '**अन्यथा**' इति मायीयग्राहकाभावे परसंवित्तत्त्वे या युक् एकता, तया सह वर्तते यस्तस्य भावः सायुज्यम् । प्राणशून्यादेरपि ग्राहकी-भावाभावात् ग्राह्यभावैकरसैरेव वायुशून्यादिभिः सायुज्यं प्रका-शमानत्वाच्च परमार्थचिद्रूपेण,—इति पुनर्यदिदं विविधमुत्थानं शरीरचेष्टापर्यन्तं, तत् न स्यात् तद्दशापन्नस्य योगिनो यदि मा-यीयो न स्यात् तदा ग्राहकः । अस्ति च एतत्, ततः सोऽपि अस्ति; नच तत्र प्राणवृत्तेः संभव इति व्यतिरिक्तसंमते वेद्य-तेऽस्या उल्लासो, न वेद्यमात्रे; सुखादि च न व्यतिरिक्तमिति । तदाह '**सुखादि च**' इति । नच बाह्यमात्रेण एवम्, अपितु ग्राहकतादात्म्यादिति दर्शयति '**तथाहि**' इति । ननु तदा अपि सुखादि स्मर्यमाणं यथानुभवमेव ग्राहकनिर्दिष्टं स्मर्तव्यम्, नच ग्राहके प्राणापानव्यपेक्षेत्याशङ्क्य आह '**आत्मापि हि**' इति । एतदुक्तं भवति—स्वसंवेदनभागस्तावत् नित्यानस्तमितः ।

'नत्वेवं स्मर्यमाणत्वम्··············· ।' (स्प०का० १ ३)

इतिन्यायेन स्मर्यमाणार्हः विकल्पितस्तु तथा स्यात् । विकल्पन-

पूर्वकतामेव स्मरणस्य अभिधातुमधुना एव वक्ष्यति **'विकल्प्य-माने स्मर्यमाण'** इति। विकल्पने च आत्मा अपि बुद्धिभूमि-पतितः पृथक् सृष्ट एव वेद्यस्तादृशमेवच सुखादि,—इति पृथगस्य स्मरणं विकल्पनपूर्वत्वात् यथानुभवमेवेति। तदात्मनो ग्राह्यीभाव-नायां भवति एव प्राणप्रसरोपयोगः, ग्राहकतायां तु एकघनायां न एष क्रम इत्याह **'ततः'** इति प्राणमयोपरोहात् यद्यपि वेद्यो वस्तुतः, तथापि ग्राहकीभावभूमिकारूढो न तथा; तथात्वेऽनवस्था भिन्ने वेद्ये ग्राहकान्तरस्य अपि ग्राहकान्तरापेक्षणादित्यादिः । **'अत एव'** इति यतो न ग्राहकापेक्षा ग्राहकतायां, ततः । **'शरीरमपि'** इति स्फुटो यस्य वेद्यभाव इति अपिः । **'आन्तर-स्पर्शरूपम्'** इति नेत्रनिमीलनादावपि स्थूलोऽहमित्यादिप्रत्य-यात् । **'अयम्'** इति ग्राहकान्तरापेक्षं स्पन्दग्रन्थमभग्नं पठन्

'यतः करणवर्गोऽयम्......... ।' ( का० ६ )

इत्यादि समग्रकरणार्थं स्मारयति । ननु एवं चेत् देहस्य चेतन-रूपावेशः, तर्हि पूर्णः स्वातन्त्र्यलाभः कस्मात् न भवतीत्याशङ्क्य आह **'शरीरगतरूपादीनाम्'** इति । **'इदन्तायाः'** इति पञ्चमी हेतौ । अहमित्येकरसेन अनुवेधे तु यदा इदन्ता आच्छा-दिता भवति भावनासात्म्यादीश्वरसदाशिवसंविदि इव तुर्यद-शायां रसविद्धताम्रकनकन्यायेन, यदावा सर्वथैव प्रध्वंसिता विद्राविता वा भवति तुर्यातीतदशायां शाक्तसंविदि इव तन्निज-रूपसम्यग्विद्धकनकरूपतात्यन्तजरणापादिततत्संस्कारवशपीतल-तावशेषविद्रुतरसन्यायेन; तदा पूर्णस्वातन्त्र्योल्लास एव देह एव सति अपि निःशेषविभूतिलाभात् सदाशिवादिशरीरवत् । एवं प्रसङ्गादुक्त्वा प्रकृतमेव सुखादिप्रमेयस्य स्वसंवेदनकाले प्रसरा-नपेक्षत्वमनुबध्नाति **'मनसामपि च'** इति । एवं स्थूलप्रसर-

णस्वभावः संवेदनपूर्वकः प्राणप्रसरः सवेद्येऽपि नास्तीति उक्तम्, अबुद्धिपूर्वकस्तु ईश्वरेच्छाकृतो भस्त्राध्मानतुल्यः सोऽपवेद्येऽपि अस्ति। यदितु शान्ताङ्गारज्वलनन्यायेन अन्तरपि सूक्ष्मस्पन्दो विचार्यते, तदा अस्तु प्राणापानयोगः सूक्ष्मः; सैवतु समानतेति दृढमेतदेव। तदेव पक्षान्तरेण दर्शयति '**अथवा**' इति ॥१९॥

एवं सर्वत्र प्रमातृविषयेऽवस्थात्रये प्राणादित्रयस्य प्राधान्यमुक्तम्, तद्दृढतावशेन एवहि सति अपि प्रतिक्षणमनेकवेद्यदेहत्वे भावभूतशरीरविभागो भट्टश्रीकल्लटादिभिः श्रीशिवसूत्रे

'प्राणाख्यनिमित्तदार्ढ्यम्.........।'

इत्यत्र उक्तः। अधुना लोकोत्तरप्रमातृविषये दशाद्वये उदानव्यानप्रधानतां दर्शयति सूत्रेण

**मध्योर्ध्वगाम्युदानाख्यस्तुर्यगो हुतभुङ्मयः।**
**विज्ञानाकलमन्त्रेशो व्यानो विश्वात्मकः परः ॥२०॥**

प्राण एव हृदयभुवि मध्यस्थाने विश्रान्तः समानतां प्रतिपद्य यदा पार्श्वप्रवाहविच्छेदात् तेन एव ऊर्ध्वं सुषिरमार्गेण प्रवहति, तदा ऊर्ध्वमा समन्तादनितीति उदानः। सच भेदं दहन्नग्निकल्पः। तत एव स तुर्यभूमौ। स एवच तदानीं प्रमातेति विज्ञानाकलरूपात् मायोर्ध्ववर्तिन आरभ्य यत् सदाशिवप्रमात्रन्तं, तत् तस्य एवेति स एव विज्ञानाकलश्च, मन्त्रश्च विविधः, ईशश्च सदाशिवात्मेति कर्मधारयः; स एव तु समस्तं देहवर्ति तत्त्वभुवनादि यदा व्याप्य आ समन्तादनिति, तदा परमशिवस्वभावस्तुर्यातीतरूपतया परः पूर्णो व्यानः इतीयता योगिज्ञानिप्रमातृविषयं रूपद्वयमुपादेयमुक्तम्, ज्ञानिनोऽपि तत्संवेदनलक्षणस्तदावेशात्मैव, योगिनस्तु बहिर्देहान्ततया विभूतये भगवतश्च। सकला एव प्रसरणविश्रमणयोगात् प्राणापानरूपं द्वयम्,

प्रलयाकला विज्ञानाकलाः समानः, मन्त्रादय उदानः, शिवरूपता व्यानः,—इत्यपि दर्शितमिति सूत्रार्थः । तमवतारयति '**उदान**' इत्यादिना । निदर्शनमुदाहरणम्, विज्ञानाकलादि विषयः तुर्यादिलक्षणमूर्ध्वभाक्त्वादीति विभागः, समानदशापूर्विका इयं दशेति '**पार्श्वद्वय**' इत्यादिना '**लभते**' इत्यन्तेन दर्शयन् पूर्वपूर्व उत्तरोत्तररूपमापद्यते इति सूचयति '**यद्यपि**' इति । ततश्च तौ प्रवाहौ नष्टावेवेति कथं प्राणापानौ मध्ये ऊर्ध्वेन एकतापन्नौ प्रवहत इति वृत्तौ भणितम् । नहि गतिरेव स्थितिर्भवतीति भवति, प्राणापानयोश्च कथं व्यतिरेकेण तिर्यक्प्रवाह उक्तः इति आकूतम् । एतत् प्रतिसमाधत्ते '**तथापि**' इति । '**पञ्चस्वरूपतया**' इति एक एव वायुर्धर्मी पञ्च रूपाणि प्रतिपद्यते इति निर्दिष्टमिह । ततश्च प्राणापानशब्देन स वायुरेव उक्त इति उपपन्ना तस्यैव उदानता । तदाह '**चिरकाल**' इति तया प्रवाहो धर्मो युक्त इति व्यतिरेकनिर्देशो निर्दोषः । तदाह '**धर्मधर्मिभावोऽपि**' इति । '**उक्तम्**' इति समानरूपता, तावती सेति यावत् । द्वन्द्वं द्वैतदृष्टिः । यथा तृतीयं चक्षुरग्निस्वभावं हेतुत्रयात्, तथा सोऽपि,—इति सम्बन्धः । यत् विज्ञप्तं मया

> 'ब्रह्मादिकीटान्तमनन्तकं यल्लोकत्रये वेदकचक्रवालम् ।
> तद्द्वैतदृष्ट्यैव स्ववर्णमित्थं तदीयचक्षुर्युगलं व्यनक्ति ॥
> इत्थं विमृश्याहमनन्तशक्तिं विश्रान्तधीर्द्वैतदृशं जिहासुः ।
> त्वद्भक्तिसन्दर्शितशुद्धमार्गनिरर्गलीभावितभूरिभावः ॥
> समं समग्रोद्गतवेदनाख्यबिन्दुस्थनेत्रान्तरशोभमानम् ।
> भवन्तमन्तःकृतविश्वरूपमद्वैतदृष्टिं शिव संश्रितोऽस्मि ॥
> यत्तत्परं धाम यदन्यधामविध्वंसनाधायि······· ।'

इत्यादि । एतदेव संवादयति '**उक्तं च**' इति सदसती सृष्टि-

संहाररूपे प्राणापानदिनरात्रिजन्ममृत्युरागद्वेषादिरूपे परस्परा-व्यभिचारिणी यदा द्वन्द्वरूपतासङ्घट्टयोगेन मध्यं प्रविशतस्तदा प्राणार्कापानचन्द्रयोर्भोक्तृभोग्यभावेन अन्योन्यसङ्घर्षात्मकमेलनात् झगिति उद्गत ऊर्ध्ववाही यो हुताशनः सर्वस्य अर्पितस्य इदन्ता-पदपतितस्य भोग्यग्रामस्य ग्रसिता, यदागमः

'शुचिर्नामाग्निरुद्भूतः सङ्घर्षात् सोमसूर्ययोः ।
मध्यनाडीमध्यसंस्थबिन्दुसूत्ररुचित्रया ? ॥'

इति, एतदुदानस्य परमं प्रधानं रूपं ब्राह्मणा ब्रह्मणि व्यानमये वक्ष्यमाणे विश्रान्तिभाजो विदुस्तदारोहे तदुदानभूमिकायाः सो-पानकल्पत्वात् । अत एव मायामलदाहप्राधान्येन अद्वैतप्रधान-तायां विशेषवैष्णवाद्यागमेषु विष्णुविरिञ्चादेरपि

'वीरेश्वरतोदये भिन्नप्रमेयप्रसरः ।'

इति उक्तपूर्वरूपपराक्रियया तृतीयनयनस्य दर्शितमेव उन्मी-लनमिति अलम् । अस्यां दशायां विज्ञानाकला व्यवस्थिताः,—इति सम्बन्धः । ते च पूर्वमेव उक्ताः । ननु इयं निर्मला दशा, तस्यां ते कथमित्याशङ्क्य आह यतोऽत्र दशायां शुद्धिरस्ति मल-द्वयस्य मूलत एव अभावात्, आणवमलस्य अपि अनात्मनि पुर्यष्टकादौ जडे आत्मभावाभिमानः,—इत्येवंभूतस्य निवृत्तेर्बोध एव आत्मत्वाभिमानात्; नतु अशुद्धिरूपो विपर्ययः, विज्ञाना-कलानां च एतद्रूपमित्यतो हेतोरस्यां दशायां तेऽवस्थिताः । ननु एवमागमे तेषां बहुशाखः सुषुप्तावस्थायोगः । यदुक्तम्

'अकलौ द्वौ परिज्ञेयौ सम्यक् स्वप्नसुषुप्तयोः ।' (मा० वि० २।२८)

इति,

'त्रयोदशात्मके भेदे स्वरूपमकलावुभौ ।
प्रलयाकलभेदेऽपि स्वं विज्ञानाकलावुभौ ।' (मा० वि० २।३०)

इति, तत् विरुध्यते । नेत्याह **'तेषां च'** इति । इहतु संसारादुत्तितीर्षतः सा एव उपादेया प्रथमा अवस्था या भगवत्स्वरूपापेक्षया हेयतमा अधमस्य प्रथमं प्रबुभूषत इव आपतितसेनापतित्वपरित्राणप्रकारसदृशी दशेति, ततस्तुर्यत्वेन गणनमिति आशयः । **'मन्त्रेश्वरा अपिच'** इति मन्त्रेशशब्दो व्याख्यायते । **'अस्यामेव'** इति तुर्यायाम् । **'यद्यपिच'** इति ततश्च पूर्णरूपलाभात् तुर्यातीतता युक्तेति यावत् । मन्त्रशब्दात् पृथगेव ईशशब्द इत्येवं व्याचष्टे **'यदिवा'** इति । **'अनुन्मीलितविमर्शाः'** इत्येतत् मन्त्रेषु दृष्टान्ताभिप्रायेण पुनरनूदितम् । **'तत्रैव'** इति तुर्यदशायाम् । तथा ईश्वरोऽपि तुर्येऽवस्थानं यस्य तुर्यावस्थ एवेति सम्बन्धः । ननु बहवस्त उक्ताः । आह **'तदा न जानाति'** इति । **'ईश्वरश्चासौ'** इति अत्र एकत्वं निर्विवादमितिभावः । कर्मधारयं जातिव्यक्त्योरेकताभिप्रायेण समर्थयते **'तस्याश्च'** इत्यादिना । ननु अत्र व्याख्याने मन्त्रेश्वराः केन सङ्गृहीताः । मन्त्रपदेन तज्जातीयत्वादीशपदेन समानवाच्यताकृतेन तन्त्रन्यायेनेति दर्शयति **'अथवा'** इति । **'तास्ताः'** इति । सवेद्यापवेद्यादिरूपतया मलतानवं यथा प्रकृष्यमाणं विविधभूमिकोद्भावनं करोति, तथा कर्तृता अपि क्रमेण प्रकृष्यमाणेत्यर्थः । **'ईश्वरशक्त्यावेशात्'** इति अहमितिप्रमातृशक्त्यावेशात्, प्रमातृविशेषरूपता समला निर्मला कर्तृतातिशयवती च तस्यैव युक्तेति यावत् । **'व्यानोऽपि'** इति **'व्यानो विश्वात्मकः परः ।'** इत्यत्र । **'विवृतम्'** इति वृत्तौ । **'पूर्वम्'** इति सूत्रवृत्तिभ्याम् । **'व्यान'** इति व्याचष्टे **'तुर्यातीतपदे तु'** इति प्रवहणव्यापारासंस्पर्शनहेतुः, देशकालभेदापेक्षं गमनं प्रवहणं, देशकालावपिच अत्र अहन्तैकमात्रसारजातौ; नतु कथ-

ञ्चित् भिन्नाविति। **'विश्वात्मकः'** इत्यनेन शब्देन क्वचिदीश्वर उक्तः, इहतु शिव एवेति दर्शयति **'यद्यपिच'** इति। प्रथमव्याख्याने मन्त्रेशपदमेकमिति चेतसि निधाय आह **'अथवा'** इति। **'प्रथम'** इति अयं हि पूर्णतायाः प्रारम्भो विज्ञानाकल इव निर्मलतायाः। प्रलयाकले मायाख्यमलाभावेऽपि न निर्मलता कार्ममलयोगेन तदभावस्य अनात्यन्तिकत्वात्। **'अस्य'** इति ईश्वरस्य **'वेद्यरूपतापरित्यागेन'** इति। क्रमेण संवेदनं वेद्याकारतामवभासप्राधान्येन स्वीकुर्वाणं तदाकारसौक्ष्म्यात् बिन्द्वर्धेन्दुभूमी प्रतिपद्य तद्ध्वंसतमोरूपतया निरोधित्वादवभासभागे न्यक्कृते विमर्शभागस्वीकारे शब्दनभागविश्रान्त्या प्राणपथावलम्बिक्रमसौक्ष्म्यात् नादनादान्तरूपतामारोहति, ततोऽपि प्रवाहात्मकवायुरूपताप्रक्षये सङ्कोचत्यागतारतम्येन शक्तिव्यापिनीसमनस्कोन्मनस्कभावं प्रतिपद्यते, परतः शुद्धस्वभावोन्मीलने शुद्धात्मतया परमशिवतामिति। आस्तामेतत्। तदेव आह **'प्राणशक्तिः'** इत्यादि परमेश्वराधिष्ठिता परमेश्वरोन्मेषमात्ररूपा चेत्यर्थः। **'कल्पशब्देन'** इति वृत्तिगतेन। कल्पशब्दः स्वभाववाची। तथाहि परमेश्वरनिःश्वसितरूपः समस्तोऽयं प्रमेयप्रमातृवर्गः। तत्र उक्तं

> 'भूततत्त्वाभिधानानां योऽधिष्ठेयः स उच्यते।
> पिण्डस्थ इति तं प्राहुः पदस्थमपरं विदुः॥
> मन्त्रास्तत्पतयः सेशा रूपस्थमिति कीर्त्यते।
> रूपातीता परा शक्तिः सव्यापाराप्यनामया॥
> निष्प्रपञ्चो निराभासः शुद्धः स्वात्मन्यवस्थितः।
> सर्वातीतः शिवो ज्ञेयो यं विदित्वा विमुच्यते॥'

(मा० वि० २।४२)

इति। एवं परमेश्वराभिप्रायेण व्याख्याय अस्मदाद्यभिप्रायेण व्याचष्टे **'योगिनां तु'** इति। **'तदपेक्षया'** इति प्राणादि-ग्राहकापेक्षया, युक्तिराभाससंयोजनवियोजनप्रकारसहस्राभास-परामर्शः, तया प्रतिपादितायां **'असौ'** इति आगमार्थसारः **'बहु वितत्य'** इति वितत्य विपुलं न विहित इत्यर्थः,—इति शिवम्॥ २०॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचितायामीश्वर-प्रत्यभिज्ञाविवृतिविमार्शिन्यामागमाधिकारे प्रमातृतत्त्व-विमर्शो द्वितीयः॥ २॥

**समाप्तश्च अयमागमार्थसंग्रहाधिकारः॥ ३॥**



# ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी ।

महामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचिता ।

## तत्त्वसङ्ग्रहाधिकारः ।

### अथ प्रथमो विमर्शः ।

बैन्दवममृतरसमयं वेद्यं योऽनुत्तरे निजे धाम्नि ।
पूर्णीभावयतितमाममृतेशं तं नमस्यामि ॥

एवं स्वप्रकाशमात्मतत्त्वं ज्ञानक्रियात्मकशक्त्यप्रतिघातात् महेश्वररूपं वितत्य युक्त्यागमोपबृंहितमधिकारत्रयेण उक्तं, तदेव सङ्क्षेपेण स्वभ्यस्तज्ञानत्वज्ञानित्वयोगित्वसिद्धये भावनाद्युपयोगितया शिष्यधियि निवेशयितुं तत्त्वार्थसङ्ग्रहं श्लोकैः पञ्चदशभिर्दर्शयति

'स्वात्मैव सर्वजन्तूनाम्············· ।'

इत्यादिभिः

'·····················जानाति च करोति च ।'

इत्यन्तैः । तत्र श्लोकेन पारमार्थिकं स्वरूपमुक्तम्, ततः प्रमातृ-प्रमेयतत्त्वदर्शनदिशा नवभिर्बन्धतत्त्वं, पञ्चभिः प्रत्यभिज्ञात्मकं मोक्षतत्त्वमिति विमर्शस्य तात्पर्यम् । अथ ग्रन्थार्थो निरूप्यते

स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः ।
विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहितः ॥ १ ॥

तत्र सूत्रमवतारयति **'इदानीम्'** इत्यादिना विततामिधा-

नानन्तरम् । तेन अनुन्मीलितवैतत्या एव उपोद्धातेन अनुगृहीताः, उन्मीलितवैतत्यास्तु पुनः संक्षिप्ततत्त्वार्थाभिलाषिणोऽत्यन्तवैतत्यभीरवोऽपि मध्यमवैतत्याभिलाषिणोऽनेनेति अपौनरुक्त्यमिति दर्शयति । यत् मुनिः

'इष्टं तु विदुषां लोके समासव्यासधारणम् ।'

इति । जन्तुपदे भरं दर्शयति **'इह'** इत्यादिना । तेन इयदविशेषेण उपदिश्यते 'पुरुष एवेदं सर्वम् ।' इत्यादि । ततोऽस्य उपदेशस्य महाविशेष उक्तः । अत एव श्रीपरमेष्ठिपादैः श्रीशिवदृष्टौ **'सर्वभावाः शिवः, सर्वभावानामात्मा शिवः'** इति न शिवदृष्टिरुक्ता, अपितु **'तेषु स्वयमस्फुरत्ताधर्मसु य एष स्फुरन्नात्मा, स शिवः'** इति । एतच्च आदावेव अभिहितम् । **'अपितु'** इति स्वात्मैव सन्नीश्वरः, नतु राजवत् पृथक् वर्तमानः सन्नीश्वरः । ईश्वरः कीदृक् सन्नीश्वर इति प्रश्ने एवमुक्तः, ईश्वरः केन ज्ञातेयेन जन्तूनां संबन्धी, येन तेषामीश्वर इति प्रश्ने वा । स्वात्मैव असौ तेषां भवति, नतु ते केचिदन्ये इति । तदाह **'यदि वा'** इति । **'पूर्वोक्तः'** इति विश्वशरीरः । **'कः'** इति जन्तूनां केन संबन्धेन असौ संबद्ध इति यावत् । तत्त्वज्ञानं हि ज्ञेयनिष्ठं, ज्ञेयं च विश्वमिति तत्पृष्ठे तत्त्वोपदेशावकाश इत्याशयेन आह **'कस्य अवस्थास्वरूपम्'** इति । **'तदनन्तरं हि'** इति तुर्यरूपत्वादवरूढं हि संवित्तत्त्वमव्यवहितमेव विश्वभेदं स्वीकरोति, तुर्यातीतत्वावरूढं मध्ये तुर्यदशां श्रयत् विश्वभेदं स्वीकुर्यादिति । तया अस्य विश्ववृत्तान्तो व्यवहितः । ननु एवं तुर्यातीतो विश्ववृत्तान्ते सर्वथैव न वर्ण्यः । न वर्ण्योऽसौ, तया तु व्यवहितो वर्ण्य इत्याह **'तस्या अपि'** इति । **'अथवा'** इति अस्यां व्याख्यायां

तुर्यातीतमपि तदीयां प्रथमभूमिं तुर्यान्त्यभूमिकां स्पृशता स्पष्टं स्पृष्टमेव । यदाह '**आदिभूमिकायाम्**' इति प्रथमोपादेयता ततः प्रभृति मलविगलनारम्भात् । '**अखण्डितग्राहक**' इत्यादिकं वृत्तिगतं महापदं व्याचष्टे '**यत्तत्**' इति । अनेन ग्राहकपदं व्याख्यातम्, अखण्डितपदं व्याचष्टे '**यत्र**' इत्यादिना '**अखण्डित**' इत्यन्तेन । '**तथा**' इत्यादिना ग्राह्यपदं व्याचष्टे, '**तत्र**' इत्यादिना तद्विशेषणम् '**अखण्डित**' इति, '**तयोः**' इत्यादिना मेलनापदम् । तयोरिति ग्राहकग्राह्ययोः । '**परस्पर**' इति । अखण्डितपदेन ग्राहकस्य ग्राहकान्तरात्, ग्राह्यस्य ग्राह्यान्तरात् न विच्छेद इति दर्शितम्, अमुना तु परस्परतोऽपीति । उपबृंहितपदं विवृणोति '**निराकाङ्क्ष**' इत्यन्तेन । सर्वमर्थं संक्षिपति '**अन्तःकृत**' इति ॥ १ ॥

ननु एवं कस्य को बन्धो यदवमोचनाय अयं यत्न इत्याशङ्क्य आह सूत्रं

**तत्र स्वसृष्टेदंभागे बुद्ध्यादिग्राहकात्मना ।**
**अहङ्कारपरामर्शपदं नीतमनेन तत् ॥ २ ॥**

एवं स्वात्मनि महेश्वरे स्थिते तत्रैव स्वात्मदर्पणे तेनैव स्वातन्त्र्यात् यः सृष्टः संकोचपुरःसरमिदंभागः, तन्मध्ये यत् बुद्धिप्राणदेहादिरूपमिदन्तया वेद्यं तद्भिन्नस्य वेद्यस्य ग्राहकत्वसमुचितं यतोऽस्य इदन्ताभिभवासमर्थेन ग्राहकस्वभावभूतेन अपूर्णेन कृतकेन अहम्भावेन परामर्शो भाति । स तथाभूतोऽहं सुखीत्यादि ग्राहकः सृष्टः, सच बद्धस्तस्य मोक्ष इति सूत्रार्थः । अवतारणमाह '**इदानीम्**' इत्यादिना । '**तदभेदे**' इति तस्य आत्मन ऐक्येऽपि तस्माच्च आत्मनो ग्राहकग्राह्यराशेरव्यतिरेकेऽपि । उपपत्तौ हेतुः '**मायाशक्तेः सामर्थ्यात्**' इति । '**प्रक्रमते**' इति श्लोकनवकस्य

इयत् तात्पर्यमिति आशयः । '**तत्र**' इति वैयधिकरण्येन विवृत्य सामानाधिकरण्येन विवृणोति '**तस्मिन्वा**' इति वैयधिकरण्यं च उभयथा सूत्रव्याख्यानावसरे योजितमेव । '**यद्वर्तते**' इति तन्मध्यगतमेवेत्यर्थः । '**तेनैव**' इति ईश्वरेण । '**प्रथितम्**' इति णिचि प्रकटीकृतमित्यर्थः । '**इदन्तयापि**' इति स्फुटेन वेद्यत्वेनेति यावत् । '**उक्तमेव**' इति संसरणं कस्य भवतीत्यस्यां प्रमातृचिन्तायाम् । '**तत्त्वार्थ**' इति परमार्थोपदेशप्रक्रम इत्यर्थ इति वक्तुं पूर्वं निर्देशश्चित्स्वरूपस्येति संबन्धः । '**तत्रैव**' इति चित्स्वरूपे । यत् स्पन्दशास्त्रं

'·········तत् प्रयत्नेन परीक्ष्यं तत्त्वम्····· ।' (१।७)

इति । तेन उपोद्धाते

'तथाहि जडभूतानाम्·········· ।' ( १।१।४ )

इति जडोपक्रमं यदभिधानं, तदतिमूढान् प्रति; इदं तु प्रबुद्धान् प्रतीति विशेषोऽत्र दर्शितः । न केवलं

'स्वात्मैव सर्वजन्तूनाम्············ ।' ( ४।१।१ )

इत्यनेन पूर्वमस्य निर्देशः, यावत् सूत्रान्तरेऽपि एतदेव अनुसृतमित्याह '**तथाहि**' इति । स्वग्रहणेन पूर्णचित्स्वरूपमेव परमेश्वरात्मकं निर्दिष्टम् । '**उद्भाव्य**' इति

'एवमन्योन्यभिन्नानाम्··················· ।' (१।३।६)

इत्यादिना । '**अनेन हि**' इति पूर्वोक्तेन सूत्रद्वयेन । '**तदपिवा**' इति ज्ञानम् । कर्तृ नेति पूर्वेण संबन्धः । '**तिरोधत्ते च**' इति आत्मानमावृणुते निद्राद्यवस्थासु—इति यावत् । कर्तृस्थभावकत्वात् यगभावः । आत्मनेपदं तु ञित्त्वादेव । '**तमः**' इत्यनेन तिरोधत्ते इति व्याख्यातम् ॥ २ ॥

ननु एवमपि अस्तु, तथापि न ईश्वरात् व्यतिरिक्तोऽस्ति

यस्य बन्धो भवेत्; बुद्ध्यादेश्च अहम्भावो निजमेव वपुः प्रकाश-परामर्शपरमार्थत्वात्, तत् सोऽपि न अस्य बन्धमापादयति । यदवतरणविवृतिः '**वेद्यैकदेशेऽपि**' इत्यादिः, अनेन हि अह-म्भावाभिषिक्तस्य अपि बुद्ध्यादेर्न बन्धरूपत्वं समर्थितमेव भवे-दिति उक्तम् । तस्मात् बन्ध उपपादनीय इत्याह

**स स्वरूपापरिज्ञानमयोऽनेकः पुमान् मतः ।**
**तत्र सृष्टौ क्रियानन्दौ भोगो दुःखसुखात्मकः ॥ ३ ॥**

सत्यं, न कस्यचित् कश्चन बन्धो नाम; वस्तुतश्चित्स्वभावः स्वतन्त्र एव एकः शिव इति, किन्तु तस्यैव अनुत्तरात् स्वातन्त्र्यात् यदा सङ्कुचिता संविदवभाति, तदा स्वस्य पूर्णस्य रूपस्य यद-परिज्ञानं सर्वस्यैव पूर्णानन्दौत्सुक्येन हेयाभासस्तत्स्वभावस्तन्नि-बन्धनस्तेनैव ओतप्रोतोऽख्यातिपरमार्थः प्राणशून्यदेहादिसङ्कोच-वैचित्र्यचर्चितस्तत एव अनेकः पुमानभिमतो लोके साङ्ख्यादि-शास्त्रे च । सच भोक्ता बद्धः, भोगश्च नाम—तत्र तस्मिन्ननेकत्र पुंसि यौ सृष्टौ कल्पितौ क्रियानन्दौ क्रियाज्ञानशक्ती विमर्शप्रकाश-मय्यौ, ते एव क्रमेण सुखं दुःखं च; मध्ये तु विश्रमात्मकं तमो मायामयमिति स एव भोगः । आशङ्कापरिहारपरत्वेन सूत्रमव-तारयति । '**वेद्यैकदेशेऽपि**' इत्यादिना '**अपि**' इत्यन्तेन आशङ्का सूचिता, शेषेण तत्परिहारः । '**पुंस्त्वम्**' इत्यस्य सौत्रस्य '**पुमान्**' इति पदानुसारिणो व्याख्यानम् '**अणुत्वम्**' इति बद्धत्वमिति यावत् । '**अन्योन्यभेदः**' इति अनेकपदं सौत्रं स्पृशेत्, '**तस्य भोगः**' इति चरमं सूत्रार्धम् । '**एतत्**' इति बुद्ध्यादिरूपम् । '**अपरिज्ञानं च तथा**' इति परिमितत्वादपि अन्योन्यरूपम् । तेन यस्य यत् प्रसिद्धं तेन तस्य प्रसिद्धं व्याख्येयं लक्षणस्य सर्वत्र एवंरूपत्वादिति आशयः । '**आणवम्**' इति

अणुत्वोत्थापनात् । '**एतत्**' इति परस्वरूपापरिज्ञानम् । '**अत एव**' इति परिमितत्वमपरिज्ञानमेव, ततस्तत्प्रतिपक्षेऽपि द्वितीय-प्रतिपक्ष एवेति । '**यद्वा**' इति सुखी अहं, दुःखी अहं धनेन विद्यया संभोगेनेत्यादिवृत्तयः, तासु तु पुनरपि एकाहम्भावानु-सन्धानादनेकत्वेऽनवक्लृप्तिर्वाशब्देन द्योतिता । '**अनेन**' इति वृत्तिग्रन्थेन । खण्डशब्देन अतिदीर्घगोनासशरीरगताभिन्नजीवत्वे खण्डीकरणे खण्डखण्डानां पृथग्जीवत्वं पुनरेकीभावापत्तावेक-जीवतेति ध्वनता अणुत्वमपरापरशब्देन च परिमितत्वं दर्शि-तम् । अनेकत्वापरिज्ञाने तु स्वशब्देनैव उक्ते । '**तिरोधत्ते**' इति अख्यातिं दर्शयति । अत्रैव उपपत्तिं स्मारयति '**विपर्यासे हि**' इति । पूर्वं यदुक्तं, तदेव संक्षिप्य पुनराह '**यावद्धि**' इति । असत्ख्यातिमपास्य अख्यातिं घटयति '**केवलम्**' इति । '**ते-षाम्**' इति प्रमात्रन्तराणाम् । '**तैः**' इति प्रमात्रन्तरैः । '**तच्च**' इति प्रमात्रन्तराणां तथाप्रतीतेरभाव इति वाक्यार्थरूपम् । ननु व्यवहारेण किं प्रयोजनं येन उक्तं '**व्यवजिहीर्षुणा अवश्य-ज्ञातव्यम्**' इति । अत्र आह '**व्यवहारपथे**' इति । '**इहापि**' इति पुंस्वरूपविचारे । '**स च**' इति आश्रयः । पूर्णेन अहम्भावेन अप्रत्यभिज्ञातमिति स च असः । '**अन्यथा**' इति विश्वपूर्णाहम्भावप्रत्यभिज्ञाने । आद्यमर्धश्लोकं व्याकृत्य द्वितीयं व्याकुरुते '**ये च**' इत्यादिना । '**निर्मितौ**' इति 'पुमान् स्त्रिया' (पा०सू० १।२।६७) इति एकशेषः । '**प्रतिपादयिष्यते**' इति

'सत्तानन्दः क्रिया पत्युः……………… ।' (४।१।६)

इत्यत्र । '**निर्मितम्**' इति एतच्च सूत्रे '**अहङ्कार**' इति करोतिना उक्तम् । '**तत्र**' इत्यमुं भागं व्याचष्टे ग्राहकाकारगतशब्देन । तस्यैव व्यवच्छेद्यं दर्शयति '**परकीय**' इत्यादि । '**योगिनः**' इति

यस्य तद्वेदनेऽपि संसारिवत् ग्राहकाकारगतसुखदुःखान्तरयोगेन अपि भोगः संभाव्य इत्येवंपरं योगिपदं, नतु अयोगिनामपि परसुखादिसंविदेव भोग इत्येवंपरम् । **'बुद्धौ च'** इति ग्राहकत्वेन अभिमन्यमानायामितिभावः । बुद्धिस्तावत् भिन्नावभासा ग्राहकीकृता अपि परिमिता, तन्निष्ठे अपि आनन्दक्रिये अवश्यं तथाभूते एव भिन्नावभासविषयत्वेन वा भिन्नावभासे । **'तदा'** इति ततः परिमितत्वादित्यर्थः ॥ ३ ॥

**'सृष्टौ'** इत्यस्य संग्राह्यव्यवच्छेद्यविभागदर्शनाय सूत्रं

**स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।**
**मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ॥ ४ ॥**

स्वरूपाव्यतिरेकिणि विश्वत्र भगवतः प्रकाशविमर्शौ ज्ञानक्रियाशक्ती, क्रियाशक्तेरेव विजृम्भात्मिका सदाशिवेशपदे आच्छादनीयेदन्तोन्मेषदायिनी मायाशक्तिः । ता एता नैसर्गिक्यो भगवतो दृष्टाः । स्वरूपापरिज्ञाने तु भावेषु ज्ञानं क्रिया शुद्धमेव भिन्नत्वं प्रकाशविमर्शाननुगृहीतमिति पश्वपेक्षया प्रकाशः प्रकाशाप्रकाशत्वमप्रकाश इति प्रकाशक्रियानियमनात्मकानि सत्त्वादीनि । **'तन्मयत्वम्'** इति सुखादिमयत्वम् । **'मायाशक्त्या च'** इति । अनेन इदमाह—भगवति विशुद्धचिदात्मनि क्रियाशक्तिरेव स्वातन्त्र्यात्मिका विमर्शमयी, नतु मायात्वं तत्र किञ्चित्; निर्मातव्यभेदापेक्षया तु तदिति पशुरूपतानुलग्नैव माया । तत एव ज्ञानक्रियामायानां सूत्रे समकक्ष्यतया न उपादानमिति । **'अचिरात्'** इति सत्तानन्दसूत्रे (४।१।६) । अत एव **'प्रक्रमते'** इत्यवतारणिकायामुक्तमिहैव न तन्मयत्वं स्फुटीकरोति ॥ ४ ॥

ननु ईश्वरस्य इव ज्ञानादयः पशोरपि सत्त्वादय आगमेषु शक्तय एव किं न उक्ता इत्याशङ्कायां सूत्रं

**भेदस्थितेः शक्तिमतः शक्तित्वं नापदिश्यते ।**
**एषां गुणानां करणकार्यत्वपरिणामिनाम् ॥ ५ ॥**

भेदव्यवहारोऽयं विचार्यते । तत्र च सङ्कुचितचिन्मात्रस्वभावः पुरुषः, न अस्य नैसर्गिकं भावविषयं प्रकाशादिरूपं सर्वदा तत्प्रसङ्गात् । ततोऽन्यसंबन्धकृतं तत् । ततश्च तस्मात् शक्तिमत्त्वेन शङ्क्यमानात् पशोर्भेदेन स्थितानि यतः सत्त्वादीनि, ततो न शक्तिव्यपदेश्यानि । पुरुषश्च भोक्तृरूपात् स्वस्मात् तानि यतो भेदेन मन्यते, ततस्तदभिमानमहिम्ना परमभोक्तुरपि शक्तिमतो भिन्नानीति वस्तुतोऽस्य धरान्ताः शक्तिरूपा अपि न तथा । ननु पुरुषात् किमिति भेदेन स्थितानि इष्यन्ते । उच्यते इह करणकार्यात्मकं यदिच सुखादयः पुरुषाव्यतिरेकेण स्युः, तर्हि पुरुष एव करणमयो, नच असौ परिणामेन तद्वादस्य दूषित्वादिति स्वातन्त्र्येण पुरुषो विश्वमय इति । तथाच ईश्वर एव अयं, न पुरुषः कश्चित् । तस्मादप्रत्यभिज्ञानमये पुरुषस्वरूपे चिन्त्यमाने सत्त्वादयः पृथिव्यन्तपरिणाममयास्ततो भिन्ना एवेति पृथगेव तेषामागमेषु गणना युक्तेति सूत्रार्थः । तमवतारयति **'ज्ञानक्रिया'** इत्यादिना । **'न तथा'** इति शक्तित्वेन । अत्र हेतुः—भेदेन यदवभासनं पश्वपेक्षया तदभिमानकृतया च भोक्तुः सर्वस्मात् सत एव एतेषां भेदे इतिनीत्या परमेश्वरापेक्षया अपि, तेन सह शक्तित्वं विरुद्धम् । शक्तिर्हि न वस्त्वन्तरमिति भणितमसकृत् । **'भोक्तारम्'** इति परमं पशुं च । **'भोक्तुः'** इति परमात् पशोश्च । पशोः कुत्र उपयोग इत्याशङ्क्य आह **'ततोऽपिच'** इति मायाशक्तेर्हेतुभावेन अभिमतायाः । **'तदुपपत्तये'** इति पृथक्प्रथनस्य उपपत्तये । यो मायया उपकल्पितः, स प्रमाता तं सत्त्वादिकं धरान्तमहम्भावाविषयं मन्यते इति सम्बन्धः । ननु पशोरस्तु अस्य भेदः, परमभोक्तुस्तु कथम् । आह **'भोक्तृत्वेन कियता अपि'** इति । ततश्च एवमस्य अभिमानो—यो भोक्ता,

ततः सुखादिरूपं सत्त्वादि भिन्नमेवेति । अथ अयमभिमानो न आद्रियते, तर्हि न केचन सुखादयो, सत्त्वादयो, घटादि वा; अपितु ज्ञानादिशक्तय एव । तदाह **'शक्तिस्तु'** इति । तेन सत्त्वादिरूपतैव उद्भवन्ती शक्तिस्त्वन्यक्रियया उद्भवतीति आशयः । तथाभावस्य ज्ञातृत्वकर्तृत्वरूपस्य प्रसङ्गः शक्तेरेव अनुमीयते इति अन्यथा अनुपपन्नत्वादनुवादस्य । **'अन्वर्थः'** इति गुणः शेष उपकरणमित्यर्थः । **'तेषाम्'** इति मते इति शेषः । **'आगमे'** इति श्रीमङ्गलाशास्त्रे ॥ ५ ॥

ज्ञानशक्त्यादीनां पशुं प्रति सत्त्वादिगुणरूपत्वमुपपाद्यते

**सत्तानन्दः क्रिया पत्युस्तदभावोऽपि सा पशोः ।**
**द्वयात्मा तद्रजो दुःखं श्लेषिसत्त्वतमोमयम् ॥ ६ ॥**

पत्युर्विश्वप्रभोः सत्ता स्फुरत्ता भवने कर्तृतैव शुद्धविमर्शरूपा क्रियाशक्तिः, अन्यापेक्षावैकल्याच्च विश्रान्तिरूपत्वेन आनन्दशक्तिरिति । तदियं चिद्रूपतैव इयती । पशोस्तु सत्ता आनन्दः, तदभावो द्वयात्मा च । तत्र आद्यो यः सत्तानन्दभागः सेति सत्ता सत्त्वं प्रकाशसुखात्मकमिति यावत् । यस्तदभावः प्रकाशानन्दयोरभावः, स सत्त्वस्य अभावस्तमः आवरणरूपम् । द्वयस्य आत्मा व्यामिश्रस्वभावश्चित्रपतङ्गगतनीलानीलन्यायेन एकपरामर्शबलात् वर्तमानः, अत एव श्लिष्टे परस्परमिश्रे सत्त्वतमसी प्रकृते रूपं यस्य, तत् प्रकाशाप्रकाशरूपं दुःखात्मकं रजः । एकघनत्वे हि प्रकाशाप्रकाशयोः सुखमोहमात्रता पुत्रस्य तु व्याधितस्य प्रकाशः कल्याणस्य अप्रकाश इति, एतत् दुःखम् । इयमेवच पौर्वापर्येण चञ्चलरूपा क्रिया, अनुभयरूपं तु नास्ति यथा नीलं वस्तु धियि नीलानीलं तदुभयानुसन्धानधियि स्फुरेत् चतुर्थं न कल्पितायां न अकल्पितायां धियि भातुमर्हति । अनीलनीले

एव हि तदा भवेतामिति त्रय एव गुणा इति । अपिश्चार्थे । **'सत्ता'** इति आवर्तते । एवं सूत्रार्थमवतारयति **'सत्त्वादीनाम्'** इत्यादिना । **'परमार्थ'** इत्यादिना **'स्थितमेव'** इत्यन्तेन **'संविद्रूपतैव इयती'** इति

'सा स्फुरत्ता............................... ।' (१।५।१४)

इत्यादि यदुक्तं, तदेव स्मारयति । **'प्रतियोगिना'** इति अभावेन, तमपि हि सा व्याप्नोति तस्य अपि प्रकाशविमर्शजीवितत्वादिति हि उक्तम् । **'अभावप्रतियोगिनी'** इति, पशोस्तु स्वात्माभावप्रतियोगिनीति । अत्र हेतुः पारिमित्यं, तत्र अपि ग्राह्यतापादनम् । **'उपरञ्जनात्'** इतिनिर्वचनं व्याचष्टे **'अन्योन्य-'** इत्यादिना । ननु चतुर्थोऽपि गुणोऽनुभयरूपः कस्मात् न उक्त इति । आह **'अनुभयरूपत्वं तु'** इति । न कथञ्चित् प्रती, तिर्यस्य, तद्प्रतीतिरूपम् । एवं हि तत् किञ्चित् स्यात् यदि नीलमनीलं च मुक्त्वा उभयं नाम भवेत्; तदा अपि उभयमकल्पितं-तद्भावश्च अनुभयं कल्पनाबुद्ध्या विषयीक्रियते । नच उभयं ते मुक्त्वा संभवि । चित्रपतङ्गे रूपं नीलमिति च परामृश्यमनीलं चेत्येवमुभयं, नतु तत्त्यागेन उभयता तृतीया काचित् । तदाह **'तृतीया'** इत्यादि । एतदेव परिघटयति **'तथाहि'** इति । **'अनीलं च'** इत्यादिना अवभाससारत्वेन अभावस्य वस्तुत्वं प्रतिपादयति । **'एवंच'** इति वस्तुत्वे विरोधं दर्शयति । **'यत्'** इति उभयं नाम । नीलादनीलाच्च राश्यन्तरं न किञ्चिदित्येव द्रढयति **'तथाच'** इति । ननु एवं तृतीयो गुणः कथम् । **'अनुसन्धिबलात्'** इत्याह । **'तथापि'** इति । **'अप्रतीतिरूपम्'** इति यदुक्तं, तत् स्पष्टयति **'यत्पुनः'** इति । **'तद्धि'** इति यथा अस्माभिस्तृतीयो गुण इष्टस्तत एव उक्तं **'द्व्यात्मा'**

इति, '**द्वयं च**' इति, '**तदात्मा च**' इति, '**द्वयस्य वा आत्मा**' इति, '**उभयथापि**' इति, '**नीलतया च एकप्रतीतौ**' इति अनुसन्धिरूपायाम् । एवं तृतीयमुपपाद्य एतद्व्यतिरिक्तं चतुर्थं न किञ्चिदस्तीत्येतदुपसंहरति '**यत्पुनः**' इति । '**तत्**' इति नीलम्, '**अतत्**' इति अनीलम्, '**वस्तुप्रतीतौ**' इति '**न किञ्चित्**' इति शब्दमात्रमेवेति यावत् । तृतीयस्य तु अप्रतीतिरूपत्वं नास्तीति दर्शयति '**क्रिया तु**' इति । अत्रैव उपपत्तिमाह '**नहि**' इति । '**तदा**' इति क्रियाप्रतिभासे । ननु क्रिया चेत् दुःखं, भगवति सा अङ्गीकृतेति स दुःखी स्यात् । नेत्याह '**पूर्वम्**' इति

'स स्वरूपापरिज्ञानमयः·········· ।' ( ४।१।३ )

इत्यत्र सामान्येन निर्दिष्टस्य

'···············पशोः सत्त्वम्······ ।' ( ४।१।४ )

इत्यादौ

'················तद्भावोऽपि सा पशोः ।' (४।१।६)

इत्यादौ च यत् विशेषणमुपात्तं पशुपदं, तन्निमित्तकोऽयमर्थो लभ्यते—क्रियाया यत् रजोदुःखरूपत्वमयं मायीयः प्रकार इति । ततश्च इदं जातमित्याह '**मायापरपारे**' इति । '**अतः**' इति चिन्मय्याः क्रियायाः । एतदेव अन्योन्यवैलक्षण्यं शुद्धे पदे मायीये च स्फुटयति '**तद्विपरीतरूपा**' इति '**ननु**' इति च । ततोऽक्रमाविपरीता सक्रमा अणुत्वमाणवमल एव संस्कारानधिकोऽपि अधिक इव संविदि तत्पदे पशुत्वे, न चित्पदे तत्र अनाभासात्मनो विपरीतस्य कालनिदानस्य अभावात् । अत्र हेतुः '**तदा**' इति । ननु यदि ततश्चिन्मय्याः क्रियाया न ज्ञानं भिद्यते, तर्हि चिद्रूपापेक्षया कथं ज्ञानक्रिये भेदेन उक्ते

'स्वाङ्गरूपेषु···पत्युः············ ।' ( ४।१।४ )

इत्यत्र । एतत् परिहरति 'रौद्री' इत्यादि । पार्थिवमण्डं विचित्रसृष्टिप्रधानं ब्रह्मणा अधिष्ठितं, प्राकृतं तु स्फुटसंस्कारशेषतया स्थितिप्रधानं विष्णुना, मायाण्डं तु नीलसंस्काररूपतोन्मेषकलेति प्रत्ययप्रधानं संहारपदमिति रुद्रेण । तस्य भगवतो या क्रियाशक्तिः संहरणरूपा अवभासनप्रधानाया ज्ञानशक्तेरन्या, सा नेत्येवं प्रमातृप्रमेयाणां परस्परव्यवच्छेदात्मकशून्यताप्रधाना मायाशक्तिरिति उच्यते । सा च निषेधरूपा रुद्राधिष्ठिता शक्तिरपरदशासमासूत्रणरूपा सदाशिवेश्वरदशायामपि अस्ति । तत्र हि अहमित्यमुना रूपेण आच्छादनीय इदंभावोऽपरस्वभावः । स तया रुद्रसम्बन्धिन्या शक्त्या समुत्थापनीयः । संहरणरूपतया च शक्तेश्छिद्रूपता उचिता तस्यां दशायां परभागेऽपि न न उचिता । सदाशिवेश्वरता च परमपदात् न भिद्यते देशकालादिभेदाभावादिति तावानेव शिवनाथः, तत एव रुद्रेश्वरसदाशिवभूमयः परमेश्वरपदमय्यः इति तदधरवर्तिनां विष्णुब्रह्मादीनां क्षेत्रज्ञत्वं पशुत्वं च । यथा उक्तं

'भिन्नप्रमेयप्रसरे ब्रह्मविष्णू············ ।' (३।२।१)

इति, तथा नरेश्वरविवेकः

'··········साच दशा रुद्राधिदेवता ।
निषेधरूपाप्यैशाने पदेऽहं सर्वमित्यपि ॥'

इत्यादि । ततश्च रुद्रपदे तावदुभयं प्रकाशाप्रकाशलक्षणं मेलयन्ती ज्ञानशक्तिर्भेदेन व्यवस्थाप्यते इति संभाव्यमेतत् । तस्यां हि सत्यामिदन्तानिर्देश्यता भवति अपररूपा तदभिन्ना च, अहमिति पूर्णा परापि अस्ति संवित्, अत एव परापररूपा क्रिया-

शक्तिप्रधाना आगमेषु ईश्वरावस्था उक्ता; साच भगवति न भिद्यते तावद्रूपत्वात्संविद इति पूर्वं पत्युर्ज्ञानक्रिये भेदेन यत् निरूपिते, तत् न अयुक्तमिति ।। ६ ।।

एवं प्रमातृतत्त्वं पशुपतिभेदेन निरूपितम्, भोगश्च सुखाद्यात्मा यथायोगं निरूपितः; इदानीं प्रमेयस्य भोग्यात्मनस्तत्त्वं वाच्यम् । एक एवच अयं भोक्तृभोगभोग्यतत्त्वार्थविमर्श एकघनतयैव कर्तव्यो विमर्शविच्छेदो मा भूदिति प्रकरणमेकमेव इदं व्याख्यातम् । तत्र पत्यौ तावत् प्रमेयस्य इत्थं व्यवस्थेति निरूपयति

**येऽप्यसामयिकेदन्तापरामर्शभुवः प्रभोः ।**
**ते विमिश्रा विभिन्नाश्च तथा चित्रावभासिनः ।।७।।**

इह आभासा एव तावदर्थास्ते च परामर्शैक्येन कदाचित् मिश्रीक्रियन्ते यत्र स्वलक्षणता मिश्रताभवन एवतु कदाचिदनामिश्रा एव अवमृश्यन्ते यत्र सामान्यलक्षणता, उभयात्मानोऽपि असामयिकेन अकृतकेन अङ्गुल्यादिनिर्देश्यप्रख्येण इदम्भावेन सहजभेदावमर्शनरूपेण प्रभोरपि ईश्वरस्य अपि न केवलं सद्योजातबालादेर्गोचरीकार्याः, तेन सामान्यविशेषप्रकारेण चित्रं कृत्वा युगपदेकाहन्ताविश्रान्त्या अवभासनशीलाः । ईश्वरदशायां हि भावोल्लासनान्तरीयकतया संवित्सङ्कोचरूपं निषेध्यानुपरक्तनत्वर्थमात्ररूपं शून्यं रुद्राधिष्ठातृकं संवित्प्रकाशेनैव प्रकाशमानमहन्तानिषेधरूपामसामयिकीमिदन्तामुल्लासयति । एतच्च अनन्तरमेव निर्णीतम् । एवं पत्यौ प्रमेयवृत्तान्तः, परमपतौ तु भगवति प्रमेयकथैव न अस्तीत्याशयः सूत्रस्य । पूर्वापरं सङ्गमयन् प्रकरणावतारणे सूत्रमवतारयति '**एवम्**' इत्यादिना । '**यद्यपि**' इति बालदारकादेः । '**न केवलम्**' इति । इयता सूत्रे अपिशब्दः '**प्रभोः**' इत्येतदनन्तरत्वेन व्याख्येय इति दर्शितम् ।

ननु असामयिकेदन्तापरामृश्यत्वं बालेऽपि न प्रतीतम्, तत् कथं तत् वृत्तौ दृष्टान्तीकृतम् । प्रतीतमिति दर्शयति **'तस्य'** इत्यादिना **'अनुमानात्'** इत्यन्तेन । एतदेव घटयति **'यदिहि'** इति । **'स तु'** इति बालः । **'तस्य'** इति बालस्य । **'प्राक्'** इति साक्षात्कारसूत्रे । एवं दृष्टान्तं सूत्रेऽपिशब्देन सूचितं वृत्तौ स्फुटीकृतं परिघटय्य दार्ष्टान्तिके योजयति **'ते च'** इति **'अनेक'** इत्यादिपदेन स्वलक्षणात्मानः, **'पृथक्'** इत्यादिना तु सामान्यलक्षणरूपा निर्दिष्टाः । ननु प्रत्याभासं पूर्वं प्रमितिव्यापारश्चर्चितः, ततश्च सर्वदैव पृथगाभासा भान्ति; नतु मिश्रतयेत्याशङ्क्य एकाभासोऽपि कश्चिदन्तर्नीतस्तन्नान्तरीयकाभासवर्गो न नास्ति वाक्यपरामर्शसमुचित इति हृदये गृहीत्वा आह **'तत्र च घट'** इत्यादि । **'तथा'** इति घटइत्येकावभासस्य । नच अनेकाभासतामात्रादेव स्वालक्षण्यमित्याह **'देशकालादि'** इति । आदिग्रहणेन प्रमात्रन्तरग्राह्यत्वादि । देशादिकावभासान्तरासंभेदे तु सामान्यरूपतैव, नतु स्वलक्षणतेति दर्शयति **'अनेकावभास'** इत्यादिना । **'पुरः'** इति देशावभासः । **'अवस्थितः'** इति वर्तमानकालाभासः । एवं स्वलक्षणावभासं मिश्रं विचार्य सामान्याभासं विचारयति **'पुरोऽवस्थितावभातम्'** इति । अपिशब्दात् स्वातन्त्र्येण विकल्प्यमानता यद्यपि ईश्वरापेक्षया न अस्ति, तथापि साक्षात्कारोऽपि ईश्वरस्य उपपन्नः सामान्याभासस्तथा साक्षात्कार्याणामीश्वरे भासनादिति ध्वनति । अत एव **'ईश्वरस्यापि'** इति अपिशब्दं पठिष्यति । ननु पृथग्दीपसूत्रे (२।३।७) अविरुद्धाभासानां मेलनमुपपादितम् । विरोधाविरोधौ च नियतिशक्त्यपेक्षया पशुप्रमातॄन् प्रति, नतु भगवति कोऽपि विरोधाविरोधनियमः ततश्च नियमाभावे विषाणित्वाभासस्य पृथुबुध्नोद-

राकाराभासेन अपि किं न मिश्रता । ततश्च अस्मदुचिता एते कथं भगवति स्वलक्षणाभास इत्याशङ्कां दर्शयन् व्यपोहति '**तथा**' इति तेन उक्तेन प्रकारेण आभासानां यत् वैचित्र्यवत्त्वं मिश्रीकरणात्मकं, तत् यद्यपि भगवति न नियतं, तत एव ईश्वरापेक्षया घटोऽपि विषाणी, मण्डूकोऽपि जटाभारभास्वरः साक्षात्काररूप एव अवभाति; तथापि सृष्ट्या येऽनुग्रहीतव्या जन्तवस्तदपेक्षया नियतिशक्तिमहिम्ना विषाणित्वसास्नादिमत्त्वनियमोऽपि न न प्रथते तेन अधिप्रथा तत्र अस्तु, नतु अस्मदुचितप्रथा तत्र न अस्तीति । ननु ते भावाः किं पूर्वसृष्टा एव केचन स्थिताः । नेत्याह '**ते च**' इति । '**ते न**' इति ते नैवेति यावत् । अस्मदादिदृश्या हि अर्थास्तेनैव भगवता निर्मीयन्ते । प्रजापतिमातापितृकुम्भकारादेस्तु निर्मातृताभिमानो यः, सोऽपि तस्यैव सृष्टिरिति उक्तमसकृत् ॥ ७ ॥

एवं सदाशिवेशतायां प्रमेयवृत्तान्तो निरूपितः, परमशिवस्य तु इयदेव प्रमेययोगित्वं, न पृथक् किञ्चिदिति । अतः परं पशुं प्रति प्रमेयवृत्तान्तः श्लोकत्रयेण उच्यते । तत्र प्रथमेन पीठबन्धं करोति

**ते तु भिन्नावभासार्थाः प्रकल्प्याः प्रत्यगात्मनः ।**
**तत्तद्विभिन्नसंज्ञाभिः स्मृत्युत्प्रेक्षादिगोचरे ॥ ८ ॥**

तुरीश्वरप्रमेयात् विशेषद्योतकः । ईश्वरस्य हि शुद्धविमर्शविषयाः सर्वे अर्थाः, नतु विकल्प्याः पशोरिवेति ते विशेषसामान्यरूपत्वेन धर्मिधर्मतया भिन्नावभासाः; तथा प्रतिप्राणि प्रत्यवस्थं च स्ववासनानुसारेण स्वयमवस्थापिताभिः प्रियोऽयं, शत्रुरयमित्येवंप्रायाभिर्विभिन्नाभिः संज्ञाभिर्भिन्नावभासाः प्रकल्प्या विकल्पनीयाः । तत एव सम्बन्धात्मकविद्योन्मेषेऽपि मायाविजृ-

म्भितप्रधानापोहनसारतया हानादानादिविषयीकार्यत्वेन अर्था भवन्ति नीलमिदं, गौरोऽहं, सुख्यहमिति सर्वथैव अवभासस्य विश्रान्तिधामत्वात्। कस्य क। आह प्रत्यगात्मनः प्रतिपुरुषमव्यामिश्रस्वसंवेदनावगमरूपत्वेन असंकीर्णदेहादिसंकुचिताहंप्रकाशात्मनः कृशोऽहमित्यादितत्तद्भिभिन्नसंज्ञाभिरुपलक्षितस्य स्मृतावुत्प्रेक्षणे संकल्पने अन्यत्र च विकल्पे विषयत्वेन। एतद्विकल्पप्रधान एवच सदा पशुरिति सूत्रार्थः। तं संक्षिप्य आह **'एवमिति'** न केवलं पशूनां भावाभासः, यावदीश्वरस्य अपि। **'स तु एवम्'** इति अविकल्प्यतयेति विशेषः। यद्वा ईश्वरशब्देन परमशिवः, तस्य अपि भावाभास एवमिति ईश्वरताद्वारेण। एवकारेण तोरर्थो व्याख्यातः। **'उपक्रमते'** इति तृतीये तु श्लोके निर्वाहयिष्यतीत्यर्थः। तुशब्दार्थं व्याख्यातुं पूर्वपूर्वप्रमातृतत्त्वावियोगं च उत्तरोत्तरप्रमातृभूमिषु दर्शयितुं पूर्वोक्तमनुवदति **'एवम्'** इत्यादिना **'अवस्थापिताः'** इत्यन्तेन। **'सामान्यात्मानः'** इति स्वलक्षणरूपा अपि शब्दगोचरीकार्यत्वेन सामान्यात्मका एवेति प्रागेव उक्तमसकृत्। ते विचित्रसंज्ञाप्रपञ्चेन व्यवहारपथमुपनीयन्ते इति सम्बन्धः। **'स्वयमपि अनेकसंज्ञास्पदैः'** इत्यनेन **'तत्तत्'** इत्यादि सौत्रमुभयविषयत्वेन योजयति। **'अनन्तरम्'** इति

'तस्यासाधारणी··············।' (४।१।९)

इत्यत्र। इयता त्रिभिः श्लोकैर्वाक्यैकवाक्यतया प्रस्तुतवस्तु निर्वाह्यमित्याह **'तत्तद्भिभिन्न'** इत्यादिना सौत्रं वृत्तावपि उभयथा योजितमिति दर्शयति **'प्रमातॄणामपि'** इति। एतदेव उपपादयति **'मायीय'** इत्यादिना। प्रमेयभेदे हि सति मायाप्रमातृस्थितिः, तस्यां च सत्यां प्रमेयभेद इति युगलकसृष्टिरेवं भगवतः

संसारोत्थापनम् । एतदेव व्यतिरेकमुखेन आह **'परमार्थेऽपि तदुभयम्'** इति वेद्यवेदकात्मकमभिन्नमेव । उक्तं च एतत् मया

'तन्मया दृश्यते दृष्ट ·················· ।' (१।४।८)

इतिसूत्रे । ननु एवं परमार्थप्रमातरि चेत् सर्वमभिन्नं, तर्हि प्राणाद्यपेक्षया तावत् शरीरमस्तु वेद्यम्; प्राणादि तु किमपेक्षया वेद्यमुच्यते । अत्र आह **'शून्यप्रमात्रपेक्षया तु'** इति । ननु शून्यमपि वेद्यमेव, तत्तु किमपेक्षयेति वाच्यम् । उच्यते **'शून्यस्य अपि'** इति । **'वेदकः'** इति विकल्पक इति यावत् । अर्वाग्दृशां हि न शून्यं साक्षात्कारभूमिरिति स्फुटभावेन, अपितु समस्तशब्दादिवेद्यविनिर्मुक्तं नेतिनेतिब्रह्मवादिदृष्ट्या यदुपकल्पितं तत् विकल्पविज्ञाने युक्त्यागमादिप्रभवे चकास्ति । अथ अत्र शून्यप्रमातरि साक्षात्कारात्मकं संवेदनं किं न संभवत्येव । संभवति चेत्याह **'योगिषु'** इति प्राणबुद्ध्यादिसाक्षात्कारानन्तरं भावनाप्रभवेन ज्ञानेन ये शून्यमपि विषयीकर्तुमुद्यतास्ते शून्यान्तरे तद्वेद्यशून्यापेक्षया विततबद्धप्रमातृभावा भवन्ति । तथाहि देहाभावरूपं शून्यं देहातीतब्रह्मरन्ध्रोर्ध्वशून्यप्रमातृभावेन विषयीक्रियते, महाविदेहधारणासमापत्तौ पुनस्तदूर्ध्वं शून्यं प्राणाभावरूपं द्वादशान्तोपलक्षितेन शून्येन, तदपि परतरेणेत्येवं तारतम्यभेदेन मायापदे अनवस्थैव सृज्यमानशून्यानां पर्यन्तस्य अलाभात् । नच इयमनवस्था कांचन क्षतिं विधत्ते । यदिहि कल्पितो ग्राहको ग्राहकान्तरेण गृहीत उद्रिक्तां वेद्यतामेव वेदकतायां प्रयोजकीकुर्वाणः सन् वेद्यं जानातीति उपगम्येत, तदा अनवस्थातो वेद्यस्यैव ज्ञप्तिर्न भवेत् यावता ग्राहकस्य संवित्समावेशिताहम्भावस्य स्वातन्त्र्यं, स एव ग्राहकतायां प्रयोजक इति शुद्धसंविदेव परमार्थतः सर्वत्र ग्राहिका

'यद्यप्यर्थस्थितिः················ ।' (अ०प्र० सि० २०) इतिन्यायात् । वेद्यता तु तत्र मायीया, तत्र ग्राहकान्तरानवस्थैव न दूषणं वस्तुतः खण्डनायोगात् । तत्प्रमातृतावसरे च संविदाविष्टमपि तत् शून्यं भिन्नबोधरूपविद्येश्वरादिसर्वज्ञप्रमात्रन्तरापेक्षया भिन्नं वेद्यं चेति । तदाह **'नच'** इति अनवस्था न दोषावहा अत्रेति यावत् । ननु अत्र मा भूदनवस्थातो दोषः, ईश्वरपदे तु यत् तत् शून्यं यदपेक्षया आच्छादनीयस्य इदम्भावस्य उल्लासः, तत् केन संवेद्यम् । शून्यान्तरेणेति चेत्, तदपि केनेति अनवस्था, अवेद्यत्वे च तत् शून्यं न इदन्तया प्रकाशेतेति अप्रकाशरूपत्वादसत् स्यात्; तदसद्भावे च क इदन्तोन्मेष इति दोषः । भवेदेष दोषो यदि शून्यान्तरं वेद्यमेव अत्र ग्राहकं स्यात्, नच तथा । नापि पूर्णं चिद्रूपं तदपेक्षया इदन्तोल्लासात्मकभेदप्रथनायोगात्, अपितु तत्र पूर्णचिद्रूपे यत् संकुचितं विश्वतः पलायमानमिव विश्वाभावरूपं संवेदनं स्वप्रकाशमकालकलितं पूर्णं चिद्रूपात् परमार्थेन अभिन्नमपि भिन्नमिव प्रथते । चिद्रूपतास्वातन्त्र्यादेव परापरस्वरूपोल्लासकारिणस्तदपेक्षया इदन्तोल्लासो युक्त एव, न अनवस्था काचिदिति । एनमर्थं वितत्य आह **'यतः'** इत्यादिना । **'चिन्मात्र'** इति विशुद्धपूर्णचिद्रूपापेक्षयेत्यर्थः । **'अद्वयानुपपत्तिः'** इति । उपपादितं च शुद्धचिदपेक्षया सर्वस्य अव्यतिरेकादद्वयमिति आशयः । न संविदपेक्षया, नापि अन्योन्यापेक्षया भावानां भेदो युज्यते, नच न अस्ति असौ । ततो हेतोरिदमुपगम्यम् । किं तदित्याह **'तस्य'** इत्यादिना । ईश्वरः परापरावस्थात्मा, तस्य या शुद्धचिद्रूपता, स परावस्थात्मा भागः । **'तत्रापि'** इति तस्यामेव विश्रान्तः । **'पुनः'** इति ततः परदशाभागात् विशेषमस्य आह **'अभावरूपत्वादेव'** इति चिद्रूपता

प्रकाशपरामर्शपूर्णा स्फुरति । विश्वाभावस्तु विश्वस्य न प्रकाशनं न विमर्शनमित्येवं नञर्थः । स्वयं तु सोऽपि अवश्यं प्रकाशविमर्शावधिशेते एवेत्याह **'तदभावविमर्शो च'** इति प्रकाशत्वेन विमृश्यत्वं च स्फुरति यतः । ननु एवं जड एव अस्तु । एतदपि नेति ब्रूते **'नापि'** इति शब्दादीनां यादृशो भावः पृथक् वेदकात् किञ्चिदिदमिति, तेन रूपेण अस्फुरणात् । ननु अभावो निषेध्यधर्मात्मा निषेध्यस्य बहिरपि अख्यातिधर्मत्वेन स्फुरति—शब्दाभावः, स्पर्शाभाव इत्येवम् । सत्यं, यत्र प्रतियोगी स्फुरति, तत्र एवम्; इहतु न तथेत्याह **'नहि'** इति । **'अवभासः स्यात्'** इति । स एवच विश्वावभास इदन्तया चिन्तयितुमारब्ध इति अभिप्रायः । कथं तर्हि असावभावविमर्शः । आह **'किन्तु निर्विशेषण एव'** इति । ननु तादृशस्य अपि अत्र किं स्वरूपम् । तत्र च कथं न अनवस्था । अत्र आह **'वेद्यम्'** इत्यादि **'चोद्यते'** इत्यन्तम् । अत्र ईश्वरपदे नञर्थो यः प्रथते, न तत्र ग्राहकान्तरमुपयुज्यते इति सम्बन्धः । वेद्यं नास्तीत्येवं यत् वेद्यमात्रं, तेन अपि अविशिष्टो वेद्यविशिष्टत्वादेव यत् निषेध्यमात्रनिष्ठत्वं ततो हेतोः क्षेत्रज्ञरूपाणां चित्तत्त्वानां मायाप्रमातृणामपि स निषेधात्मा नञर्थः । **'विश्वम्'** इति मातृमेयरूपं सर्वं मायीयं नेति निषिद्धं भवतीत्यर्थः । तस्य नञर्थस्य रूपान्तरं समुच्चिनोति । स च कालस्य प्रथया स्फुटेन रूपेण रहितः । तत्र हेतुरयमिति साक्षात्क्रियमाणतया स इतिच स्मर्यमाणतया, तत एव मिलित्वा अनुसन्धीयमानतया यतो न आभासपदवीमेति, तत आभासे इदम्भागे निष्ठितो यः कालः, स तस्य न विशेषकः । अत एव स नञर्थः ईश्वरस्य शिवनाथस्य द्वितीयमिव रूपम् । वक्ष्यते हि

'सा च रुद्रदशा शिवतत्त्वस्य अपरावस्था'

इति । द्वितीयत्वमेव स्फुटयति **'स्वात्मसङ्कोच'** इति भेद-वादिनामिव संवित्तत्त्वं समस्तात् विश्वराशेः सङ्कुचितमिव नित्यम् । सङ्कोचादेव शून्यशब्दवाच्यं विश्वानवभासं संहारतमःप्रधानेन मायायाः पदे रुद्रनाथेन अधिष्ठितम् । इवशब्दार्थमेव स्फुटयति **'पूर्णमेव'** इति वस्तुतः पूर्णमेव संवित्स्वरूपं तत्, प्रथते तु परं तथा सङ्कोचेनेत्यर्थः । ईश्वरस्य वा परापरदशात्मनो द्वितीयमपर-दशात्मकं स्वरूपं स नन्वर्थः, पररूपनिमग्नतैवच अस्येति इव-शब्दः । तामेव स्फुटयति **'सोऽपिच'** इति । विश्वमीश्वरसंविदि यद्यपि अहन्तायामन्तर्भूतं, तथापि सा अहन्ता विश्वतः सङ्कुचिता अपि तत्र स्फुरति प्रकाशविमर्शसारा भवति । कथम् । चिद्घन-तयैव परदशानिमग्नत्वेनेत्यर्थः । ननु यावदहन्ता न सङ्कुचिता, न तावदिदन्तोल्लासः, यावच्च न असौ, तावत् कथमहन्ता सङ्कु-चेदिति अन्योन्याश्रयम् । भवेत् यदि पौर्वापर्यमत्र स्यात्, नच तदिति दर्शयति **'एकैवच'** इति । एतदुक्तं भवति—संविदः स्वात-न्त्र्यादनुत्तरादतिदुर्घटमिदमपि सममेव भाति अहमिदमिति । तत्र अहमिति पूर्णमेव संविद्रूपम्, इदमित्येतदाक्षिप्तं तु सङ्कुचितम् । यदहमितिरूपं,तत्र अहम्भागस्य पूर्णसंविद्रूपाहम्भावाव्यतिरेकेणैव प्रथा, सङ्कोचभागस्तु यः स इदन्ता उत्तीर्ण इव तत्रैव अह-मित्यत्र रूपे प्रतिबिम्बकल्पतया स्फुरन्नपि न स्फुटो न इदम्भावेन, अपितु निर्मलतमे आदर्शे द्वितीयमलिनादर्शवदपरेदन्तानुग्राह-कत्वेनेति एकरसमीदृशं संविदः स्वातन्त्र्यम् । न केवलमप्ररूढ-मायायामीश्वरभुवि इदं रूपं, यावत् प्रतिरूढसङ्कोचायां माया-दशायामेषा एव वर्तनीति निरूपयति **'मायादशायाम्'** इत्या-दिना । **'नीरूपत्वात्'** इति पृथक् तस्य न किञ्चित् रूपं संविदः

संवेद्यात् च निर्भातीत्यर्थः । **'तौ'** इति घटाभावपटाभावौ । मायापदत्वमेव स्फुटयति **'सङ्कोचश्च'** इति । एतदेव स्पष्टयति **'अहंविमर्शेन'** इति परिहारो वियोगः । **'मुख्या तावत्'** इति महाशून्यरूपा । **'चित एव'** इति महासंहाररूपा रौद्री दशा, एषा च ईश्वरसंवेद एव परमार्थतो विश्रान्तेति वाग्रहणेन आह, अन्यथा पृथगेव एनामपरेत्यमुना उपक्रमेण निर्दिशेत् । ननु महासंहारेऽपि पुर्यष्टकरूपत्वेन भाविसंहारवैचित्र्यवन्तोऽणवस्तिष्ठन्ति एव, तत्र कथं चितो विश्वाभावरूपतेत्याशङ्क्य आह **'पुर्यष्टकसंहारोऽपि'** इति अपवेद्यप्रलयसमये पुर्यष्टकस्य अपि बीजभावोपगमनं शून्यरूपतायामिति सैव शून्यरूपता तद्बीजवैचित्र्येण प्रमातृभेदात्मिका तत्र रौद्रे महाशून्ये संस्काररूपतया तावदास्ते यावत् सृष्टिमुखं, ततः पुनर्बीजप्रबोधात् पुर्यष्टकसृष्टौ पूर्वान्तर्गतकर्मवासनानुसारेण शरीरकरणादिविचित्रभावः । **'अपर'** इति संसारभुवि जाग्रत्स्वप्नदशायाम् । पुर्यष्टकं च बुद्धिशरीरयोरपि उपलक्षणम् । यदाह **'यत्र'** इति । तदन्येषां पुर्यष्टके यो भावस्तन्निष्ठा काचिदख्यातिः शुद्धपुर्यष्टकमात्रप्रथारूपा महाप्रलयात् पूर्वोक्तात् मायानिष्ठादन्यत्र प्रलये प्रधानादिविश्रमणरूपेऽवान्तरप्रलये । एतच्च सुषुप्तस्य अपि उपलक्षणं सवेद्यस्य, अपवेद्यं तु महाप्रलयेन उपलक्षितम् । एवं वेदकस्य शुद्धस्य कल्पितस्य च वेद्येन वियोग एक एव, वेद्यस्य अपिवा तेनेति परस्परं वियोगः; सोऽपि अवियोगविश्रान्ते न वेति यथायोगं भेदा एते इति । इदानीं वेद्यस्य वेद्यान्तरेण वियोगः, तयोर्वा परस्परमिति दर्शयति **'अन्य'** इति वेद्यगतत्वात् विशेषात् परस्पराभावं पृथगुपक्रमं विनैव वाग्रहणेन आह । **'सर्वैव'** इति ईश्वरपदादारभ्य वेद्यमात्रपर्यन्तमभावप्रथायामिदमेव तत्त्वं यद्-

न्यस्य तत्र अप्रथनम्; अन्यात्मत्वेऽपिच यत् तथा, तत् भ्रम-रूपत्वं संहारशून्याभावादिशब्दाभिधेयं रुद्राधिष्ठितं शुद्धसंवेदनस्य अशुद्धमिदम्भावाख्यं समासूत्रयदाद्यादिच्छारूपादेव स्वातन्त्र्यात् बीजभूतमुन्मिषति। तदाह **'शुद्ध'** इत्यादि। एतदेव आगमेन संवादयति **'सच'** इति साम्यमुभयोर्दशयोर्योजयति **'तत्र'** इत्यादिना। साम्येऽपि येन विशेषेण भेदः परत्वापरत्वयोगश्च, तमाह **'केवलम्'** इति। **'सबीजा अपि'** इति बीजमपि विलीनं परमेश्वरस्वातन्त्र्यशक्तिशेषतामेतीति बीजावशेषा विश्वे भावा रुद्रभूमौ योग्यतादिशब्दाभिधेया इति सम्बन्धः। योग्यता-रूपतया अपि अंशतः शिवरुद्रदशयोः साम्यमाह **'तदानीम्'** इति। रुद्रभुवि बीजपातयोगेन ये मायीया भिन्ना अर्थाः, ते शिवात्मनि अपि वेद्यतया अवस्थिता इति व्यज्यन्ते व्यपदेष्टुम्। ननु योग्यता बीजरूपता, सा अपि तत्र विलीना। सत्यं, भेद-रूपत्वे या योग्यता, सा विलीना भेदाभेदरूपत्वेन परापरतया; तया तु या ईश्वरसंविदि प्रथा स्फुटा, तस्या अवश्यं स एव बीजभावो यत् भगवतः स्वातन्त्र्यमिति विशिष्टैव इयं योग्यता। ननु कारणे कार्यं योग्यतया उचितं, न शिवेश्वरयोः कार्यकारण-तेत्याशङ्कामनुवदन् परिहरति **'यद्यपिच'** इति अर्वाग्दर्शना ज्ञानयोगाभ्यां तथा पार्यन्तिकीं दशामध्यासीनाः क्रमेण यतो बुद्ध्यन्ते स्वीकुर्वते च, ततस्तदीयाभासापेक्षया पौर्वापर्यं सृष्टस्य अपि भवेत्; तस्य च पारमार्थिकरूपानुलग्नतया

'स्वातन्त्र्यामुक्तम्············।' (१।५।१६)

इति उक्तन्यायेन सृष्टत्वात् परमार्थेऽपि तथाभावव्यवस्था, ननु स्वतः। स्वतोऽपिवा कार्यकारणभावोऽस्तु यथा उक्तं

'यत्सदाशिवपर्यन्तं पार्थिवाद्यं च सुव्रते ।
तत्सर्वं प्राकृतं ज्ञेयं विनाशोत्पत्तिसंयुतम् ॥'

इति । सकलप्रलयाकलविज्ञानकेवलिमन्त्रतदीशमहेशानामपि हि इदम्भावांशेन पारिमित्यलक्षणेन अनुवेधात् तदपेक्षया एव कृतकत्वमुच्यते, तद्वत् सदाशिवेश्वरयोरपि । तत एव उक्तं **'प्राकृतम्'** इति । तदेतदाह **'इदम्भाग'** इत्यादिना । एतदुपसंहारेण स्पष्टयति **'तदेवम्'** इति । इदन्तावमर्शो एव यदि तत्र स्फुटः स्यात्, तदा विश्वमेव तत् भवेत्; नतु विश्वबीजमिति उचितपदम् । बीजसंस्कारयोग्यताशक्तिरूपं च अस्मदादीनां नित्यानुमेयमपि सर्वज्ञपदे च स्फुटप्रकाशनोचितमेवेति अहन्तायामेव विश्राम्यति, नच असौ शुद्धैव अहन्ता विश्वबीजतायाः परिस्फुरणादनभिव्यक्ततद्रूपचक्रवर्तिपण्डितकविशिल्पिप्रभृतिगतस्वस्वकरणीयविशेषस्फुरणवत् । अत एव शक्तिवाचोयुक्त्या अत्र व्यवहारः । अत एव आह **'यन्नान्यग्राहकापेक्षम्'** इति । ननु एवमेषा शून्यरूपा बीजभूमिर्नित्यमेव ईश्वरसंविदनुलग्ना, ततः शून्यस्य कथं पृथक् प्रमातृता, प्रमेयता वा । अत्र आह **'तच्च'** इति शून्यं कर्तृ अहन्ताच्छादनमीश्वरसंविदभेदं विहाय मायाशक्तेर्वशात् विजृम्भालक्षणात् । **'तथैव'** इति तेनैव शुद्धेन रूपेण परसंविदनुवेधवन्ध्येनेत्यर्थः । तच्च शून्यं संविन्मात्ररूपं च सङ्कोचाधिकं चेति उभयं दर्शयति **'तच्च'** इति शून्यम् । **'तदा'** इति सुप्तमूर्च्छासमाधानादौ । ननु बोध एव तथा स्मरिष्यति, किं बोधातिरिक्तशून्यताधिक्येन । एतत् नेत्याह **'नहि'** इति । **'स्वयम्'** इति सृष्टिसृष्टित्वे सङ्कोचाधिक्ये वा यत् स्मरणं, तत् वेद्यांशगतमेव । तदुक्तं

'नत्वेवं स्मर्यमाणत्वं तत्त्वं प्रतिपद्यते ।' (स्प०का० १।१३)

इति । **'साच'** इति तत्र स्पर्शादिमये प्राणप्रमातरि विश्रमः । **'तथा सति'** इति प्राणादिप्रमात्रवस्थाने । **'अत्र अवस्थानम्'** इति शून्यप्रमातरि एव **'अवस्थितत्वात्'** इति हेतुताशयेन व्याख्येयम् । **'न निवृत्तः'** इति तन्निवृत्तौ प्रलयाकलवत् देहानुप्राणनतद्देहाद्युत्थानाद्ययोगात् । **'तथाभाव'** इति रागद्वेषक्षुत्तृष्णादेरभावः । **'परिमितमेव'** इति शालिबीजं हि पलालतण्डुलकणमात्रपूर्णं न्यग्रोधबीजादेरन्तःकृतानन्तशाखापल्लवस्कन्धादेर्महाबीजात् परिमितमेव । एवं संसारिणि क्रमविकासो यावत् सर्वज्ञेषु विकासतारतम्येन, परमो विकासो रुद्रभुवि शून्यस्य । तदाह **'सर्वभाव'** इति । **'तत्'** इति चित्तत्त्वम् । इवशब्देन वास्तवो न कोऽपि सङ्कोचस्तदाभासमात्रं मुक्तेति दर्शयति **'तथापि'** इति सङ्कोचेऽपि । एवं शून्यस्य अन्तर्गततत्तद्वस्तुन्यूनताधिक्यकृतं सङ्कोचविकासतारतम्यमिति उक्त्वा तदा सर्वावरणलोपे तस्य ज्ञानस्य आनन्त्यात् ज्ञेयमल्पमित्यनया दृष्ट्या ज्ञेयसंस्कारविच्छेदतारतम्येन संविद्भागविकासात् विकासतारतम्यं ग्राह्यग्राहकभावोत्थापकमिति दर्शयति **'योगिनां च'** इति । नच अनस्थेति स्मारयति **'तस्य तु'** इति । शून्यान्तरे वेद्यात् शून्यादस्य विषेशं तुना आह । एवं समावेशोपदेशशून्यानां प्रतियोगिसंवलितमेव निषेधमेव बुद्ध्यमानानामबुद्धानामनन्तसृज्यमानशून्ययोगो योगिनामिति उक्तम् । ये तु समावेशविशारदास्तत्त्वविदस्ते देहादिमेव यद्यपि बोधरूपाविष्टमभिमन्यन्ते, तथापि तद्देहप्राणादिभेदोल्लासनोपयोगिना शून्येन अवश्यमन्तरा भाव्यं, नतु तत्र शून्यान्तरेण किञ्चिदित्येतत् दर्शयति पारमार्थिकपक्षान्तरपरिग्रहेण **'यदिवा'** इति । **'विशेषाभावात्'** इति घटेन या शून्यता नेति भाति, या च घटपटाभ्यां; तत्र प्रतियोगिभेदं

मुक्त्वा न स्वरूपतो भेदो विवेकवतामवभातीति न शून्यान्तरं किञ्चिदस्ति । ननु एवं संसारिणां योगभुवि शून्यसंवेदनं केन, नहि तेषामैश्वरी संविदस्ति । क एवमाह, अस्त्येव सा । तदाह **'सर्वा चैषा'** इति । **'प्रतिपादितम्'** इति पूर्वः पूर्व उत्तरमुत्तरं व्यभिचरति, नतु उत्तरः पूर्वमिति हि उक्तम् । **'तत्र'** इति तस्यां प्रमातृपरम्परायाम् । **'मध्ये रौद्र'** इति सोऽपि मायीयत्वेन हेयः । तथापि न हेयः इत्याह **'स तु'** इति । एवं शून्यप्रमातृस्वरूपं प्रदर्श्य वृत्तिं व्याचष्टे **'अत्र'** इति । क्षेत्रशब्देन शरीरं वदता तच्छून्यानां न अस्ति विकल्पनशक्तिरिति उक्तम् । **'अपोह्यमान'** इति संविदमपेक्ष्य या विकल्पनशक्तिः, सा भेददृष्ट्या तत्त्वरूपतामापन्ना मनोऽन्तःकरणम् । तच्च प्रतियोग्यपोहनसहितार्थावमर्शनव्यापारम् । तत्रैव च रूढता संसारिता, तत एव पश्चादपोहप्रकरणं सम्बन्धस्तु शक्तिस्पर्श इति बोधाबोधात्मा प्रमाता परमार्थप्रमातरि अजडे चिद्विमर्शात्मनि विश्राम्यति । तत एव अपोहनान्तं प्रसरतीति प्रकरणपञ्चकस्य प्रतिलोमानुलोमभावनायां तात्पर्यम् । तदपोहने परः प्रधानम् । एतदेव स्फुटयति **'मनो हि'** इति । **'सा च'** इति विकल्पनशक्तिः

'शब्दराशिसमुत्थस्य··············· ।' (स्प०का० ३।१७)

इति

'स्वरूपावरणे चास्य··············· ।' (स्प०का० ३।१५)

इति च नयेन शब्दनशक्तय एव प्रतिप्राणि प्रत्यवस्थं विचित्रतया लोकशास्त्रव्यवहारानुबद्धं विकल्पनव्यापारं ग्राह्यग्राहकविषयं विचित्रमुत्थापयन्त्यो मलत्रितयमनुप्राणयन्ति । यत् निरूपितं

'पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ।'

इति

'विषयेष्वेव संलीनान्………… ।' (मा० वि० ३।३१)

इति च । ता एव तु शुद्धविमर्शविशेषतां विकल्पनमपि नयन्त्यो मुक्तिदायिन्यः । यदादिष्टं

'………जन्तुचक्रस्य शिवधामफलप्रदाः ।
पराः प्रकथितास्तज्ज्ञैरघोराः शिवशक्तयः ।'
(मा० वि० ३।३३)

इति

'एकैव मामिका माया स्थिताष्टाष्टकभेदिनी ।'

इति

'…स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ।' (स्प० का० ३।१६)

इति । तदाह '**संज्ञाविकल्पे**' इति

'सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।' (वा० प० १।१२७)

इति प्रतिप्रमातृविचित्रतया शब्दनशक्तिमयी शब्दभावना, तत्कृते विकल्पवैचित्र्ये । '**इयत्येव**' इति मूलपरामर्शभूमिमस्पृशति, तत्स्पर्शे हि विकल्पेऽपि न बन्धरूपता । एतच्च वक्ष्यते 'संसारो विश्रान्तः' संसरणस्य हेयतामाह '**बन्धरूप**' इति । स्वरूपजीवितं तु अस्य आह '**मलत्रय**' इत्यादि । मायीयत्वं त्रयस्य अपि उक्तं

'………मायाशक्त्यैव तत्त्रयम् ।' (३।२।५)

इति । इयता '**शब्दमय**' इतिवृत्तिर्व्याख्याता । एतच्च परमुपदेशतत्त्वमिति आह '**अत्रैव**' इति । अवधानेन विकल्पस्य प्रशमनं वा

'विकल्पहानेन…………… ।' (४।१।११)

इतिभाविनीत्या, शुद्धपरामर्शशेषीकरणं वा

'सर्वो ममायं विभवः………… ।' (४।१।१२)

इतिस्थित्या कार्यम् ॥ ८ ॥

ननु एवं विकल्प्यमान एव अर्थो बन्धक इति उक्तम्, तच्च अयुक्तम् । विकल्प्यत्वे यावान् यथा वा, अविकल्पत्वेऽपि तावानेवहि सोऽर्थः । तत् को विशेषः प्रमेयस्य पतिपशुप्रमातृतायाम् । अयमिति आह

**तस्यासाधारणी सृष्टिरीशसृष्ट्युपजीविनी ।**
**सैषाप्यज्ञतया सत्यैवेशशक्त्या तदात्मनः ॥ ९ ॥**
**स्वविश्रान्त्युपरोधाय चलया प्राणरूपया ।**
**विकल्पक्रियया तत्तद्वर्णवैचित्र्यरूपया ॥ १० ॥**

'**तस्य**' इति पशुकर्तृका सृष्टिरीशसृष्टिपृष्ठपातिनीत्वेन तदुपजीविनी सती असाधारणी प्रतिप्रमातृ प्रतिकालं च प्रमात्रन्तरदशान्तराद्यनुवर्तनविहीना । तथाहि इदं हृद्यमिति येन यदा सृष्टं, तत् तस्यैव तदैव । ननु पशोः स्रष्टृत्वं चेत्, ईश्वर एव तर्हि असाविति तत्सृष्टेः किं न साधारणता स्यात् । यदि स्वशक्तिः सा अस्य विदिता स्यात्, किन्तु तस्य अज्ञाता परवशस्य एव सतो विकल्पनशक्तिरुदेति । केन सा अस्य प्रबोध्यते इति चेत्, ईशत्वेन एव । तदपरिज्ञानपरिज्ञानमात्रतो हि बद्धमुक्तता । तथाहि ईश्वरस्य विश्वपरामर्शविग्रहत्वेन शब्दराशिशरीरस्य या मायाख्या शक्तिर्निजस्वभावविश्रमणात्मकपारमैश्वर्योपरोधप्रयोजना तत्तद्ब्राह्म्यादिदेवताचक्राधिष्ठितवर्गाष्टकमयी, तत एव ककारादिवर्णगतव्याससमासवैचित्र्यशतसहस्रगर्भतया अष्टाष्टकभेदसहस्रवैचित्र्यविचित्रा, तत एव प्राणापानादिप्रेङ्खारोहणचञ्चला क्षणमपि एकत्र रूढिमनासादयन्ती, मित्रमिदं शत्रुरयमित्येवमादिकं विकल्पनं यया क्रियते; तदात्मन ईश्वरस्वभावस्य एव पशोरसाधारणी सृष्टिर्दशरदनो दन्तीत्यपि पृथगाभासानीश्वरसृष्टानेव उपजीवति,—इति सूत्रार्थः । तं तात्पर्यत आह '**एष च**' इत्यादिना ।

'**यतः**' इति ऐश्वर्या एव शक्तेरुत्थित इति यावत्। '**यथाच**' इति तथापरिज्ञानमात्रेणेतिभावः। '**निरुपादानानेव सृजति**' इति महावाक्येन सर्वः सूत्रार्थः सङ्क्षेपेण व्याख्यातः। '**तत्तत्**' इत्यादिना '**संस्कृत**' इत्यन्तेन समासपदेन '**ईशसृष्ट्युपजीविनी**' इति व्याख्यातम्। ननु नियतदेशकाला एव स्वतन्त्रविकल्पेऽपि आभासन्तेऽर्थाः, तत् कथं वृत्तौ '**सामान्यरूपान्**' इति उक्तम्। एतत् परिहरति '**सामान्यरूपत्वेन**' इति स्मृतिविषयो विकल्प्यमानोऽपि न स्वोत्थापितदेशकालयोगी, किन्तु निरूढदेशकालयोगी एवेति स्वलक्षणात्मा, तेन स्वसृष्टदेशकालाभासमेलना एव अर्थाः स्वातन्त्र्यविकल्पशक्तौ, नतु निरूढावेषां कौचन देशकालाभासावित्येतत् तात्पर्यम्। '**सामान्यरूपान्**' इतिवृत्तिग्रन्थस्य '**पुनरपि उपलभ्यते केवलम्**' इत्यत्रैव च्छेदः। तत्र द्वितीय उपलम्भः पुनरुपलम्भः इतिभ्रमं भिनत्ति '**पूर्वानुभव**' इत्यादिना '**स्फुरति**' इत्यन्तेन। पूर्वक एव उपलम्भः पुनरुन्मीलनामात्रमस्तीति यावत्। '**केवलम्**' इति यदुक्तं तदेव स्पष्टयति '**ननु**' इत्यादिना। ननु मुमूर्षमाण एव स्मरति, तत् कथमुक्तं '**अप्रभविष्णुत्वात्**' इति। अत्र आह '**अन्यूनाधिकभावेन**' इति यथा दिदृक्षमाणेऽपि पश्यतिना अर्थांशे तदिच्छा प्रभवति, तथा अत्रापीति भावः। ननु पूर्वमसौ स्फुटः, अधुनातु न तथेति कथमनूनाधिकता। अत्रापि आह '**अस्फुटत्वम्**' इति। तात्कालिकेन्द्रियव्यापारविषयीकार्यतायां स्फुटत्वव्यवहारो लोकस्य, स च अत्र नास्तीति यावत्। ननु एवं पशोरनुभवगोचरे न अस्त्येव सर्गशक्तिः। न न अस्ति; सभित्तिस्तु सा निर्भित्तेर्विलक्षणेति आह '**अनुभूयमान**' इति। रागादिविषयत्वं ह्याभासादिरूपं क्षेत्रज्ञनि-

र्मितिरेवेति सम्बन्धः । अत्र हेतुः **'स्वच्छ'** इत्यादि । **'प्रति-प्रमातृ'** इति असाधारणत्वमुक्तम् । यः पुनरर्थोऽवभासते, स क्षेत्रज्ञसृष्टिरेव । अथ तथात्वशङ्काबीजमाह **'पूर्व'** इत्यादिना । हृद्यता हि न बहीरूपं किञ्चिदनुभूतम् । इहतु कूपजलाभास-तत्क्रियाभासाद्यनुभूतमेवेति क अंशे पशुरभिषिच्यते स्रष्टृतयेति शङ्काबीजम् । ननु एतदेव अस्तु, सृष्टिस्तु तस्य सा कुतः । आह **'तत्कूप'** इत्यादि । **'मोक्ष'** इत्यन्तेन प्रथमश्लोकव्याख्यानेन पशुं प्रति इति अपुनरुक्तता । मायाशक्तावेव अस्यां मलत्रयं संसार-मन्तर्भावयन्

'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।

बन्धयित्री........................ ॥' (स्प० का० ३।१६)

इत्याम्नायमनुसरति **'निषेधमात्र'** इत्यादिना । तुच्छताभासो-पक्रमो वैपरीत्याभासो नञर्थः । वैपरीत्यज्ञाने क्रियायां चेति त्र्यंशा इयं माया मलत्रयेण प्रसरतीति तात्पर्यम् । **'अनुपप-न्नम्'** इति स्फुटयति **'भिन्नं परिमितं च'** इति । ज्ञेयं प्रकाश्यं कार्यं च विमृश्यं, तच्च प्रकाशविमर्शरूपात् संवेदनात् देशाद्यप-रिमितादव्यतिरिक्तं सदभिन्नमपरिमितं च उपपन्नं, तद्विपरीता-भासमनुपपन्नम् । **'आभासयन्त्याः'** इति ज्ञेयीकुर्वत्याः । **'कार्यं च कुर्वत्याः'** इति विमर्शनीयीकुर्वत्या इत्यर्थः । क्रिया-भास एव वितातात्मनि कार्ममलस्थितिरित्याह **'कार्यकारण'** इत्यादिना । **'ककारादि'** इति । स्फुटास्फुटाव्यक्तभावेन वैख-र्यादिवैचित्र्येण च विचित्रताभाजां समस्तव्यस्तविपर्ययभेदेन विकल्पाभिव्यञ्जनव्याप्रियमाणत्वेन व्यञ्जनसंज्ञानां वर्गदेवताभिः सृष्टिस्थित्यादिवैचित्र्यनिर्भासनशक्तियोगेन ब्रह्मविष्णुरुद्रप्रभृत्य-नन्तप्रमातृवर्गतत्कार्यराशितद्भोगविभवसमधिष्ठानकारितादिना

च प्रतिलब्धतत्तदागमप्रसिद्धानन्तनामधेयाभिरुत्थाप्यमानस्थाप्यमाननिरुध्यमानयोज्यमानवियोज्यमानादिरूपाणां परमेश्वररूपानुप्राणकबीजभूतशब्दनात्मना अन्तःसुखादिपरामर्शपीडनेन समस्ताक्षेपकत्वेन च अकारादिभिः स्वयं राजत्तया स्वरस्वरूपैरनुप्राणितानां ककारादिवर्णानां वैचित्र्यं यतो गणनातीतम्, अतस्तासामपि अनन्तत्वं दर्शितं आगमेषु । **'स्वोपलभ्यान्'** इति **'चित्तवृत्तिभेदमयान्'** इति च । **'प्रतिपुरुषमयन्तः'** इति असाधारणत्वमुक्तमान्तरप्रतीतिमात्रसारत्वं च । **'क्षणमात्र'** इति प्रतिक्षणं यन्तीति चञ्चलत्वं प्रकारान्तरेण अपि उक्तम् । तत एव आगमेषु वर्णेषु कालभेदो ह्रस्वमितिवदुक्तः । **'कालोत्तरसंविदन्तःप्रत्ययसंज्ञान्'** इति । आगमे हि तत्त्वभूतभुवनपृष्ठपाती भावसर्गः प्रत्ययसर्ग उक्तः । तत्र च शब्दराशिभागवर्णदेवताधिष्ठानमुक्तं

'स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥' (स्प० ३।१५)

इति । श्रीमायावैभवागमे

'एकैव मामिका माया स्थिताष्टाष्टकभेदिनी ।'

इत्यादि । श्रीसर्ववीरेऽपि

'न तैर्विना भवेच्छब्दो नार्थो नापि चितेः···· ।'

इति । **'कादि'** इति तैर्वर्णैरधिष्ठेयैस्तासामनन्ता गणना । ताश्च ईश्वरशक्तेरेव विजृम्भाभूताः । यथोक्तं

तं शक्तिचक्रविभवप्रभवं शङ्करं नुमः ।' (स्प० १।१)

इति । **'तथा'** इति **'वर्णभेदशतानन्तगणना'** इति वृत्तिगतेन बहुव्रीहिणेत्यर्थः । **'स'** इति क्षेत्रज्ञः । **'कुम्भकृत्'** इति कुम्भनिर्मितिमयः । **'स'** इति तथाप्रत्ययसर्गः कुम्भ इव

कुम्भकारनिर्मितताभासशरीरः । परमेश्वरैकनिर्मितत्वेऽपिहि स्वप्नसङ्कल्पादिवदिदमवभासवैचित्र्यमिति अवोचाम बहुशः । **'उभयम्'** इति । यत उत्थितोऽयं भेदप्रतिभासो, यथाच बन्धरूपतां धत्ते इति यदवतारणिकायामुक्तं, तदनेन निर्णीतम् । ईश्वरशक्तेरेव मायात्वं प्राप्ताया उत्थितः स्वरूपावरणकारिणीभिश्च वर्णदेवताभिर्विकल्परूपतां यतो नीतः, ततो बन्धरूपतां धत्तेऽयं भेदप्रतिभास इति । **'वक्ष्यमाण'** इति अनन्तरसूत्र एव । उपरि तदुपजीवित्वेन सभित्तिकत्वमुक्तम् । ननु दूरादेव झटिति दृश्यमाने यदयं रज्यति विरज्यति वा, तत्र अस्य रागद्वेषात्मिका सृष्टिः स्वयंकृता अपि पारतन्त्र्यादेव उत्पन्ना अनिच्छोरेव कामक्रोधभयत्रासाद्युदयात् । ततस्तत्र स्वरूपापरिज्ञानं बन्धकारणत्वेन वर्णाधिष्ठातृविमोहकशक्तिचक्रोत्थापितमस्तु, यत्र तु एष राजाहं वर्ते, शत्रुर्मयायं हतः इति मनोराज्यादौ स्वेच्छाप्रयत्नवशादेव रागद्वेषादिप्रयुक्तात् वाहनमात्मनो निर्दलनकारिणं शत्रोर्दन्तिनमन्तर्निर्मिमीते, तत्र स्फुटमेव स्वातन्त्र्यमस्येति तत्र स्वरूपावरणाभावात् कथं बन्धरूपतेति स्वयमाशङ्क्य अपाकरोति **'यापि वा'** इति । वाशब्दः समुच्चये । रागद्वेषादिग्रहणं पूर्वपक्षे स्वातन्त्र्यस्य प्रयोजकमिति उद्दीपकमभिमतं परस्य, तदेव तु प्रतिसमाधानावकाशकारणमिति दर्शयति **'बलात्'** इत्यादिना वाक्येन । यतोऽसौ क्षेत्रज्ञो बलादाक्रम्य अनिच्छुरिव रागादिपरीतो विकल्पप्रत्ययैः ककारादिवर्णविग्रहाभिर्मोहनीभिः शक्तिभिरुल्लासितैः क्रियते, तथाकृतश्च तां सृष्टिं देवताधिष्ठितैस्तैर्बलादाक्रम्य कार्यते मनोराज्योदयेऽपि अस्य पारतन्त्र्यात् सौमनस्याधायकमनोरथोत्थापनेच्छायामपि भयदौर्मनस्यादिनिदानभूतानां मनोराज्यान्तराणामोजःक्षयादावुदयात् । ततः स्वाधीनतया प्रमुखे

भासमाना अपि सा सृष्टिः पराधीना एवेति संबन्धः । एतदेव द्रढयति **'क्षेत्रज्ञताया एव'** इति । उन्मीलितस्वातन्त्र्यो हि असौ क्षेत्रज्ञ एव न भवति, अपितु भगवानेवेति । **'विकल्पाख्यव्यापार'** इतिवृत्त्या सूत्रे **'विकल्पक्रियया'** इति बहुव्रीहिरयं शक्तिं विशिनष्टि,—इत्याह ॥ १० ॥

यदि पाशवी बन्धरूपा, पारमेश्वरी तर्हि सृष्टिः किमित्याशङ्कायां सूत्रं

**साधारणोऽन्यथा चैशः सर्गः स्पष्टावभासनात् ।**
**विकल्पहानेनैकाग्र्यात् क्रमेणेश्वरतापदम् ॥ ११ ॥**

ऐश्वरस्य सर्गस्य स्पष्टावभासत्वम्, अत एव अविकल्प्यतेति रूपम् । सच घटादिः साधारणः सन् चकारादसाधारणो वा द्विचन्द्रप्रमुखादिः, उभयोऽपि पाशवसृष्टेरन्यथाभूतः; किंच साधारणो वा अन्यथा चेति असाधारणः । सोऽयं सर्गो यदा विकल्पहानक्रमेण अविकल्पकपरिगृहीतस्पष्टवस्तुविषयैकाग्रतावलम्बनेन अहमिदमिति ऐश्वर्यपरामर्शपदत्वमेति, तदा अन्तर्लक्ष्यबहिर्दृष्टिनिमेषोन्मेषपरिहारदशा क्रमादभ्यासतारतम्यपर्यन्ते पशोः पशुत्वं हन्ति, ईश्वरतां च दर्शयति । यथोक्तं

'कैवल्यं जायते सद्यो नेत्रयोः स्तब्धमात्रयोः ।'(वि०भै०११३)

इति । किंच पाशवोऽपि सर्गो अन्यथेति परिज्ञातया ईशशक्त्या परिज्ञाततादात्म्यस्य यदि स्पष्टावभासो भवति, तदा सोऽपि साधारण एव भवन्नीश्वरतामस्य ददाति आप्यायनाभिचरणादिविकल्प इव न्यस्तमन्त्रस्य भावितान्तःकरणस्य । सोऽपि च ऐश्वर एव सदा सर्ग इत्याशयेन विवृतौ वृत्तौ च न व्याख्यान्तरमेतदाश्रितम्, अस्माभिस्तु अभीष्टं स्पष्टतरमेव अभिधेयमित्येवं विभ-

क्तम् । सूत्रार्थमवतारयति **'एवम्'** इत्यादिना । **'इति च'** इति वक्तुमिति सम्बन्धः । ऐश्वरः सर्गो यतः साधारणः, तस्मात् पाशवात् सर्गादन्यथाभूतः; चकारात् योऽपि असाधारणः, सोऽपि द्विचन्द्रादिसर्गस्तस्मादन्यथाभूतोऽतिस्पष्टाभासत्वेन अविकल्प्य-तया,—इत्येवं सूत्रं विवृणोति **'ऐश्वर'** इत्यादिना **'अन्यथात्व-मेव'** इत्यन्तेन । सर्गस्य प्रमातृसाधारण्यादिचिन्ता क उपयुज्यते इति चेत् प्रमातृसाहित्येन प्रमेयस्य सृष्टिर्न अन्यथा भेदाव-भासभाजनं विना तदनुपपत्तेरिति दर्शयति **'सह'** इत्यादिना । **'उक्त्या'** इति वृत्तिगतया । **'एतावता'** इति वृत्तिग्रन्थेन । **'अत एव'** इति यत एकप्रमातृगतत्वमपि ऐश्वरसर्गस्य, ततोऽत्र सूत्रे **'साधारणोऽन्यथा च'** इति साधारणासाधारणपदे द्विधा ऐश्वरः सर्ग इत्यपि सूत्रार्थो वाच्य इत्यर्थः । ननु यदि स्पष्टास्पष्टाव-भासतया ऐशपाशवसर्गभेदः, सा तर्हि स्वप्नेऽपि अस्ति । सत्यं, तत एवहि सर्वत्र अपि उभयी स्थितैव सृष्टिः । तदाह **'स्वप्ने-ऽपि'** इति । **'तत्र'** इति । स्वप्नेऽपि हि सङ्कल्पनादि संवेद्यते एव । **'स्पर्शरसादि'** इति । आदिग्रहणात् गन्धरूपशब्दविशेषा अपि केचिदसाधारणा एव । अत एव

'............दृश्यं श्रव्यं च यद्भवेत् ।'

इति सकलप्रमातृसाधारण्यं न अपि अस्य मुनिना दर्शितम् । **'सा च अहमिदमित्येतावत्'** इति वृत्त्येकदेशः पठितः । **'तद-वभासस्य'** इति । मायीयस्य क्षेत्रज्ञस्य योऽवभासः, स यतः प्रतियोगिना अपोह्यमानेन सहितः; ततः प्रागुक्तमत्र विकल्प-लक्षणं

'.........स ह्युक्तो द्वयाक्षेपी विनिश्चयः ।' (१।६।१)

इति संभवति । इयं च भेदोदयसहिता स्पष्टावभासिता सर्वप्रा-

णिसाधारण्येन पशोरनिच्छत एव सतो भवति । नच रागादि-वदभ्यासापेक्षिणीति ब्रह्मणा अधिष्ठिता उच्यते । **'एवम्'** इति । **'भेदानुदयात्'** इति । अनेन ऐश्वरस्य सर्गस्य पाशवात् सर्गात् वैलक्षण्यं दर्शितम् । यत एवं, तदिति तस्मादीश्वरसृष्टिर्न बन्धहेतुः, अपितु तत्पृष्ठे या पाशवी; सा अपि न ब्रह्माधिष्ठिता भेदोदयमात्रसारा मायीयाणवमलमात्रोल्लासरूपा, अपितु कार्ममलाप्यायिका प्रत्ययसृष्टिरेव परामृतरसः स्वविश्रान्त्यानन्दघनता, ततोऽयमेव अपायो यः प्रत्ययसृष्टेरुद्भवो यतस्तेन अयं क्षेत्रज्ञतामस्वातन्त्र्यं प्रतिपद्यते । स च प्रत्ययोद्भवः परमेश्वरसृष्टशब्दादि-विषयपृष्ठ एव रागद्वेषाद्यात्मा उदेतीति । यदुक्तं

'तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः ।' (स्प०का०३।१४)

इति । एवं श्लोकार्धं व्याख्यातम् । अथ **'विकल्पहानेन'** इत्यादि यत् सूत्रं, तद्वृत्तिं **'तत्रान्तर'** इत्यादिकां व्याख्यातुमुपक्रमते **'तस्याश्च'** इति प्रत्ययसृष्टेर्यावदेव तानवापत्तिः । तत्र हेतुः **'विकल्प'** इत्यादिः । कस्मात् तथाभ्यास इति चेत्, आह **'बन्ध'** इत्यादि । **'इहैव'** इति सति अपि देहाहम्भावा-परित्यागे । यदाह भट्टदिवाकरवत्सः

'जाते देहप्रत्ययद्वीपभङ्गे प्राप्तैकध्ये निर्मले बोधसिन्धौ ।
अध्यावर्त्यैवेन्द्रियग्राममन्तर्विश्वात्मा त्वं नित्यमेकोऽवभासि ॥'

इति । अनेन सर्वेन्द्रियसाक्षात्कारकक्ष्यायामेव देहाद्युचितप्रत्ययसर्गप्रक्षये घटाद्याभासमात्रे सर्वप्रमातृसङ्कुचितनित्यसंवेदनावशेषत्वमबाह्यतासारमङ्कुतत्वेन उक्तम् । **'यद्यपि'** इति । **'सहभावे च अन्तरान्तरा'** इति युक्तमिति भावः । **'तथापि'** इति न अत्र विकल्पसृष्टेरन्तरान्तरा सम्भव उक्तः, किन्तु तन्निर्ह्रासस्य । मध्ये च विकल्पस्य निर्ह्रासो दृष्टः

'संहृत्य सर्वतश्चिन्तां················।'

इति

'विकल्पयन्नप्येकार्थं यतोऽन्यदपि पश्यति।' (प्र०वा०३।२०७)

इत्यादिदृशासु। तमेवच विकल्पनिर्ह्रासं यदि परिशीलयति, तदा अनवरतनिर्विकल्पकसंवेदनरत्नमालाभूषितहृदयः परमेश्वरपदमाविशतीति एवं सूत्रवृत्ती व्याख्याय, न अत्र दुर्लभतया अवसादः कर्तव्यः इति दर्शयन् कारुणिक आचार्यः संसारिणामपि एषा भूर्न न गोचरः केवलं तामेव उपदेशावधानाभ्यासनिःश्रेणिक्रमेण आरोहयेदिति उत्साहयन् पूर्वोक्तं प्रमेयमेकीकरोति **'संसारिणाम्'** इत्यादिना। इह च तत्त्वार्थसङ्ग्रहप्रकरणे पूर्वोक्तानि प्रमेयरत्नानि यदवान्तरायातप्रमेयान्तरेभ्यः प्रोच्चित्य दर्श्यन्ते सारत्वेन हृदयगञ्जे निवेशनया परमेश्वरतासिद्धये, तत् भूषणमेव; नतु पुनरुक्ताशङ्कया दूषणमिति भ्रम्यम्। तत्र भागनिर्विकल्पकममुनैव निर्णीतं भवेदित्याशयेन सर्वं निर्विकल्पसंवेदनमीश्वरभूरिति दर्शयितुमाह **'सामान्य'** इति। सामान्यकरणरूपे ये विद्याकलाशक्ती, तयोर्विजृम्भारूपत्वेन संबन्धीनि यानि अन्तर्बहिष्करणानि, तेषु ये शब्दावभासनचिन्तननिर्माणाद्य आकारविशेषास्तैरभिव्यक्तो यथायोगं ज्ञानक्रियाशक्तिलेशोऽपूर्णत्वेन येषामिति शब्दयोजनामात्रं कृतं प्रमेयस्य वितत्य निर्णीतत्वात्

'घटोऽयमित्यध्यवसा···················।' (१।५।२०)

इत्येतत्सूत्रटीकावसाने, आदिसिद्धसूत्रे, अन्यत्र च। एवं निर्विकल्पे वृत्तान्तमुक्त्वा अनेकदर्शिन एकविकल्पनेऽपि अयमेव वृत्तान्त इत्याह **'अनेक'** इत्यादि। एतदेव प्रमेयद्वयं घटयितुं प्रथमं तावत् प्रमेयं घटयति **'यतः'** इत्यादिना **'एव'** इत्यन्तेन। प्रकृत एतत् योजयति **'ततः'** इत्यादिना **'घटादिगतापि'** इत्यन्तेन।

अत्रच अहमिदमिति प्रतीतिरिति पूर्वेण सम्बन्धः । फलमस्य प्रमेयस्य आह '**तावति**' इति । ननु एवं संसारिता कथमित्याशङ्क्य मलत्रयमेव निरूपयन्नेतद्दशानुशीलनमेव मलनिवारणकारणं सत् मोक्षमाक्षिपतीत्यादिना ? '**केवलम्**' इत्यादिना '**भक्तजन**' इत्यन्तेन । '**कथ्यन्ते**' इति । इयति न किञ्चित् संवेदनमुदितं सहजस्य आवृतत्वात् कृतकस्य निर्जितत्वात् । '**उक्तम्**' इति आदिसिद्धसूत्रे । '**तत्**' इति प्रकाशाप्रकाशात्मकं सत्तानन्दसूत्रे (४।१।६) यत् रजः उक्तम् । '**तदा**' इति मायीयमातृमेयाभिव्यक्तौ । एतद्दशानुशीलनं च मोक्षहेतुरित्याह '**ततः**' इति । '**तन्मलद्वयव्यपगम एव मायोर्ध्वलाभ इति**' इति संसाराभावात् कैवल्यरूपा मुक्तिर्जाता । यदितु आणवमलविदलनमनवलिप्ततया कुर्यात्, शिवतावेशमपि लभत इत्याह '**तत्रापि**' इति '**भक्तजनः**' इति यो भगवच्छक्तिपातात् तथाभूतद्रढीयस्तमवासनातिरस्कारकसांसारिकवासनो, नतु तिरस्करणीयस्वविभवो, न भवति; तेन एतद्दुर्लभमेवेति भावः । इयत् च सर्वं स्वप्रकाशमेवेत्याह '**सर्वं च**' इत्यादि । '**तम्**' इति सहजमिदन्तावमर्शम् । ननु यदि '**इयम्**' इति विमर्शस्तत् निर्विकल्पकता कुतः । अत्र आह '**नच**' इति इहच अहन्ताच्छादनात् न प्रतियोग्याभास इति आशयः । '**आन्तर**' इति यतः संतमसेऽपि देहाभिमानः । '**सर्व एव**' इति दर्पणप्रतिबिम्बवत् शरीरस्पर्शादि बाह्यघटादि वा तदा भातीत्यर्थः । '**एतत्**' इति आन्तरस्पर्शादिप्रभृति घटाद्यन्तं यत् प्रकाशनं, तत् ग्राह्यग्राहकयोर्भेदेन विना न उपपद्यते इति यत् शङ्क्यते, तत् न । अत्र हेतुं स्मारयति '**यतः**' इत्यादिना । ननु एवं किं शास्त्रोपदेशादिप्रयासेन । अत्र आह '**एवंच**' इति स्वप्रकाशेऽपि विकल्पमोहेन तिरोहिते । ननु प्रकाशादभेदे नीला-

दिरूपता कुतः। आह **'चित्तत्त्वस्यापिच'** इति **'स्वतः'** इति संवेदनसंनिधौ नीलादि भासते इतिहि दर्शनेनान्तरविप्रलम्भाभावे भाति एव। **'प्रवादः'** इति मायीयलोकशास्त्रकल्पितः। ननु यत् नीलादि भासते, यत् वा अवधानातिशयवता योगिना अधिकमपि भास्यते; तावदाभासनरूपत्वं संवित्तत्त्वस्य अस्तु संवेदनसिद्धम्, विश्वावभासनरूपत्वं तु परमेश्वररूपत्वं कुतः, अधिकाधिकसंवेदनदर्शनात् तथाभावेऽपि योग्यता अस्येति चेत्, सा तर्हि कुतः प्रमाणात्। स्वप्रकाशत्वेन प्रत्यक्षादेवेति दर्शयति। विश्वाभेदावभासरूपपारमेश्वर्येऽपि या योग्यता, न केवलं स्वरूपमात्रं यावत्, सा अपि स्वतःसिद्धैव। कथम्। आह उक्तनीत्या यत् चित्स्वभावस्य पर्यालोचनमनवरतं

'.........प्रयत्नेन परीक्ष्यं तत्त्वम्......।'(स्प०का० १।७)

इतिनयेन परिशीलनं, तेन संस्कृतोऽधिवासित आशयो विकल्पो यस्येति। ननु योग्यता कार्यतः कल्प्या, न प्रत्यक्षसिद्धेत्याशङ्क्य बोधस्य तद्विषये स्वभावहेतुं वदतः सा प्रत्यक्षसिद्धैव सर्वः स्वभावहेतुर्व्यवहारमात्रसाधनफलः इति निर्णीतत्वादिति दृष्टान्तोपक्रमं निरूपयति **'अग्नीन्धनादि'** इति कालपरिवासापेक्षानपेक्षाविशेषणः कार्योदयादुभयोपादानम्। आदिग्रहणात् वैकल्यम्। ननु कारणता नाम शक्तिरूपो धर्म इति परोक्षैव सा। नेत्याह **'कार्य'** इत्यादिना **'दर्शनम्'** इत्यन्तेन। तदत्र पूर्णकारणत्वे प्रत्यक्षतया निरूप्ये संभावनीयकारणत्वे दृष्टान्तीकरोति **'यथा'** इति यदिहि अग्नेर्धूमं प्रति न संभावयते कारणतां धूमार्थी, तस्मिन् दृष्टेऽपि लोष्ट इव न सहकारिणः संबिभृयात्। एतत् दार्ष्टान्तिके योजयति **'तथा'** इति। यथाहि पूर्णता प्रत्यक्षीकृता तदधिकसंभरणप्रयत्नादर्शनात्, तथा पूर्णकारणता अपीति

यावत् । ननु न अग्नेः स्वरूपमात्रदर्शनं कारणतादर्शनम्, अपितु अग्नेः पश्चात् नियमेन धूम इत्येवं दर्शनीयं तत्कारणत्वदर्शनम् । एतदपि अस्तु, तथापि अग्नेरेव तत् तथादर्शनं जातं येन कालान्तरे धूममपश्यतो धूमार्थिनो वह्निसंभरणम् । एतदाह **'कार्य'** इत्यादि । इत्यपि यदुच्यते, तत् युज्यते यतस्तेन उक्तेन तत् न उल्लङ्घितं भवति यदस्माभिरुक्तं—कारणताविषयं प्रत्यक्षसिद्धत्वम् । कथमेतत् न उल्लङ्घितम् । आह **'तथा'** इति अग्न्यनन्तरं धूमज्ञानमित्येवंसंस्कृतस्य पुरुषस्य अग्निमात्रनिष्ठस्तथावभासः कारणतावभासोऽस्ति यथा धूमपश्चाद्भावावलोकने साहित्यम् । अत्र निश्चयापेक्षानियतपौर्वापर्यतैव प्रत्यक्षानुपलम्भगोचरीकार्या मन्तव्या । एवं दृष्टान्तं विचार्य प्रकृते योजयति **'एवम्'** इति । सा च इयं सर्वार्थावभासनयोग्यता नाम ईश्वरत्वात् प्रभृति शिवतापत्तिपर्यन्ता सती अपि ज्ञानियोगिदीक्षितानां निवृत्तमलत्वेऽपि मलसंस्कारस्य सद्भावादनभिव्यक्ता तस्य प्रक्षयेऽभिव्यज्यते यतो देहक्षये मुक्तः । मलसंस्कारस्य वा देहाद्यावरणरूपस्य सत एव अभ्यासेन शिवतामावेशयति यदा, तदातु न पूर्णा सा शिवता ईश्वरता वा अभिव्यक्ता भवति । देहादिसंस्कार एवहि तथा विलुप्येत, तत एव सा न परा सिद्धिः, अपितु अपरा, परापरा वेति । इह अपि पूर्वमुक्तं **'कंचित् विभूतिभागम्'** इति । एवं निर्विकल्पकरूपमवभासनं चिद्रूपस्य ज्ञानशक्त्यात्मकं स्वसंवेदनसिद्धमैश्वर्यं समर्थ्य क्रियाशक्त्यात्मकमपि समर्थयते **'भेदपरामर्शोऽपि'** इत्यादिना । पूर्वं च यद्यपि स्वप्रकाशे प्रमाणव्यवहारो यत्नेन अपसारित आदिसिद्धसूत्रे **'प्रमात्रेकवपुषः'** इति, तथापि सिद्धे वस्तुतत्त्वे स्वप्रकाशतैव यदि एताभिर्वाचोयुक्तिभिरुच्यते ज्ञानमाला इव आत्मशब्देन शाक्यैः, तत् वस्तुनि

का क्षतिरित्याशयेन सर्वजनाश्वासस्थानभूतप्रत्यक्षादिवाचोयुक्त्या व्यवहारोऽपि अदुष्ट एव । आदिपदेन आगमादिः । एवमदूरतोपपादनेन अस्य

'················अन्तिकं च तत् ।' (भ०गी० १३।१५)

इति स्मारणेन शिष्यान् प्रोत्साह्य प्रकृतं सूत्रार्थं निगमयति **'तदेवम्'** इत्यादिना ॥ ११ ॥

एवं विकल्पनं तनूकृत्य निर्विकल्पकसात्मीभावेन विश्वात्मसाक्षात्कारलक्षणः स्वप्रत्यय एव स्वप्रकाशत्वेन मोक्षो दर्शितः, विकल्पनिर्ह्रासाभावे तु यथा स, तथा दर्शयति सूत्रेण

**सर्वो ममायं विभव इत्येवं परिजानतः ।**
**विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥ १२ ॥**

न प्रत्यगात्मा नाम कश्चिदन्योऽहं, किन्तु ग्राह्यग्राहकप्रकाशघनः परमेश्वरो यः, स एव अहम् ; सच अहमेव, न अन्यः कश्चित् । ततो विकल्पसृष्टिरपि मम स्वातन्त्र्यात्मा विभवः,—इत्येवंविमर्शे दृढीभूते विकल्पा अपि अस्य महाविमर्शपतिता अविकल्पीभवन्ति । यथा उक्तं श्रीपारदर्शने

'शङ्कापि न विशङ्क्येत निःशङ्कत्वमिदं स्फुटम् ।'

इति । **'केवलम्'** इत्यादिना बन्धात्मकमपरिज्ञानं प्रदर्श्य इतरत् दर्शयति **'परिज्ञानं तु'** इति । स्वावरणरूपो विभवः क दृष्ट इत्याशङ्कां

'यथा नृपः सार्वभौमः प्रभावामोदभावितः ।
क्रीडन् करोति पादातधर्मांस्तद्धर्मयोगतः ॥
तथा प्रभुः प्रमोदात्मा················।' (शि०दृ० १।३८)

इति शिवदृष्ट्याशयेन दृष्टान्तान्तरेण शमयति **'यथावा'** इति

'प्रकृतित्वमपि प्राप्तान् विकारानाकरोति सः ।'

स एव ब्रह्मलक्षणः स्वस्वभावो विकारान् स्वं स्वं रूपं विकिरतः खण्डयतो विकल्पादिरूपानाकरोति स्वशक्तिविक्षोभात्मकान् प्रकटयति । ते च विकाराः प्रकृतित्वं विश्वव्यवहारबीजत्वं प्राप्ता यथा ऋतून् धत्ते इति ऋतुधामा आदित्यो घर्मान्ते कुलीरमृगराजराशियुगभोगात्मके संचारविशेषे प्रावृडिति प्रसिद्धे स्वस्वविभवभूतानन्तःसौषुम्नानाडिकतादात्म्यप्रतिपन्नपूर्वप्रसरणप्रारम्भयोगिविश्वरसप्रचयरूपान् स्वरूपस्य भास्वरस्य विकीर्णतामावृत्तिं च निर्भासयतो महतो विश्वौषधीफलादिरसप्रकृतिभूतान् मेघसंप्लवानाकरोति,—इति भर्तृहरिपठितागमग्रन्थसंवादो दर्शितः । **'प्रत्यापद्यन्ते'** इति स्वरूपमेषां विमर्शमात्ररूपं, तदेवच पुनरापतितं मायाप्रमातृत्थापितविशेषावभासभङ्गादिति प्रत्यापत्तिरियमुच्यते । **'महेश्वरतैव'** इति वृत्तिं विवृणोति **'प्रत्यभिज्ञा'** इत्यादिना ॥ १२ ॥

ननु एवं बद्धमुक्तयोः प्रमेयं प्रति को भेद इत्याशङ्कायां सूत्रं

**मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते ।**
**महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत् ॥ १३ ॥**

श्रीमत्सादाख्यपदात् प्रभृति आक्रिमि यो मातृवर्गस्तदधिष्ठातृ यदहमितिरूपं,तदेव आत्मतया मुक्तोऽभिनिविशते । ततश्च विश्वस्य यत् प्रमेयं, तत् मम अपि; यत् मम, तदन्यस्य अपि । मेयं च इदं ममैव अङ्गभूतं, मेयान्तरपि तथा,—इत्येवं मेयं परस्परतो मातृवर्गात् च अव्यावृत्तमिति एकरसाभेदविश्रान्तितत्त्वमस्य सर्वं परामर्शपदमभ्येति । यत् निरूपितं शिवदृष्टौ

'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना ।
सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना ॥' (५।१०६)
'अत्राकारे न यन्मेऽस्ति तदाकारान्तरेऽस्ति मे ।' (७।९१)

'अत्राकारे न मे पूजा साच सादाशिवात्मनि ॥' ( ७।९३ ) इत्यादि । बद्धस्य तु सर्वमेतत् विपर्ययेणेति एकघनभेदविश्रान्त एव स इति सूत्रार्थः । **'तुल्यम्'** इति क्रियाविशेषणम् । तस्य अर्थः **'साहित्येन अविशेषेण च'** इति । तदिति वैलक्षण्येन आह । ग्राहकोऽपि भेदैकरस एव भाति, न केवलं ग्राह्यमित्येनं भेदस्य अतिशयं विवृत्य ग्राह्यगतस्य एव भेदस्य प्ररूढिलक्षणमतिशयं पक्षान्तरपरिग्रहदिशा विवृणोति **'अथवा'** इति । **'तथापि'** इति आस्तां तावदभेदः परमः, परापररूपतया अपि स न अस्तीत्यर्थः । **'तथात्वस्य'** इति यथायोगं बद्धमुक्तभेदेन परिज्ञानापरिज्ञाने योज्ये, नतु यथाक्रमम् ॥ १३ ॥

ननु सदाशिवेशभूमौ जीवन्मुक्तिपदे पशुप्रमातृगोचरे च प्रमेयवृत्तान्तः परीक्षितः, परमशिवे तु कथमसौ; विकल्पाविकल्पभुवि च योगिनः प्रोन्मीलितकरणस्य उक्तः प्रमेयक्रमः, निमीलितसकलकरणस्य तु कीदृगसौः; न कश्चिदेव तत्र असाविति सूत्रेण आह

सर्वथा त्वन्तरालीनानन्ततत्त्वौघनिर्भरः ।
शिवश्चिदानन्दघनः परमाक्षरविग्रहः ॥ १४ ॥

सर्वथापदस्य व्यवच्छेद्यं विवृणोति **'सर्वम्'** इत्यादिना । **'अवभास एव'** इति प्ररूढिं न प्राप्त इति तु अन्यदेतदिति आकूतम् । निर्भरपदं विवृण्वानः परत्वमत्र अन्वर्थेन दर्शयति **'अहंप्रतीतिरेव पूर्यते'** इति शुद्धत्वं स्फुटयति **'स्वाङ्गभूतेऽपि'** इति । दूरापेता तावत् भिन्नप्रमेयाकाङ्क्षा, दैन्ययोगिनी प्रमातृतेति अपिः । **'चिदानन्दघनः'** इति सौत्रम् **'अहंप्रतीतौ पूर्णायाम्'** इतीयता व्याख्यातमिति प्रकटयति **'पूर्णो वा'** इत्यादिना **'उच्यते'** इत्यन्तेन । **'परमाक्षर'** इत्यपि अनयैव व्याख्यया व्याख्यातम् ॥ १४ ॥

एवमधिकारचतुष्टयोक्तं यत् वस्तु, तत्फलमाह सूत्रेण

**एवमात्मानमेतस्य सम्यग् ज्ञानक्रिये तथा ।**
**जानन् यथेप्सितान् पश्यञ्जानाति च करोति च ॥ १५ ॥**

एवमिति ईश्वररूपमात्मानं, तस्य शक्तिरूपे ज्ञानक्रिये पश्यन्, नतु कापिलकाणादादिदिशा समावृण्वन्, यत् यदिच्छति; तत् तत् जानाति करोति च समावेशाभ्यासपरोऽनेनैव देहेन, अतत्परोऽपि सति देहे परमेश्वरप्रमातृतद्दर्शनदृढहृदयो जीवन्मुक्तः, तत्पाते परमेश्वर एवेति पूर्वोक्तं समस्तमर्थं संक्षेपान्तरेण सूत्रवृत्त्यर्थयोजनादिसमस्तविघ्नलेशविरहितेन निर्मक्षिकमेव शिष्यधियि निवेशयितुं परमकारुणिकत्वेन प्रत्यावर्तयन् '**एवम्**' इति सौत्रं विवृणोति '**इह**' इत्यादेः । मायापदेऽपि एवंभूतश्चित्प्रकाशः । अस्य च देशकालास्पृष्टत्वम्, अतोऽयं पूर्णः शिवसंज्ञ इत्येवं परमशिवत्वं दर्शितम् । सदाशिवेशरूपतामपि आह '**सच**' इत्यादिना । एवं परमेश्वरपरमशिवान्तर्वर्तितच्छक्तिरूपसदाशिवेशदशादर्शपतितैव इयं मायामयी संसारभूमिरित्याह '**तथा**' इत्यादिना । सा च चिद्रूपं न खण्डयतीति दर्शयति '**अत्रापि च**' इति । '**काचित्**' इति नेति सम्बन्धः । तेन न स्वरूपेण शक्तौ काचित् खण्डनेति उक्तं भवति । अत्र हेतुः '**मनागपि**' इति नीलाद्याभासत्वं भिन्नभिन्नं, शुद्धप्रकाशात्मता च कालास्पृष्टेति एकस्या एव संविद इयत् वपुरिति दृष्टान्तेन घटयति '**यथा बौद्धानाम्**' इति । '**अभावात् तस्य**' इति निमित्तान्तरस्य, तदपि अप्रकाशतायां न किञ्चित्, प्रकाशत्वे चिदेव इयत् । '**प्रथमत एव**' इति स्वप्रकाशत्वेन अयत्नसिद्धतामाह । तथापि उपदेशोपयोगमाह '**केवलम्**' इति । पूर्वपक्षमपि संक्षिप्य स्मारयति '**यत्त्वत्र**' इति विवदन्तीति सम्बन्धः । '**एषाम्**'

इति भिन्नानामवभासानामाश्रयभूतस्य प्रमातुः प्रतीतिर्न विषयैवेति सम्बन्धः। अत्र हेतुः '**अव्यतिरिक्तविषया**' इति अहमिति तावत् विकल्परूपः प्रत्ययोऽव्यतिरिक्तस्वात्मविषयश्च, व्यतिरिक्तो हि इदमिति विकल्पः। तत्र स्वात्मविषयत्वं विकल्पत्वमेति असङ्गतमदः स्वात्मनो विकल्प्यत्वासंभवात्। अत्र च

'अशक्यसमयो ह्यात्मा·················।'

(प्र० वा० ३।२४९)

इत्यागमोऽनुसर्तव्यः। ननु यदि एतदसङ्गतम्। किं तर्हि एतत्। '**आत्मग्रहोऽयमविद्या**' इति असत्ख्यातिरूपं भ्रममात्रमेतदिति यावत्। तादृश एव क्षणस्थितिधर्मा स भाव उत्पन्न इति का विरोधचिन्ता यत उक्तः '**असतो नाम विरोधात्**' इत्येवं निर्वर्णयता बौद्धेन विरुद्धधर्माध्यासपरमास्त्रत्यागस्तावत् कृतश्च एवमपि शक्यते वक्तुम्—आमुद्गरसंपातस्थायी संजात इति। तदेतदाह '**नच**' इत्यादिना। ननु यदैव भावः सन्, तदैव यदि न सन्; तदा विरोधः। यदा तु क्षणान्तर एव असन्, तदा कालभेदात् को विरोधः। एतदाह '**द्वितीयेऽपि**' इति द्वितीयक्षणे नाशेन सह न विरोध इत्येतदपि यदुच्यते, तदपि न नाशकृतत्वादेव क्षणद्वितीयतायास्तस्या एव पर्यनुयुक्तत्वात् विरोधचिन्तया। तदाह '**सत्यम्**' इति। एवं कालसङ्कोचं क्षणिकतानिबन्धनमपाकृत्य परमाणुतानिबन्धनं देशसङ्कोचमपि अपाकरोति '**देशभेदेऽपि**' इति। आभासस्वभावस्य कथमनाभासरूपतेति अस्माभिः पर्यनुयुक्तं, तत् कथमेतदेव उत्तरीकर्तुं युक्तमिति आशयशेषः। इयता क्षणपरमाणुमात्रतोद्ग्राहणेन भावतत्त्वं सङ्कोचेन दूषितनिजरुचि रचयन्तो जडानामुद्गारैरित्यत्र पक्षे निक्षिप्ताः। ततो भावानां परमविकास एव तत्त्वमिति उक्तं

भवति, जडानां वा यदस्ति, तदस्तु; संविदस्तु कालादिसङ्कोचः सर्वथा न युक्त इत्याह **'नच चितः'** इति । ननु नीलादिप्रतिष्ठास्थानं संविदुच्यते, सा च साभासैव। नेत्याह **'निरवभासा'** इति। यदुक्तं

'यद्यप्यर्थस्थितिः··················।'(अ०प्र०सि०२०)

इति। **'तत्प्रसङ्गेन'** इति। एतदेव स्फुटीकृतं **'क्रियाकारक'** इति । **'अर्थभेदेन अपि'** इति **'एकानेकरूपता'** इति पूर्वेण सम्बन्धः । **'तयोरपि'** इति देशकालयोः। ननु यथा शुक्तिरजताभासस्य विमर्शानुवृत्तिभङ्गेऽस्थैर्यं शुक्तिविमर्शस्य अनुवृत्तिघनत्वेन स्थैर्यमित्येवं शुक्तिरेव इयं, न रजतमिति विप्लवत्वं व्यवस्थाप्यते; तथा प्रमातरि भविष्यति । एतत् निषेधति **'न आभासीय'** इति आभासेषु एव एतदुचितं वक्तुं येषु व्यतिरिक्तो विमर्शः, नतु संविदि अव्यतिरिक्तविमर्शायामिति तद्धितस्य अभिप्रायः। सति च बाधके युज्यते एतत्, इह च तत् नेत्याह **'नचापि'** इति। प्रत्युत परदृशि बाधकमस्तीत्याह **'अस्थैर्य'** इत्यादि । ननु अविचारितचारुतासारमसमञ्जसमुपप्लुतमिदं सर्वम्, अस्तु तावदेतदपि बाधयितुं, बाधश्च सति स्थिरे प्रमातरीत्याह **'आसमञ्जस्य'** इति । **'अत्रैव'** इति स्वस्यामुक्तौ तृतीयराश्यभावेन परैः समर्थित इति अभिप्रायः। एवं तुष्येदिति सम्बन्धः । **'तदपि'** इति अन्यत्वं संवेदनात्, संवेदनं च एकसामान्यविषयमपि अस्त्येवेति विशेषरूपतया अनेकत्वं, सामान्याकारेण च एकत्वमिति एकानेकरूपताप्रतीतिः । ननु राज्ञो विशेषणत्वेन अहंप्रत्यवमर्शनीयत्वे स्वरूपमेव लुप्तमिति अविशिष्ट एव पुरुषः स्यादित्याशङ्क्य आह **'इदन्तापरामर्श'** इति। **'इदन्तया'** इति निरूढयेति शेषः। एवंशब्दार्थं व्याख्याय

एतदेकवाक्यत्वेन '**आत्मानम्**' इति व्याचष्टे '**एवमेकश्चिन्मयः**' इत्यादिना। ननु ऐकाधिकरण्येन एकरूपा संविदीश्वरता, सैव व्यवहारकाले, नतु शिवता। एतदाशङ्क्य परिहरति '**तयोश्च**' इति। ततश्च ईश्वरता अपि परमशिवरूपान्तर्लीनैव स्फुरति, तत एव उच्यते

'यत्र स्थितमिदं सर्वं कार्यम्............।' (स्प०का०१।२)

इत्यादि,—इति शिवम् ॥ १५ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां तत्त्वार्थसङ्ग्रहाधिकारे मातृमेयबन्धमोक्षतत्त्वविमर्शस्तृतीयः ॥ ३ ॥



# अथ चतुर्थो विमर्शः ।

प्रसृतमनुत्तररूपादानन्दादिक्रमेण विश्वमदः ।
सर्वामृतधरमन्तर्बहिश्च विसृजन्तमभिवन्दे ॥

ज्ञानक्रियाधिकारयुगलेन तत्त्वार्थसङ्ग्रहसहितेन स्वप्रकाशेऽपि तत्त्वे युक्त्युपबृंहिते निरूपिते **'स्वतः'** इत्यंशः पूरितः आगमाधिकारेण, तमेव अर्थमुपोद्बलयता **'शास्त्रतः'** इति अयम् । शास्त्रदृष्टिरपि तत्प्रसिद्धगुरुपरम्परोपदेशेन सम्यगागमत्वं नेया । यथा उक्तं प्राक् **'शाम्भवनीत्यादीनामपि'** इत्यादि । तत एव परमहृदन्तरालदिव्यदिव्यादिव्यादिव्यसम्बन्धमनाहत्य स्वबुद्धिपुस्तकमात्रशरणा विडम्बिता इत्याशयेन

'पुस्तकाधीतविद्याश्च गुरुक्रमविवर्जिताः ।
आचरन्तो दिशन्तश्च पच्यन्ते नरके चिरम् ॥
यातनाराजराजानां ते भोक्तारो विनिन्दिताः ।
तस्माद्गुरुक्रमायातं दिशन्नेति परं शिवम् ॥'

इति उक्तम् । ततो **'गुरुतः'** इति अयं तृतीयः अंशः पूरयितव्यः । उक्तं हि श्रीकिरणायां

'..................गुरुतः शास्त्रतः स्वतः ।'

इति । तमंशं पूरयितुं श्लोकत्रयेण प्रकारान्तरमाह । तत्र प्रथमश्लोकेन स्वगुरुपर्वक्रमं वदन्नादिश्रीकण्ठनाथात् प्रवृत्तिमस्य दर्शयति उपदेशस्य अपूर्वत्वेन अप्रयासकारित्वेन अवश्योपदेश्यतां च । द्वितीयेन अभिज्ञानप्रकटनात्मना उपदेशः सतोऽपि असत्कल्पस्य अनुप्राणकः इति तत्र आदरः कर्तव्यः इति दर्शितम् । तृतीयेन व्याख्यानश्रवणचिन्तनाभ्यसनसाफल्यसिद्धये स्वकपूर्वगुरुवन्दनमवश्यं कर्तव्यमिति शिक्षया प्रवृत्तशिष्यानुग्रहाय स्वात्मनो गुरुत्वे योग्यताभिधानाय

'कीर्तनीयो गुरोर्वर्गः शास्त्रार्थस्य प्रसिद्धये ।'

इतिनयं पालयितुं पितुरलौकिकवस्तुविषयप्रसिद्ध्यभिधानेन

'उपकाराय प्रसिद्धो दिष्टे लोकः प्रवर्तते ।'

इति लोकस्य अप्रवृत्तस्य प्रवर्तनाद्वारेण च अनुग्रहाय च स्वात्मनो वंशप्रदर्शनपूर्वकनामप्रकटीकरणपुरःसरमधिकारप्रयोजनसम्बन्धाभिधेयाभिधानानां निगमनमिति प्रकरणार्थः । प्रतिश्लोकं तु अर्थो निरूपणीयः । सच स्पष्ट एव, वृत्तिविवृत्योश्च निरूपितः । यत्तु किञ्चित् किञ्चिदस्पष्टमत्र, तदेव विमृश्यते

**इति प्रकटितो मया सुघट एष मार्गो नवो**
**महागुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा ।**
**तदत्र निदधत्पदं भुवनकर्तृतामात्मनो**
**विभाव्य शिवतामयीमनिशमाविशन्सिध्यति ॥ १ ॥**

'**अत एव**' इति यतः प्रत्यभिज्ञामात्रात् मोक्षः, तत एव यमनियमादिक्लेशयोगोऽनुपयोग एव अत्र । '**अस्पष्टत्वात्**' इति

'स्फुटोपायमनायासमनारम्भं महाफलम् ।
श्रोतुमिच्छामि देवेश योगं योगविदां वर ॥'

इति

'प्राणायामादिकैरङ्गैर्योगाः स्युः कृत्रिमा यतः ।
तेन नाकृतकस्यास्य कलामर्घन्ति षोडशीम् ॥'

इत्यादि च यदपि रहस्यागमेषु निरूपितम्, तथा विस्पष्टत्वेन न उक्तं गर्भीकृत्य तु निरूपितं

'नचैतदप्रसन्नेन शङ्करेणोपदिश्यते ।
कथञ्चिदुपलब्धेऽपि वासना न प्रजायते ॥
वासनामात्रलाभेऽपि योऽप्रमत्तो न जायते ।
तमनित्येषु भोगेषु योजयन्ति विनायकाः ॥'

इति । यदि अहं परमशिवः सर्वज्ञसर्वकर्तृत्वात्, तर्हि किमिति न शत्रून्सर्वान् सपदि ग्रसे इत्यादिर्मायीये देहादावनभ्यासेन विभवेच्छामयो हि परमो विघ्नः । स एतच्छास्त्रार्थपरिशीलनेन निवर्तते । लोके मोक्षोपायत्वेन न प्रतीताः, तदभावे तु लोकप्रसिद्धा ये ज्ञानक्रियादयस्तैरिति व्याख्या । प्रथमं पादं व्याख्याय द्वितीयं व्याचष्टे '**एष च**' इत्यादिना '**अनाविष्ट**' इत्यन्तेन

'विकल्पहानेनैकाग्र्यात्………………….।' (४।१।११)

इत्यत्र अनुप्रवेशः उक्तः '**शश्वत्**' इत्यादिः ।

'सर्वो मम………………………. ।' (४।१।१२)

इत्यत्र '**शिवपद**' इत्यादिना स्वात्मनि मायामोहसंस्कारकलुषसाधकवर्गाभिलषितोचितविभूत्यनासङ्गेन सम्यक्तत्त्वदर्शितया कृतकृत्यत्वे ज्ञानक्रिययोः परिशेषविशेषत्वात् परानुग्रहतन्त्रता । सकललोकलोचनतां प्रपन्नेन अवलोकत्वेन प्रसिद्धिपर्यवसानं नाम पूर्वोक्तगुरुलक्षणम् । '**शिवदृष्टि**' इति तद्गतमाश्रीकण्ठनाथात् गुरुपर्वक्रमं सूचयति । तत्रहि श्रीश्रीकण्ठनाथः शासने समुत्सन्ने श्रीदुर्वासोमुनिं तदवतारणाय दिदेश, सोऽपि श्रीत्र्यम्बकादित्यं त्रैयम्बकाख्ये लोकप्रसिद्ध्या तैरिम्बाभिधाने गुरुसन्ताने प्रवर्तयितारं मानसं ससर्ज,—इत्यादि वितत्य उक्तम् । श्रीकण्ठनाथश्च अधिगततत्त्वः श्रीमदनन्तनाथात्, सोऽपि श्रीभगवच्छक्तितः इत्यादि आगमेषु निरूपितमिति संपूर्णो गुरुपर्वक्रमः उक्तः । '**समूढः**' इति प्रबोधितः, पक्वचन्दनादिसंस्कारस्थिरीकृतसौरभश्च । घनसारः कर्पूरम् । अष्टादशभुजाद्याकारसाक्षात्करणभ्रान्तिर्विकत्थनोऽयमद्यापि अतत्त्वज्ञोऽयमनुपयोगिनिरूपणरसिकोऽयमितिच प्रतीतिफला मा भूदित्याशयेन आह '**अन्तःकृत**' इति । चित्रकर्मणः क्व प्रकृते उपयोगः । आह तज्ज्ञानस्य

एव ऐश्वर्यज्ञानस्य अधिकालौकिकवस्तुप्राप्तौ मूढानां दृढप्रत्ययता भवतीति । द्वितीयमर्धं विवृणोति '**ईश्वर**' इत्यादिना । अनेन हेतुतृतीयान्तेन पदेन '**तत्**' इति सौत्रं तस्मादित्यर्थं विवृतवान् ।

'................जीवन्मुक्तो न संशयः ।'

इत्यादिषु आगमस्थानेषु नियमार्थव्याख्यानाय वृत्तौ यः एवकारः, तं व्याचष्टे '**देहपातात्**' इत्यादिना । अद्भुततमत्वमपि च एवकारेण सूचितमस्य उपदेशस्य । '**देहपातादेकभविको मोक्षः**' इतिहि एतदेव तावदद्भुतम् ।

'इहैकभविको मोक्ष एष तावत् परीक्ष्यताम् ।
अनेकभविको मोक्षः पश्चात्स च गमिष्यति ॥'

इति हि परमकृपालुना भगवता आगमग्रन्थेन निरूपितमद्भुतत्वम् । इदं तु अद्भुततमं यत्किल जीवन्नेव मुक्त इति ॥ १ ॥

**तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके**
**कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।**
**लोकस्यैष तथानवेक्षितगुणः स्वात्मापि विश्वेश्वरो**
**नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥ २ ॥**

'**उपयाचितैः**' इति देवताप्रार्थनदूतीप्रेषणात्मावस्थानिवेदनाभिः । '**तन्व्याः**' इति विरहकृशायाः '**न रन्तुमलम्**' इति संबन्धः । प्रत्यभिज्ञानमात्रादानन्दलाभः, परिशीलनात् तु संभोगसहस्रप्राप्तिरिति तुल्यमुभयत्र । '**वस्तुविशेष**' इति वस्तुनि अर्थक्रियालाभे । '**कान्ते च**' इति पूर्वदृष्टेऽपि मोहात्पूर्वमविज्ञाते इति भावः । '**यद्वा**' इति निर्भाते अपि अनिर्भातकल्पत्वं, ततो दृढनिश्चये तथाभिमान इति उभयत्र अपि तुल्यमिति यावत् । '**एकता प्रकाशात्मा**' इति '**सोऽयं**' इति हि अत्रापि तत्त्वेदन्तयोरेकीकरणं प्रकाशनम्, इहापि ईश्वरताहन्तयोरित्यर्थः ।

'**आश्रयौचित्य**' इति । दृष्टान्तदार्ष्टान्तिकरूपौ यावाश्रयौ, तदौचित्यादेव तद्बलानीतो विशेषो भूषणम्, अन्यथाहि ऐक्यमेव स्यात्, न सादृश्यम् ॥ २ ॥

जनस्यायत्नसिद्ध्यर्थमुदयाकरसूनुना ।
ईश्वरप्रत्यभिज्ञेयमुत्पलेनोपपादिता ॥ ३ ॥

यः कश्चित् जननधर्मा, तस्य अतः सिद्धिः; ननु अत्र जात्याचारादौ भरः इति सर्वानुग्राहकत्वमुक्तम् । एतच्च प्रारम्भे एव अस्माभिर्वितितम् । '**ततोऽपि**' इति यशःसमुचितेन फलेन पितुर्योगात् । '**अस्य**' इति कर्तुः । अनेन सर्वतः कृतकृत्यत्वं दर्शितम्,—इति शिवम् ॥ ३ ॥

विवृतिकारः संक्षिप्य सर्वमाह '**इत्थम्**' इत्यादिश्लोकैः । अनेन अस्मदुक्तेन ईश्वरताप्रकारेण या सुसंवित्तिः स्थिता, ताम् । '**लाट**' इत्यादिना पूर्वं शुद्धवंशजन्मनो द्वितीये वागीश्वरीगर्भजन्मनि कृते पूर्णं द्विजत्वं भवतीति । '**अन्तःप्रकृतिः**' इति अमात्यसुहृत्प्रायः । '**कर्काभिधानः**' इति यदीयं कर्कसंग्रहादिशास्त्रम् । जन्ममात्रे चरमेऽभिमानः इति दर्शयति '**त्र्यम्बक**' इति

'तिस्रो देव्यो यदा चैनं················ ।'

इति शक्तित्रयपरिपूर्णत्र्यम्बकदास्यलक्ष्मीयोगात् पूर्वोक्तमितात्मतागुणीकरणतद्रूपतोन्मज्जनसमावेशात् तद्दासः कृतकृत्यत्वेन साभिमानोऽस्मि । '**भोग**' इत्यादि विश्वेश्वरस्य प्रत्यभिज्ञामृतस्य च विशेषणम् । अस्य उपादेयतामाह '**प्रायेण**' इत्यादिना । खेटपालाचार्यप्रभृतयो द्वैतप्राधान्यमशिश्रियन्, तदनुसारिणोऽपि अन्ये तथैव । '**अविद्यया**' इति अनिर्वाच्यरूपया । अयं ब्रह्मवादोऽपि न एकान्तवादो, न निश्चिताद्वयवादः इति । मतं न विशदमिति सम्बन्धः । आत्मा ईश्वरो नास्ति तेषां यो वस्तुतो-

ऽस्ति, सन्तानान्तरं च अस्ति यत् वस्तुतो नास्ति,—इति । **'अवसन्न'** इति उपायलाभाभावात् । अस्मिंस्तु सति आगमेषु द्वैतव्याख्यानमपास्य ब्रह्मवादे अविद्यां मायाशक्तीकृत्य विज्ञानाद्वयमात्मेश्वराभिप्रायेण निरूप्य सिध्यति एव जनो यथा पूर्वमुक्तमिति दर्शयति **'अस्मिन्नेवम्'** इति । पारमेश्वरेषु तावदागमेषु शैववैष्णवरहस्येषु वेदान्तेषु च स्पष्ट एव उक्तोऽयमस्मदुक्तोऽर्थः । तदनुसारिणा एव सुगतेन उक्तं

'चित्तमात्रमिदं यदुत त्रैधातुकम् ।'

इति । तदत्र विवरणकारैर्दुरभिनिवेशवशेन विप्रतारितो जनः । इदमेव तु तत्त्वमिति तु तात्पर्यम् । अत एव प्रथातोऽखिलग्रहणेन इदमाह—सकलो लोकः सकलं च शास्त्रमस्माभिर्यद्यपि न अवलोक्यते, तथापि यत्किञ्चित् वस्तु वा, विकल्पितं वा; तत् सर्वं प्रथमानमेव सत् भवति । प्रथमानता च प्रथारूपात् भगवतः परमशिवादनतिरेकिणी,—इति स एव पर्यन्तोपासनीयः परमशिवः उपासितः कल्पते परमशिवाय,—इति शिवम् ॥

भट्टात्रिगुप्तकुलजातवराहगुप्त-
　जन्माभवत् चुखुलकः शिवमार्गनिष्ठः ।
श्रीभूतिराजवदनोदितशम्भुशास्त्र-
　तत्त्वांशुशातितसमस्तभवान्धकारः ॥ १ ॥
तज्जन्मदेहपदभाक् पदवाक्यमान-
　संस्कारसंस्कृतमतिः परमेशशक्तेः ।
सामर्थ्यतः शिवपदाम्बुजभक्तिभागी
　दारात्मजप्रभृतिबन्धुकथामनाप्तः ॥ २ ॥
नानागुरुप्रवरपादनिपातजात-
　संवित्सरोरुहविकासनिवेशितश्रीः ।

श्रीशास्त्रकृद्घटितलक्ष्मणगुप्तपाद-
सत्योपदर्शितशिवाद्वयवाददृप्तः ॥ ३ ॥

सर्वान्यशासनकथाः कलविङ्ककेलि-
कल्पाः परं प्रकलयन्निह शास्त्रसारे ।
आज्ञामलङ्घ्यफलदां गुरुनाथपाद-
नित्यार्चनस्मरणयोगकृतामवाप्य ॥ ४ ॥

श्रीशाम्भवाद्वयपदे जनतां नियोक्तु-
मभ्युदितः सकलसंपदुदारवृत्तौ ।
टीकाविमर्शमकरोल्लघुना नयेन
स्पष्टेन चाभिनवगुप्तपदप्रतिष्ठः ॥ ५ ॥

नादातुं नच दातुमेष सुलभः किं कृत्यमेतावते-
त्येवं तर्कयता जनेन शकलीकृत्याथ यद्गृह्यसे ।
माणिक्याचल चन्द्रकीर्तिरचला सा ते जगद्व्यापिनी
लोकस्यैव मितोपयोगरसिकस्यैषा पुनः खण्डना ॥६॥

सङ्कोच्य किञ्चिदिह किञ्चिदथ प्रसार्य
प्रक्षिप्य किञ्चिदिव किञ्चिदथाप्यपास्य ।
विद्वाञ्जनो भवतु संप्रति शास्त्रकृच्च
सम्यक्प्रचारणविधिः सहि जन्म तस्य ॥ ७ ॥

कल्पान्ताम्बुनिधेः प्रचण्डपवनप्रक्षोभितौर्वानल-
ज्वालाजालमिलत्तरङ्गवलनानश्यत्कुलक्ष्माभृतः ।
भूयानप्यवगाहनाय विभवेन्नत्वीश्वराभिज्ञया
निर्णीतस्य विधेर्विमर्शविधये शक्तः परः शङ्करात् ॥८॥

प्राक् पश्यन्त्यां स्फुरतु भजतां मध्यमायां विकासं
वैखर्यां च प्रकटपदवीं श्रोत्रवृत्तिः प्रयातु ।

विश्रान्ता चेदभिनवमतिस्तद्विमर्शिन्यथान्त-
स्तत्साफल्यं भजति नितरामीश्वरप्रत्यभिज्ञा ॥ ९ ॥
पाषाणान् प्रति वक्तु कः शृणुत भो युष्मान् ब्रुवे जङ्गमाः
शय्योत्थायमनर्थमर्थसरणे कोऽयं वृथैवोद्यमः ।
संविद्धामनि शाम्भवे विशथ चेत्कालीयमेकं लवं
किं किं वर्णनिकाभिराभिरभितः सत्यं स्वयं ज्ञास्यथ ॥१०॥
परिचिनुत तदेनामीश्वरप्रत्यभिज्ञां
दहत हृदि निविष्टं वासनाचक्रवालम् ।
ज्वलदनलशिखान्तर्लेलिहानारणेय-
स्थिरपरिचयभाक् किं सूतये बीजपुञ्जः ॥ ११ ॥
वाक्यप्रमाणपदतत्त्वसदागमार्थाः
स्वात्मोपयोगममुतः किल यन्ति शास्त्रात् ।
भौमान् रसाञ्जलमयांश्च न सस्यपुष्ट्यै
मुक्त्वार्कमेकमिह योजयितुं क्षमोऽन्यः ॥ १२ ॥
आत्मानमनभिज्ञाय विवेक्तुं योऽन्यदिच्छति ।
तेन भौतेन किं वाच्यं प्रश्नेऽस्मिन् को भवानिति ॥१३॥
यावानात्मावरणविधये कल्पते कोऽपि कल्प-
स्तावानात्मप्रकटनविधौ नीत एवोपयोगम् ।
येन स्पष्टं परमगुरवे तीव्रकारुण्यपूर्ण-
श्रीशर्वाणीदयितसततावेशभाजे नमोऽस्मै ॥ १४ ॥
इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे
तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।
जगति विहितबोधामीश्वरप्रत्यभिज्ञां
व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः ॥ १५ ॥

परमशिव न तादृक् क्वापि यत्तावकीन-
स्फुरितविभववन्ध्यं स्यादथान्तर्बहिर्वा ।
इति सुदृढविमर्शावेशि.............
स्तुतिररचि मयेयं संमुखं त्वां विधातुम् ॥ १६ ॥
ईश्वरप्रत्यभिज्ञा तु विमर्शादीश्वरेण.. ।
..............त्मविमर्शोद्योगिनीं क्रियात् ॥ १७ ॥

इति महामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वर-
प्रत्यभिज्ञाविवृतिविमर्शिन्यां समस्तनिगमनं
चतुर्थो विमर्शः ॥ ४ ॥

**समाप्ता च इयमीश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी ॥**
**कृतिः श्रीत्रिनयनचरणचिन्तनलब्धप्रसिद्धीना-**
**मभिनवगुप्तपादानाम् ॥**

---

